इदानीं देव्याश्चक्रचतुष्टयस्थापनक्रमः—

भक्तियुतो भुवनेशश्चतुःकलायुतं कूटमथ देव्याः।
वर्णचतुष्कनमोऽन्तं स्थाप्याः प्राच्यादिदिक्षु पद्मबहिः॥२२॥

'भक्तियुतः' ॐकारयुतः। कः? 'भुवनेशः' ह्रींकारः। 'चतुःकलायुतम्' आ ई ऊ ऐ इति चतुःकलायुतम्। किं तत्? 'कूटम्' क्षकारम्। 'अथ' अनन्तरम्। 'देव्या वर्णचतुष्कम्' पद्मावतीवर्णचतुष्टयम्। 'नमोऽन्तम्' नमः-शब्दान्तमत्र 'स्थाप्याः' स्थापनीयाः। कासु? 'प्राच्यादिदिक्षु' पूर्वादिचतुर्दिशासु। क्व? 'पद्मबहिः' अष्टदलकमलबहिःप्रदेशे।

मन्त्रोद्धारः—ॐ ह्रीँ क्षाँ प नमः इति प्राच्यां दिशि, ॐ ह्रीँ क्षीं द्मा नमः इति याम्यायाम्, ॐ ह्रीँ क्षूं व नमः इति पश्चिमायाम्, ॐ ह्रीँ क्षैं ती नमः इत्युत्तरस्यां विलिखेत्॥ २२॥

एतत् पद्मावतीदेव्या भवेच्चक्रचतुष्टयम्।
पञ्चोपचारतः पूजां नित्यमस्याः करोत्विति॥२३॥

'एतत्' कथितं, 'पद्मावतीदेव्या भवेत् चक्रचतुष्टयम्' पद्मावतीदेव्याः चक्रचतुष्टयं स्यात्। 'पञ्चोपचारतः' आह्वानादिपञ्चभेदैः, 'पूजाम्' अर्चनाम्, 'नित्यम्' सर्वकालं, 'अस्याः' पद्मावतीदेव्याः, 'इति' एवं अनेन प्रकारेण पूजां 'करोतु' कुर्यात्॥ २३॥

आह्वानं स्थापनं देव्याः सन्निधीकरणं तथा।
पूजां विसर्जनं प्राहुर्बुधाः पञ्चोपचारकम्॥२४॥

'आह्वानम्' देव्या आह्वानम्, 'स्थापनम्' देव्याः स्थापनम्, 'सन्निधीकरणम्' देव्याः सन्निधीकरणम्, 'तथा' तेन प्रकारेण, 'पूजाम्' देव्या अर्चनम्, 'विसर्जनम्' देव्या विसर्जनम्, 'बुधाः' पण्डिताः, 'पञ्चोपचारकम्' एतत्पञ्चोपचारकं, 'प्राहु' कथयन्ति॥ २४॥

ॐ ह्रीं नमोऽस्तु भगवति! पद्मावति! एहि एहि सं वौषट्।
कुर्यादमुना मन्त्रेणाह्वानमनुस्मरन् देवीम्॥२५॥

"ॐ ह्रीँ नमोऽस्तु भगवति! पद्मावति! एहि एहि सं वौषट्" इति 'अमुना मन्त्रेण' अनेन मन्त्रेण, 'अनुस्मरन्' चिन्तयन्, 'देवी' पद्मावतीं, 'आह्वानं' देव्या आह्वानं कुर्यात्॥ २५॥

तिष्ठद्वितयं ठान्तद्वयं च संयोजयेत् स्थितीकरणे।
सन्निहिता भवशब्दं मम वषडिति सन्निधीकरणे॥२६॥

'तिष्ठद्वितयं' प्राक्कथितमन्त्राग्रे तिष्ठ तिष्ठ इति पदद्वयम्, 'ठान्तद्वयम्' ठः ठः इति ठकारद्वयं च 'संयोजयेत' सम्यग् नियोजयेत्, क्व? 'स्थितीकरणे' देव्याः स्थापने। 'सन्निहिता भवशब्दं मम वषडिति' प्राक्कथितमन्त्रस्याग्रे मम सन्निहिता भव भव वषट् इति पदं योज्यम्। क्व? 'सन्निधिकरणे' देव्यर्चने उपकरणे॥२६॥

गन्धादीन् गृण्ह गृण्हेति नमः पूजाविधानके।
स्वस्थानं गच्छ गच्छेति जत्रिः स्यात् तद्विसर्जने ॥ २७॥

'गन्धादीन् गृण्ह गृण्हेति नमः' इति 'स्यात्' प्राक्कथितमन्त्रस्याग्रे योज्यम्। क्व? 'पूजनविधानके' देव्या अर्चनविधाने। 'स्वस्थानं गच्छ गच्छेति जत्रिः स्यात्' प्राक्कथितमन्त्रस्याग्रे स्वस्थानं गच्छ गच्छ जः जः जः इति त्रिवारं योजयेत्। क्व? 'तद्विसर्जने' देव्या विसर्जने ॥ २७॥

मन्त्रोद्धारः—ॐ ह्रीँ नमोऽस्तु भगवति! पद्मावति! एहि एहि सं वौषट् ॥ इति आह्वानम् ॥
ॐ ह्रीँ नमोऽस्तु भगवति! पद्मावति! तिष्ठ तिष्ठ ठः ठः ॥ इति स्थितीकरणम् ॥
ॐ ह्रीँ नमोऽस्तु भगवति! पद्मावति! मम सन्निहिता भव भव वषट् ॥ इति सन्निधीकरणम् ॥
ॐ ह्रीँ नमोऽस्तु भगवति! पद्मावति! गन्धादीन् गृह्ण गृह्ण नमः ॥ इति पूजाविधानम् ॥
ॐ ह्रीँ नमोऽस्तु भगवति! पद्मावति! स्वस्थानं गच्छ गच्छ जः जः जः ॥ इति विसर्जनम् ॥

॥ एवं पञ्चोपचारक्रमः ॥

पूरकरेचकयोगादाह्वानविसर्जनं करोतु बुधः।
पूजाभिमुखीकरण—स्थापनकर्माणि कुम्भकतः ॥ २८॥

'पूरकरेचकयोगादाह्वानविसर्जनं करोतु बुधः' पूरकयोगाद् 'बुधः' प्राज्ञः देव्या आह्वानं करोतु। रेचकयोगाद् देव्या विसर्जनं कुर्यात्। 'पूजाभिमुखीकरण—स्थापनकर्माणि कुम्भकतः' पूजासन्निधीकरणस्थापनकर्माणि कुम्भकयोगेन कुर्यात् ॥ २८ ॥

ब्रह्मादि लोकनाथं हूँकारं व्योम षान्तमदनोपेतम्।
पद्मे च पद्मकटिनि! नमोऽन्तगो मूलमन्त्रोऽयम् ॥ २९॥

'ब्रह्मादि' ॐकारादि, 'लोकनाथं' ह्रीँकारम्, 'हूँकारम्' हूँमिति बीजम्, 'व्योम' हकारः, कथम्भूतः? 'षान्तमदनोपेतः' षकारस्यान्तः सकारः मदनः क्लीँकारः ताभ्यां युतः षान्तमदनोपेतः। कथम? ह्स्क्लीँ इति। 'पद्मे'! इति पदम्, चः समुच्चये 'पद्मकटिनि!' पद्मकटिनीति पदम्, 'नमोऽन्तगः' अन्ते नमः इति पदम्। 'मूलमन्त्रोऽयम्' अयं मन्त्रः पद्मावतीदेव्या मूलमन्त्रो ज्ञातव्यः ॥ २९ ॥

मन्त्रोद्धारः—ॐ ह्रीँ हूँ ह्स्क्लीँ पद्मे! पद्मकटिनि! नमः ॥

सिध्यति पद्मादेवी त्रिलक्षजाप्येन पद्मपुष्पाणाम्।
अथवाऽरुणकरवीरकसवृन्तपुष्पप्रजाप्येन ॥ ३०॥

'सिध्यति' सिद्धा भवति, का? 'पद्मादेवी' पद्मावती देवी, केन? 'त्रिलक्षजाप्येन' लक्षत्रयजाप्येन, केषाम्? 'पद्मपुष्पाणाम्' सहस्रपत्रपुष्पाणाम्, अथवा तेषामभावे 'अरुणकरवीरकसवृन्तपुष्पप्रजाप्येन' रक्तकरवीरकवृन्तान्वितप्रसूनजाप्येन सिद्धा भवति ॥ ३० ॥

ब्रह्म माया च ह्रैंकारं व्योम क्लींकारमूर्धगम् ।
श्रीँ च पद्मे ! नमो मन्त्रं प्राहुर्विद्यां षडक्षरीम् ॥ ३१ ॥

'ब्रह्म' ॐकारः, 'माया' ह्रींकारः, 'चः' समुच्चये, 'ह्रैंकारं' ह्रैंमिति बीजम्, 'व्योम' हकारः, कथम्भूतं व्योम ? 'क्लींकारमूर्धगम्' क्लींकारोपरिस्थितम्, एवं ह्स्क्लींमिति, 'श्रीँ च' श्रीमिति बीजं च, 'पद्मे' पद्मे ! इति पदम्, 'नमः' नमः इति पदम्, 'मन्त्रं' इमं कथितं मन्त्रम्, 'विद्या षडक्षरीम्' षडक्षरीमिति विद्यां 'प्राहुः' प्रकर्षेण आहुः।

मन्त्रोद्धारः—ॐ ह्रीँ ह्रैं ह्स्क्लीँ श्रीँ पद्मे ! नमः ॥ इति षडक्षरमन्त्रः ॥ ३१ ॥

वाग्भवं चित्तनाथं च ह्रौँकारं षान्तमूर्धगम् ।
बिन्दुद्वययुतं प्राहुर्विबुधास्त्र्यक्षरीमिमाम् ॥ ३२ ॥

'वाग्भवं' ऐँकारम्, चित्तनाथं' क्लीँकारम्, 'चः' समुच्चये, 'ह्रौँकारं' ह्रौंमिति अक्षरम्, कथम्भूतम् ? 'षान्तमूर्धगम्' षकारस्यान्तः सकारः तस्य मूर्धगं सकारोपरिस्थितम्, 'बिन्दुद्वययुतम्' विसर्गसंयुतम्, एवं ह्सौः इति बीजम्, 'त्र्यक्षरीमिमाम्' इमां त्र्यक्षरीविद्यां, 'विबुधाः' प्राज्ञाः, 'प्राहुः' प्रकर्षेण आहुः ॥ ३२ ॥

मन्त्रोद्धारः—ॐ ऐँ क्लीँ ह्सौः नमः ॥ इति त्र्यक्षरमन्त्रः ॥

वर्णान्तः पार्श्वजिनो यो रेफस्तलगतः स धरणेन्द्रः ।
तुर्यस्वरः सबिन्दुः स भवेत् पद्मावतीसंज्ञः ॥ ३३ ॥

'वर्णान्तः' हकारः, स हकारः 'पार्श्वजिनः' पार्श्वजिनसंज्ञो भवति । 'यो रेफः तलगतः' यस्तलगतो रेफः 'स धरणेन्द्रः' धरणेन्द्रसंज्ञो भवति । 'तुर्यस्वरः' चतुर्थस्वरः—ईकारः, 'सबिन्दुः' अनुस्वारयुतः 'स भवेत् पद्मावतीसंज्ञः' स पद्मावतीदेवीसंज्ञो भवति । एवं ह्रीँ इत्येकाक्षरी विद्या ॥ ३३ ॥

त्रिभुवनजनमोहकरी विद्येयं प्रणवपूर्वनमनान्ता ।
एकाक्षरीति संज्ञा जपतः फलदायिनी नित्यम् ॥ ३४ ॥

'त्रिभुवनजनमोहकरी' त्रैलोक्यजनमोहकरी भवति 'विद्येयम्' इयं कथिता विद्या । कथम्भूता ? 'प्रणवपूर्वनमनान्ता' ॐकारपूर्वनमःशब्दान्ता । किंनामा ? 'एकाक्षरीतिसंज्ञा' एकाक्षरीनामधेया । 'जपतः फलदायिनी नित्यम्' सर्वकालं जाप्यं कुर्वतः फलदायिनी भवति ॥ ३४ ॥

मन्त्रः—ॐ ह्रीं नमः इत्येकाक्षरी ॥

इदानीं होमक्रम कथ्यते—

तत्त्वावृतं नाम विलिख्य पत्रे तद्धोमकुण्डे निखनेत् त्रिकोणे ।
स्मरेषुभिः पञ्चभिराभिवेष्ट्य बाह्ये पुनर्लोकपतिप्रवेष्ट्यम् ॥ ३५ ॥

---

१ कामराजं च इति ख पाठः ।



Yaksha Parshva

पार्श्वयक्षं गजमुखं उरगफणामण्डितशिरसं श्यामवर्णं कूर्मवाहनं चतुर्भुजं बीजपूरकोरगयुतदक्षिणपाणिं नकुलकाहियुतवामपाणिं चेति ।





Goddess Padmavati

पद्मावतींदेवीं कनकवर्णां कुर्कुटवाहनां चतुर्भुजां पद्मपाशान्वितदक्षिणकरां फलाङ्कुशाधिष्ठितवामकरां चेति ।

'तत्त्वावृतम्' ह्रौंकारवेष्टितम्। किं तत्? 'नाम' देवदत्तनाम। 'विलिख्य' लिखित्वा। क्व? 'पत्रे' ताम्रपत्रे। किं कृत्वा? 'स्मरेषुभिः' कामबाणैः। कतिसङ्ख्यैः? 'पञ्चभिः'। एवं द्राँ द्रीं क्लीं ब्लूँ सः एतैः। 'आऽभिवेष्ट्य' आ समन्ताद् वेष्टयित्वा। 'पुनः' पुनरपि। 'बाह्ये' नामबाह्ये। 'लोकपतिप्रवेष्टयम्' ह्रौंकारवेष्टितं कृत्वा। 'तद्धोमकुण्डे' तत् ताम्रपत्रयन्त्रं होमकुण्डमध्ये। कथंभूते? 'त्रिकोणे' त्र्यस्रे। 'निखनेत्' पूरयेत्॥

मधुरत्रिकसम्मिश्रितगुग्गुलकृतचणकमात्रवटिकानाम्।
त्रिंशत्सहस्रहोमात् सिध्यति पद्मावती देवी॥ ३६॥

'मधुरत्रिकसम्मिश्रित'—घृतदुग्धशर्करासंयुक्त—'गुग्गुलकृत'—यक्षधूपकृत—'चणकमात्रवटिकानाम्'। 'त्रिंशत्सहस्रहोमात्' त्रिंशत्सहस्रसङ्ख्यवटिकानां हवनात्। 'सिध्यति' सिद्धा भवति। का? 'पद्मावती देवी' फणिशेखरा देवी॥

मन्त्रस्यान्ते नमःशब्दं देवताराधनाविधौ।
तदन्ते होमकाले तु स्वाहाशब्दं नियोजयेत्॥ ३७॥

'मन्त्रस्यान्ते' मन्त्रपरिसमाप्तौ। 'नमःशब्दं' नमः इति वाक्यम्। क्व? 'देवताराधनाविधौ' देव्या मन्त्राराधनविधाने संयोजयेत्। 'तु' पुनः। 'तदन्ते' मन्त्राराधनान्ते। 'होमकाले' हवनसमये। 'स्वाहाशब्दं' स्वाहेतिशब्दम्। 'नियोजयेत्' संयोजयेत्॥

दशलक्षजाप्यहोमात् प्रत्यक्षो भवति पार्श्वयक्षोऽसौ।
न्यग्रोधमूलवासी श्यामाङ्गस्त्रिनयनो नूनम्॥ ३८॥

'दशलक्षजाप्यहोमात्' दशलक्षजाप्यहवनात्। 'प्रत्यक्षो भवति' साक्षात् प्रत्यक्षो भवति। कः? 'पार्श्वयक्षोऽसौ' असौ पार्श्वनामधेयो यक्षः। कथंभूतः? 'न्यग्रोधमूलवासी' वटवृक्षमूलवासी। किंविशिष्टः? 'श्यामाङ्गः'। पुनः कथंभूतः? 'त्रिनयनः' त्रिनेत्रः। 'नूनं' निश्चितम्॥ मन्त्रः—ॐ ह्रीं पार्श्वयक्ष! दिव्यरूप[1] महर्षण[2] एहि एहि ॐ क्रौं ह्रीं नमः॥ यक्षाराधनविधानमन्त्रोऽयम्॥

निजसैन्यैर्मायामयसमुच्छ्रितैर्वैरिलोकमग्रस्थम्।
विमुखीकरोति यक्षः सङ्ग्रामे निमिषमात्रेण॥ ३९॥

'निजसैन्यैः' स्वकीयसैन्यैः। कथम्भूतैः? 'मायामयसमुच्छ्रितैः' ह्रौंकारकृतप्राकारसम्यगुच्छ्रितैः। 'वैरिलोकम्' शत्रुसेनासमूहम्। कथंभूतम्? 'अग्रस्थम्' स्वकीयसैन्यपुरःस्थितम्। 'विमुखीकरोति' पराङ्मुखीकरोति। कोऽसौ? 'यक्षः' पार्श्वयक्षः। क्व? 'सङ्ग्रामे' रणाङ्गणभूमौ। कथम्? 'निमिषमात्रेण' क्षणमात्रेण॥

---

१. रूप इति ख पाठः २. दर्पण इति ख पाठः

सान्तं बिन्दूर्ध्वरेफं बहिरपि विलिखेदायताष्टाब्जपत्रं
दिक्ष्वैं श्रीं ह्रीं स्मरेशो गजवशकरणं ह्रौं तथा ब्लैं पुनर्यूँ।
बाह्ये ह्रीमों नमोऽर्हं दिशि लिखितचतुर्बीजकं होमयुक्तं
मुक्तिश्रीवल्लभोऽसौ भुवनमपि वशं जायते पूजयेद् यः ॥४०॥

'सान्तम्' सकारस्यान्तं हकारम्। कथंभूतम्? 'बिन्दूर्ध्वरेफम्' अनुस्वार–ऊर्ध्वरेफान्वितम्। एवं हँ इति बीजं विलिखेत्। 'बहिरपि' हँमक्षरबहिःप्रदेशे। 'विलिखेत्' विशेषेण लिखेत्। किम्? 'आयताष्टाब्जपत्रम्' विस्तीर्णाष्टाम्भोजपत्रम्। 'दिक्षु' तत्पत्रप्राच्यादिचतुर्दिशासु। 'ऐं श्रीं ह्रीं स्मरेशः' पूर्वदले ऐं इति, दक्षिणदले श्रीं इति, पश्चिमदले ह्रीं इति, उत्तरदले क्लीं इति एवं लिखेत्। 'गजवशकरणं ह्रौं तथा ब्लैं पुनर्यूँ' इतरविदिक्चतुर्दलेषु द्विपवशकरणं आग्नेयदले क्रौं इति, नैर्ऋत्यदले ह्रौं इति। 'तथा' तेन प्रकारेण वायव्यदले ब्लैं इति। 'पुनर्यूँ' पश्चादीशानदले यूँ इति लिखेत्। 'बाह्ये ह्रीं' तद्यन्त्रबहिः ह्रींकारेण वेष्टयेत्। 'ॐ नमोऽर्हं दिशि लिखितचतुर्बीजकम्' ॐ नमोऽर्हमिति पदं प्राच्यादिचतुर्दिशासु लिखितं ऐं श्रीं ह्रीं क्लीं इति चत्वारि बीजानि। 'होमयुक्तं' स्वाहाशब्दयुतम्। एवं ॐ नमोऽर्हं ऐं श्रीं ह्रीं क्लीं स्वाहेति मन्त्रः। 'मुक्तिश्रीवल्लभोऽसौ भुवनमपि वशं जायते पूजयेद् यः' एतच्चिन्तामणिनामयन्त्रं यः पूजयेद्, असौ पुमान् मुक्त्यङ्गनाप्रियो भवति। 'भुवनपि' लोकोऽपि। 'वशं जायते' वशीभवति॥

इत्युभयभाषाकविशेखरश्रीमल्लिषेणसूरिविरचिते
भैरवपद्मावतीकल्पे देव्याराधनविधिर्नाम
तृतीयः परिच्छेदः॥३॥

## चतुर्थो द्वादशरञ्जिकामन्त्रोद्धारपरिच्छेदः ।

द्वादशपत्राम्बुरुहं मलवरयूंकारसंयुतं कूटम् ।
तन्मध्ये नामयुतं विलिखेत् क्लींँकारसंरुद्धम् ॥ १ ॥

'द्वादशपत्राम्बुरुहं' द्वादशपत्रान्वितं पद्मम् । कथम्भूतम् ? 'मलवरयूंकारसंयुतम्' मश्च लश्च वश्च रश्च यूंकारश्च मलवरयूंकाराः तैः संयुतम् । किम् ? 'कूटम्' क्षकारम् । एवं क्ष्म्ल्व्र्यूं इति । 'तन्मध्ये नामयुतम्' क्ष्म्ल्व्र्यूंमध्ये देवदत्तनामयुतम् । 'विलिखेत्' विशेषेण लिखेत् । कथम्भूतम् ? 'क्लींकारसंरुद्धम्' तत्पिण्डोभयपार्श्वे क्लींकारनिरुद्धं लिखेत् ॥

विलिखेज्जयादिदेवीः स्वाहान्तौँकारपूर्विका दिक्षु ।
झभमहपिण्डोपेता विदिक्षु जम्भादिकास्तद्वत् ॥ २ ॥

'विलिखेज्जयादिदेवीः' जयादिचतुर्देवता विलिखेत् । क्व? 'दिक्षु' चतुर्दिशासु । 'स्वाहान्तौंकारपूर्विकाः' ॐ जये ! स्वाहा इति पूर्वदले, ॐ विजये ! स्वाहा इति दक्षिणदले, ॐ अजिते ! स्वाहा इति पश्चिमदले, ॐ अपराजिते ! स्वाहा इत्युत्तरदले विलिखेत् । 'झभमहपिण्डोपेताः' झश्च भश्च मश्च हश्च झभमहाः ते च ते पिण्डास्तैरुपेताः झभमहपिण्डोपेताः । क्व ? 'विदिक्षु' विदिशासु । काः ? 'जम्भादिकाः' जम्भादीः चतुर्देवीः । 'तद्वद्' यथापूर्वं स्वाहान्तौँकारपूर्विकाः । ॐ झ्म्ल्व्र्यूं जम्भे ! स्वाहा इत्याग्नेय्यां दिशि, ॐ भ्म्ल्व्र्यूँ मोहे ! स्वाहा इति नैर्ऋत्यदले, ॐ म्म्ल्व्र्यूं स्तम्भे ! स्वाहा इति वायव्यदले, ॐ ह्म्ल्व्र्यूँ स्तम्भिनि ! स्वाहा इति ईशानदले लिखेत् ॥

उद्धरितदलेषु ततो मकरध्वजबीजमालिखेच्चतुर्षु ।
गजवशकरणनिरुद्धं कुर्यात् त्रिर्मायया वेष्टयम् ॥३॥

'उद्धरितदलेषु ततः' तस्मादष्टपत्रलेखनानन्तरं उद्धरितदलेषु । कतिसंख्योपेतेषु ? 'चतुर्षु' चतुःसंख्येषु । 'मकरध्वजबीजमालिखेत्' क्लींकारबीजमालिखेत् । 'गजवशकरणनिरुद्धं' क्रौँकारनिरुद्धम् । 'त्रिर्मायया वेष्टयम्' पत्रबाह्ये ह्रींकारेण त्रिधा वेष्टितम् । 'कुर्यात्' करोतु ॥

भूर्ये सुरभिद्रव्यैर्विलिख्य परिवेष्टय रक्तसूत्रेण ।
निक्षिप्य सुल्वभाण्डे[1] मधुपूर्णे मोहयत्यबलाम् ॥ ४ ॥

'भूर्ये' भूर्यपत्रे । 'सुरभिद्रव्यैः' कुङ्कुमादिसुगन्धद्रव्यैः । 'विलिख्य' एतद् मन्त्रं लिखित्वा । 'परिवेष्टय रक्तसूत्रेण' रक्तसूत्रेण वेष्टयित्वा । 'निक्षिप्य' संस्थाप्य । क्व ? 'सुल्वभाण्डे' अपक्कभाण्डे । कथम्भूते ? 'मधुपूर्णे' माक्षिकपूर्णे । 'मोहयत्यबलाम्' अबला वनिता तां मोहयति ॥

अस्य मूलमन्त्रोद्धारः—

---

१. कनक इति ख पाठः

ॐ क्ष्म्ल्व्र्यूं क्लीं जये! विजये! अजिते! अपराजिते! झ्म्ल्व्र्यूं जम्भे! भ्म्ल्व्र्यूं मोहे! म्म्ल्व्र्यूं स्तम्भे! ह्ल्व्र्यूं स्तम्भिनि! क्लीं ह्रीं क्रौं वषट् ॥ मोहनविधौ क्लींरञ्जिकायन्त्रम् ॥

स्त्रीकपाले लिखेद् यन्त्रं क्लींस्थाने भुवनाधिपम्।
त्रिसन्ध्यं तापयेद् रामाकृष्टिः स्यात् खदिराग्निना ॥ ५ ॥

'स्त्रीकपाले' वनिताकपाले। 'लिखेद् यन्त्रं' प्राक्कथितयन्त्रं लिखेत्। 'क्लींस्थाने' क्लींकारस्थाने। कम्? 'भुवनाधिपम्' ह्रींकारं लिखेत्। 'त्रिसन्ध्यम्' त्रिकालम्। 'तापयेत्' तापनं कुर्यात्। 'रामाकृष्टिः स्यात्' वनिताकर्षणं भवेत्। केन? 'खदिराग्निना' खदिरकाष्ठाग्निना। स्त्र्याकर्षणे ह्रींरञ्जिकायन्त्रम् ॥

मायास्थाने च हुंकारं विलिखेन्नरचर्मणि।
तापयेत् क्ष्वेडरक्ताभ्यां पक्षाहात् प्रतिषेधकृत् ॥ ६ ॥

'मायास्थाने'। ह्रींकारस्थाने। 'चः' समुच्चये। कम्? 'हुंकारम्' हुं इति बीजम्। 'विलिखेत्' लिखेत्। क्व? 'नरचर्मणि' मनुष्यचर्मणि लिखेत्। काभ्याम्? 'क्ष्वेडरक्ताभ्याम्' विषगर्दभरुधिराभ्याम्। 'तापयेत्' पूर्ववत् तापयेत्। 'पक्षाहात्' पक्षमध्ये। 'प्रतिषेधकृत्' प्रतिषेधकारि भवति ॥ प्रतिषेधकर्मणि हुंरञ्जिकायन्त्रम् ॥

हुंस्थाने मान्तमालिख्य सरेफं नामसंयुतम्।
बिभीतफलके यन्त्रं द्वयोरपि च मर्त्ययोः ॥ ७ ॥

'हुंस्थाने' प्राङ्निषिद्धकर्मणि लिखितहुंकारस्थाने। 'मान्तं' यकारम्। 'आलिख्य' लेखयित्वा। कथम्भूतम्। 'सरेफम्' ऊर्ध्वरेफान्वितम्। 'नामसंयुतम्' नामयुक्तम्। कयोः? 'द्वयोरपि च मर्त्ययोः' अपि निश्चयेन। क्व? 'बिभीतफलके' कलितरुफलके। 'यन्त्रं' एतद् यन्त्रं लेखनीयम् ॥

वाजिमाहिषकेशैश्च विपरीतमुखस्थयोः।
आवेष्ट्य स्थापयेद् भूम्यां विद्वेषं कुरुते तयोः ॥ ८ ॥

'वाजिमाहिषकेशैश्च' अश्वमहिषकेशैः। चः समुच्चये। 'आवेष्ट्य' केशैः आ समन्ताद् वेष्टयित्वा। 'विपरीतमुखस्थयोः' अधोमुखस्थयोः। 'स्थापयेत्' निक्षिपेत्। क्व? 'भूम्याम्' प्रेतवनभूम्याम्। 'विद्वेषं कुरुते तयोः' द्वयोर्मर्त्ययोः विद्वेषणं करोति ॥ विद्वेषणकर्मणि यंरञ्जिकायन्त्रम् ॥

पूर्वोक्ताक्षरसंस्थाने लेखिन्या काकपक्षया।
मान्तं विसर्गसंयुक्तं प्रेताङ्गारविषारुणैः ॥ ९ ॥
घूकारिविष्ठासंयुक्तैः ध्वजयन्त्रं सनामकम्।
लिखित्वोपरि वृक्षाणां बद्धमुच्चाटनं रिपोः ॥ १० ॥

'पूर्वोक्ताक्षरसंस्थाने' विद्वेषकर्मलिखित–यें–इत्यक्षरस्थाने। 'मान्तं' यकारम्। कथम्भूतम्? 'विसर्गसंयुक्तम्' बिन्दुद्वययुतं लिखेत्। कया? 'काकपक्षया लेखिन्या' काकपक्षजनितलेखिन्या। कैः? 'प्रेताङ्गारविषारुणैः' स्मशानाङ्गारविषकाकरक्तैः। कथम्भूतैः? 'घूकारिविष्ठासंयुक्तैः' घूकारिः काकः, तस्य विष्ठा घूकारिविष्ठा तया संयुक्तैः। 'ध्वजयन्त्रं' सूतीकर्पटं ध्वजयन्त्रं एतदुच्चाटनयन्त्रम्। कथम्भूतम्? 'सनामकम्' देवदत्तनामान्वितम्। 'लिखित्वा' विलिख्य। 'उपरि' अग्रे। केषाम्? 'वृक्षाणां' कलितरूणाम्। 'बद्धं' निबद्धम्। 'रिपोः' शत्रोः। 'उच्चाटनं' उच्चाटनं स्यात्॥ उच्चाटनकर्मकरणे यः–रंजिकायन्त्रम्॥

शृङ्गीगरलरक्ताभ्यां नृकपालपुटे लिखेत्।
प्रेतास्थिजातलेखिन्या यःस्थाने तु नभोऽक्षरम्॥ ११॥

'शृङ्गीगरलरक्ताभ्यां' शृङ्गीविषरासभरक्ताभ्याम्। 'नृकपालपुटे लिखेत्' मनुष्यकपालसम्पुटे लिखेत्। कया? 'प्रेतास्थिजातलेखिन्या' शबास्थिजनितलेखिन्या। 'यःस्थाने' पूर्वलिखितफड्यकारस्थाने। 'तु' पुनः। किम्? 'नभोऽक्षरम्' हकारं लिखेत्॥

स्मशाने निखनेद्[1] रोषात् कृत्वा तद् भस्मपूरितम्।
करोति तत्कुलोच्चाटं वैरिणां सप्तरात्रतः॥ १२॥

'स्मशाने' प्रेतवने। 'निक्षिपेत्' स्थापयेत्। कथम्? 'रोषात्'। 'कृत्वा तद् भस्मपूरितं' तत् कपालसम्पुटं स्मशानभस्मपूरितं कृत्वा। 'तद्'। 'वैरिणां' शत्रूणाम्। 'कुलोच्चाटं करोति' कुलोच्चाटनं करोति। कथम्? 'सप्तरात्रतः'॥ उच्चाटनकर्मणि हरञ्जिकायन्त्रम्॥

फडक्षरं नभःस्थाने स्मशानस्थितकर्पटे।
निम्बार्कजरसेनैतद् विलिखेत् क्रुद्धचेतसा॥ १३॥

'फडक्षरं' फडित्यक्षरम्। 'नभःस्थाने' प्राग्लिखितफड्हकारस्थाने। 'स्मशानस्थितकर्पटे' स्मशानगृहीतवसने। 'निम्बार्कजरसेन' निम्बरविरसेन। 'एतत्' फडक्षरान्वितं यन्त्रं 'विलिखेत्' लिखेत्। कथम्? 'क्रुद्धचेतसा' क्रुद्धभावेन॥

स्मशाने निक्षिपेद् यन्त्रं यावत् तद् भुवि तिष्ठति।
परिभ्राम्यत्यसौ तावद् वैरी काक इव क्षितौ॥ १४॥

'स्मशाने' स्मशानभूमौ। 'निक्षिपेत्'। किम्? 'यन्त्रम्'। 'यावत् तद् भुवि तिष्ठति' यावत्कालं तद् यन्त्रं भूम्यां तिष्ठति। 'परिभ्राम्यत्यसौ तावद् वैरी काक इव' असौ वैरी तावत्कालं काक इव भ्रमणं करोति। क्व? 'क्षितौ' पृथिव्याम्॥ उच्चाटनकर्मकरणे फड्रञ्जिकायन्त्रम्॥

फटस्थाने लिखेद् भान्तं भूर्ये तन्नामसंयुतम्।
विषोपयुक्तरक्तेन नीलसूत्रेण वेष्टितम्॥ १५॥

---

१ निक्षिपेद्रोषात् इति ख पाठः

'फटस्थाने' प्रागिलिखितफडक्षरस्थाने । 'लिखेत्' विलिखेत् । 'मान्तं' मकारम् । 'भूर्ये' भूर्यपत्रे । कथम् ? 'तन्नामसंयुतम्' देवदत्तनामान्वितम् । केन ? 'विषोपयुक्तरक्तेन' शृङ्गीविषान्वितखररक्तेन । पुनः कथम्भूतम् ? 'नीलसूत्रेण वेष्टितम्' ॥

मृत्पुत्रिकोदरे स्थाप्यं तच्च श्मशाने निवेशयेत् ।
सप्ताहाज्जायते शत्रोश्छेदभेदादिनिग्रहः ॥ १६ ॥

'मृत्पुत्रिकोदरे स्थाप्यं' एतद् यन्त्रं श्मशानदग्धमृत्तिकाकृतपुत्तलिकोदरमध्ये स्थाप्यम् । स्थापयित्वा 'तच्चश्मशाने निवेशयेत्' तद् मृत्पुत्रिकोदरे स्थापितयन्त्रं प्रेतवने स्थापयेत् । 'सप्ताहात्' सप्तदिनमध्ये । 'जायते' भवेत् । किं भवेत् ? 'छेदभेदादिनिग्रहः' छेदनभेदनादिनिग्रहणं भवेत् । कस्य ? 'शत्रोः' रिपोः ॥ रिपुच्छेदन-भेदननिग्रहकरणे मरञ्जिकायन्त्रम् ॥

तुर्यस्वरं लिखेद् विद्वान् मस्थाने नामसंयुतम् ।
कुङ्कुमागरुकर्पूरैर्भूर्ये रोचनयाऽन्वितैः ॥ १७ ॥

'तुर्यस्वरं' चतुर्थस्वरं ईकारम् । 'लिखेत्' विलिखेत् । क्व ? 'मस्थाने' फण्मकारस्थाने । कोऽसौ ? 'विद्वान्' । कथम् ? 'नामसंयुतम्' देवदत्तनामान्वितम् । कैः कृत्वा ? 'कुङ्कुमागरुकर्पूरैः' काश्मीरागरुचन्दनैः । कथम्भूतैः ? 'रोचनयाऽन्वितैः' गोरोचनायुक्तैः, क्व ? 'भूर्ये' भूर्यपत्रे ॥

सुवर्णमठितं कृत्वा बाहौ वा धारयेद् गले ।
करोतीदं सदा यन्त्रं तरुणीजनमोहनम् ॥ १८ ॥

'सुवर्णमठितं कृत्वा' सुवर्णेन वेष्टितं कृत्वा । 'बाहौ वा' दक्षिणभुजे वा । 'धारयेद् गले' कण्ठे वा धारयेत् । 'करोतीदं' एतत् करोति । 'सदा' सर्वकालम् । 'यन्त्रं' एतत्कथितयन्त्रम् । 'तरुणीजनमोहनम्' अबलाजनमोहकारि भवति ॥ वश्यकर्मकरणे ईरञ्जिकायन्त्रम् ॥

वषड्वर्णयुतं कूटं लिखेदीकारधामनि ।
भूर्यपत्रे सितेऽत्यन्ते रोचनाकुङ्कुमादिभिः ॥ १९ ॥

'वषड्वर्णयुतं' वषडित्यक्षरान्वितम् । कम् ? 'कूटम्' क्षकारं 'लिखेत्' । कस्मिन् स्थाने ? 'ईकारधामनि' फडीकारस्थाने । क्व ? 'भूर्यपत्रे' । कथम्भूते ? 'सितेऽत्यन्ते' अत्यन्तशुभ्रे । कैः ? 'रोचनाकुङ्कुमादिभिः' गोरोचनाकाश्मीरादिभिः ॥

त्रिलोहवेष्टितं कृत्वा बाहौ कण्ठे च धारयेत् ।
स्त्रीसौभाग्यकरं यन्त्रं स्त्रीणां चेतोऽभिरञ्जकम् ॥ २० ॥

'त्रिलोहवेष्टितं कृत्वा बाहौ कण्ठे च धारयेत्' ताम्रतारसुवर्णं त्रिलोहम्, तत्र ताम्रं द्वादशभागं, तारं षोडशभागं, सुवर्णं त्रिभागं, एवं त्रिलोहभागप्रमाणेन तद्यन्त्रवेष्टनं 'कृत्वा' कारयित्वा 'बाहौ कण्ठे च' दक्षिणभुजे ग्रीवायां च 'धारयेत्' ध्रियते। 'स्त्रीसौभाग्यकरं यन्त्रं' एतद् यन्त्रं दुर्भगस्त्रीणां सौभाग्यकरं भवति। 'स्त्रीणां चेतोऽभिरञ्जकम्' स्त्रीणां मनोऽभिरञ्जनं भवति ॥ स्त्रीणां सौभाग्यकरणे क्षवषड्रञ्जिकायन्त्रम् ॥

क्षाद्यक्षरपदे योज्यं लं शिलातलसम्पुटे।
विलिख्योर्वीपुरं बाह्ये स्तम्भने तालकादिभिः ॥ २१ ॥

'क्षाद्यक्षरपदे' क्षकारादिवषडक्षरफट्स्थाने। 'योज्यम्' योजनीयम्। किम्? 'लं' लकारम्। क्व? 'शिलातलसम्पुटे'। 'विलिख्य' लिखित्वा। किम्? 'उर्वीपुरं' पृथ्वीपुरम्। क्व? 'बाह्ये' त्रिमूर्तिवेष्टनबहिःप्रदेशे। कस्मिन् विषये? 'स्तम्भने' क्रोधादिस्तम्भनकरणे। कैः? 'तालकादिभिः' हरितालादिपीतद्रव्यैः ॥ क्रोधादिस्तम्भनकरणे लरञ्जिकायन्त्रम् ॥ इति द्वादशरञ्जिकोद्धारक्रमः ॥

इत्युभयभाषाकविशेखरश्रीमल्लिषेणसूरिविरचिते
भैरवपद्मावतीकल्पे द्वादशरञ्जिकायन्त्रो-
द्धाराधिकारश्चतुर्थः परिच्छेदः ॥ ४ ॥

# अथ पञ्चमः क्रोधादिस्तम्भनयन्त्रपरिच्छेदः ५ ।

---

क्षमठसहपलववर्णान् मलवरयूंकारसंयुतान् विलिखेत् ।
अष्टदलेषु क्रमशो नाम ग्लौं कर्णिकामध्ये ॥१॥

'क्षमटसहपलववर्णान् मलवरयूंकारसंयुतान् विलिखेत् अष्टदलेषु' क्षश्च मश्च ठश्च सश्च हश्च पश्च लश्च वश्च क्षमठसहपलवाः ते च ते वर्णाश्च तान् क्षमठसहपलववर्णान्। कथम्भूतान् ? 'मलवरयूंकारसंयुतान्' मश्च लश्च वश्च रश्च यूंकारश्च मलवरयूंकाराः तैः संयुतान् मलवरयूंकारसंयुतान् इति क्ष्म्ल्व्र्यूँ म्म्ल्व्र्यूँ ठ्म्ल्व्र्यूँ स्म्ल्व्र्यूँ ह्म्ल्व्र्यूँ प्म्ल्व्र्यूँ ल्म्ल्व्र्यूँ व्म्ल्व्र्यूँ इत्यष्टदलेषु। कथम् ? 'क्रमशः' प्राच्यादिदिशां क्रमपरिपाटया। 'नाम ग्लौं कर्णिकामध्ये' तदष्टदलान्तःस्थितकर्णिकामध्ये देवदत्तनामान्वितं ग्लौंकारं लिखेत् ॥

मन्त्राभ्यामावेष्टय बाह्ये भूमण्डलेन संवेष्टय ।
कुङ्कुमहरितालाद्यैर्विलिखेदात्मेप्सितस्तम्भः ॥ २ ॥

'मन्त्राभ्याम्' द्वाभ्यां मन्त्राभ्याम्। 'आवेष्टय' वेष्टयित्वा। 'बाह्ये' मन्त्रबहिःप्रदेशे। 'भूमण्डलेन संवेष्टय' पृथ्वीमण्डलेन सम्यगावेष्टय लिखेत्। कैः ? 'कुङ्कुमहरितालाद्यैः' काश्मीरहरितालादिपीतद्रव्यैः। 'विलिखेत्' विशेषेण लिखेत्। मन्त्रद्वयम्—

अग्निस्तम्भिनि! पञ्चदिव्योत्तरणि! श्रेयस्करि! ज्वल ज्वल प्रज्वल प्रज्वल सर्वकामार्थसाधिनि! स्वाहा ॥

ॐ अनलपिङ्गलोर्ध्वकेशिनि! महादिव्याधिपतये स्वाहा। ॥ अग्निस्तम्भनयन्त्रम् ॥

त्रींकारं चिन्तयेद् वक्त्रे विवादे प्रतिवादिनाम् ।
त्रां वा रेफं ज्वलन्तं वा स्वेष्टसिद्धिप्रदायकम् ॥ ३ ॥

'त्रींकारं चिन्तयेत्' त्रीमित्यक्षरं चिन्तयेत्। क्व ? 'वक्त्रे'। कस्मिन् विषये ? 'विवादे' व्यवहारादिविषये। केषाम् ? 'प्रतिवादिनाम्' स्वप्रतिपक्षवादिनाम्। न केवलं त्रींकारम्, 'त्रां वा' त्रामित्यक्षरं वा चिन्तयेत्। 'रेफं ज्वलन्तं वा' रकारं जाज्वल्यमानं वा चिन्तयेत्। 'स्वेष्टसिद्धिप्रदायकम्' स्वकीयेप्सितसिद्धिप्रदायकं भवति॥

नाम ग्लौं खान्तपिण्डं वसुदलसहिताम्भोजपत्रे लिखित्वा
तत्पिण्डान्तेषु योज्यं बहिरपि वलयं दिव्यमन्त्रेण कुर्यात्।
टान्तं भूमण्डलान्तं विपुलतरशिलासम्पुटे कुङ्कुमाद्यै-
र्धार्यं श्रीवीरनाथक्रमयुगपुरतो वह्निदिव्योपशान्त्यै ॥ ४ ॥

'नाम' देवदत्तनाम। 'ग्लौं' देवदत्तनामोपरि ग्लौंकारम्। 'खान्तपिण्डं' खकारस्यान्तो गकारः स चासौ पिण्डश्च खान्तपिण्डः ग्म्ल्व्र्यूं इति पिण्डः तम्। 'वसुदलसहिताम्भोजपत्रे विलिख्य' अष्टदलान्वितपद्मपत्रे विशेषेण लिखित्वा। 'तत्पिण्डं' तत्कर्णिकालिखितग्म्ल्व्र्यूं इतिपिण्डम्। 'तेषु' अष्टपत्रेषु। 'योज्यम्' योजनीयम्। 'बहिरपि' तदष्टदलकमलबहिःप्रदेशे। 'वलयम्'। केन? 'दिव्यमन्त्रेण' विशिष्टमन्त्रेण। 'कुर्यात्' करोतु। 'टान्तं' ठकारम्। कथम्भूतम्? 'भूमण्डलान्तं' पृथ्वीमण्डलान्तःस्थितम्। दिव्यमन्त्रवलयबहिःप्रदेशे ठकारेणावेष्ट्य तद्बहिः पृथ्वीमण्डलं लिखेत् इत्यभिप्रायः। क्व? 'विपुलतरशिलासम्पुटे' विस्तीर्णपाषाणसम्पुटे कैः? 'कुङ्कुमाद्यैः' काश्मीरादिपीतद्रव्यैः। 'धार्यं' धारणीयम्। क्व? 'श्रीवीरनाथक्रमयुगपुरतः' श्रीवर्द्धमानस्वामिचरणयुगलाग्रतः। किमर्थम्? 'वह्निदिव्योपशान्त्यै' अनलदिव्योपशान्त्यर्थम्।

वलयमन्त्रोद्धारः
ॐ थम्भेइ जलज्जलणं चिंतियमित्तेण पंचणमयारो।
अरिमारिचोरराउलघोरुवसग्गं विणासेइ[1] ॥ स्वाहा[2] ॥
प्राकृतमन्त्रोऽयम्। इदमग्निस्तम्भनयन्त्रम् ॥

दिव्येषु जलतुलाफणिखगेषु पवहक्षपिण्डमाविलिखेत्।
पूर्वोक्ताष्टदलेष्वपि पूर्ववदन्यत् पुनः सर्वम् ॥५॥

'दिव्येषु' चतुर्षु दिव्येषु। कथम्भूतेषु? 'जलतुलाफणिखगेषु' जलदिव्ये तुलादिव्ये घटसर्पदिव्ये पक्षिदिव्ये, एतेषु चतुर्षु दिव्येषु। 'पवहक्षपिण्डं' जलदिव्ये प्म्ल्व्र्यूं इतिपिण्डम्, तुलादिव्ये व्म्ल्व्र्यूं इतिपिण्डम्, फणिदिव्ये ह्म्ल्व्र्यूं इतिपिण्डम्, पक्षिदिव्ये क्ष्म्ल्व्र्यूं इति पिण्डम्। 'आविलिखेत्' समन्ताद्विलिखेत्। केषु? 'पूर्वोक्ताष्टदलेषु' प्राग्विलिखिताष्टदलेषु। कथितचतुर्दिव्येषु पवहक्षपिण्डाः क्रमेण लेखनीयाः। अपिशब्दाद् मध्येऽपि च। 'पूर्ववदन्यत् पुनः सर्वं' अन्यत् पुनः यन्त्रोद्धारं प्राग्लिखितं यथा तथैव सर्वम् ॥

ब्रह्मग्लौंकारपुटं टान्तावृतमष्टवज्रसंरुद्धम्।
वामं वज्राग्रगतं तदन्तरे रान्तबीजं च ॥६॥

'ब्रह्म' ॐकारसम्पुटम्, ग्लौंकारसम्पुटम् इति बीजद्वयम्। कथम्भूतम्? 'टान्तावृतम्' ठकारावृतम्। पुनः कथम्भूतम्? 'अष्टवज्रसंरुद्धम्' वज्राष्टकैः सम्यग रुद्धम्। 'वामं वज्राग्रगतम्' ॐकारो वज्राणां अग्रे स्थितः। 'तदन्तरे' तद्वज्राग्रान्तराले 'रान्तबीजं च' रकारस्यान्तो लकारः स एव बीजं रान्तबीजं लं इति। 'च' समुच्चये ॥

वार्तालीमन्त्रवृतं बाह्येऽष्टसु दिक्षु विन्यसेत् क्रमशः।
मलवरयूंकारयुतान् क्षमठसहपरान्तलान्तांश्च ॥७॥

---

१ ह्रां ह्रीं ह्रूं ह्रौं ह्रः पणासेउ इति ख पाठः २ ठः ठः ठः

'वार्तालीमन्त्रवृतं' वज्राणां बहिःप्रदेशे वार्तालीमन्त्रेण वेष्टितम्। 'बाह्ये' मन्त्रावेष्टनबहिःप्रदेशे। 'अष्टसु दिक्षु' अष्टासु दिशासु। 'विन्यसेत्' विशेषेण स्थापयेत्। कथम्? 'क्रमशः' क्रम परिपाट्या। 'मलवरयूंकारयुतान्' मश्च लश्च वश्च रश्च यूंकारश्च मलवरयूंकाराः तैर्युताः मलवरयूंकारयुताः तान् मलवरयूंकारयुतान्। 'क्षमठसहपरान्तलान्तान्' क्षश्च मश्च ठश्च सश्च हश्च पश्च लश्च वश्च, 'रान्तो' रकारस्यान्तो लकारः लश्च, 'लान्तो' लकारस्यान्तो वकारः वश्च, क्षमठसहपरान्तलान्ताः तान्। एवं क्ष्म्ल्व्र्यूँ म्म्ल्व्र्यूँ ठ्म्ल्व्र्यूँ स्म्ल्व्र्यूँ ह्म्ल्व्र्यूँ प्म्ल्व्र्यूँ ल्म्ल्व्र्यूँ व्म्ल्व्र्यूँ एतानष्ट पिण्डान्। वार्तालीमन्त्रोद्धारः—

ॐ वार्तालि! वराहि! वराहमुखि! जम्भे! जम्भिनि! स्तम्भे! स्तम्भिनि! अन्धे! अन्धिनि! रुन्धे! रुन्धिनि! सर्वदुष्टप्रदुष्टानां क्रोधं लिलि मतिं लिलि गतिं लिलि[१] जिह्वां लिलि ॐ[२] ठः ठः ठः। अयं वार्तालीमन्त्रः॥

बाह्येऽमरपुरपरिवृतमङ्कुशरुद्धं करोतु तद् द्वारम्।
उक्षेशमन्त्रवेष्ट्यं पृथ्वीपुरसम्पुटं बाह्ये॥८॥

'बाह्ये' तत्पिण्डाष्टकबहिःप्रदेशे। 'अमरपुरपरिवृतम्' इन्द्रपुरेण समन्तादावृतम्। 'अङ्कुशरुद्धं करोतु तद्-द्वारम्' तद् इन्द्रपुरं चतुर्द्वारोभयपार्श्वे अङ्कुशः क्रौंकारः तेन रुद्धं कुर्यात्। 'उक्षेशमन्त्रवेष्ट्यम्' तत्पुरबहिःप्रदेशे उक्षा ऋषभस्तस्य ईशः स्वामी श्रीऋषभनाथः तस्य मन्त्रः तेन उक्षेशमन्त्रेणावेष्ट्यम्। 'पृथ्वीपुरसम्पुटं बाह्ये'। उक्षेशमन्त्रवलयबाह्ये पृथ्वीमण्डलसंपुटं कुर्यात्। उक्षेशमन्त्रोद्धारः—

ॐ नमो [३]भयवदो रिसहस्स तस्स पडिनिमित्तेण [४]चरणपणति इंदेण भणामइ यमेण [५]उग्घाडिया जीहा कंठोट्ठमुहतालुया खीलिया जो मं[६]भसइ जो मं हसइ दुट्ठदिट्ठीए वज्जसंखिलाए देवदत्तस्स मणं हियियं कोहं जीहा खीलिया सेलखिलाए ल ल ल ल[७] ठ ठ ठ ठ॥ उक्षेशमन्त्रोऽयं, प्राकृतमन्त्रः॥

कोणेष्वष्टसु विलिखेद् वार्तालीमन्त्रभणितजम्भादीन्।
ठद्वितयं धरणीपुरमीदृशमिदमालिखेत् प्राज्ञः॥९॥

'कोणेष्वष्टसु' उक्षेशमन्त्रवलयबहिरष्टसु दिशासु। 'विलिखेत्' विशेषेण लिखेत्। कान्? 'वार्तालीमन्त्रभणित-जम्भादीन्' वार्तालीमन्त्राभ्यन्तरे कथितजम्भाद्यष्टदेवताः। 'ॐ जम्भे! स्वाहा, ॐ जम्भिनि! स्वाहा, ॐ स्तम्भे! स्वाहा, ॐ स्तम्भिनि! स्वाहा, ॐ अन्धे! स्वाहा, ॐ अन्धिनि! स्वाहा, ॐ रुन्धे! स्वाहा, ॐ रुन्धिनि! स्वाहा, इत्यष्ट देवताः प्राच्याद्यष्टदिशासु क्रमेण स्थाप्याः। 'ठद्वितयं' जम्भादिदेवीबहिःप्रदेशे ठकारद्वितयम्। 'धरणीपुरम्' ठकारबहिःप्रदेशे पृथ्वीमण्डलम्। 'ईदृशं' अनेन कथितप्रकारेण। 'इदं' एतद्वार्ताल्यभिधानं यन्त्रम्। 'आलिखेत्' समन्ताद् लिखेत्। कः? 'प्राज्ञः' विद्वान्॥

फलके शिलातले वा हरितालमनःशिलादिभिर्लिखितम्।
कोपगतिसैन्यजिह्वास्तम्भं विदधाति विधियुक्तम्॥१०॥

---

१ गतिं लिलि इति ख पाठः। २ ठः ठः ठः ठः ठः क्रों ह्रीं नमः स्वाहा इति ख पाठः।
३ भगवतो इति खः पाठः। ४ पणत्ति इति ख पाठः। ५ उप्पाडिया इति ख पाठः। ६ हसइ जो बाचाहेइ इति ख पाठः। ७ बंध बंद ठः ठः ठः क्रों ह्रीं नमः इति ख पाठः।

'फलके' काष्ठकृतफलके। 'शिलातले वा' अथवा पाषाणपट्टे वा। 'हरितालमनःशिलादिभिः' हरितालमनःशिलादिपीतद्रव्यैः। 'लिखितं' लिखितं सत्। किं करोति? 'कोपगतिसैन्यजिह्वास्तम्भं' कोपस्तम्भं गतिस्तम्भं सैन्यस्तम्भं जिह्वास्तम्भम्। 'विदधाति' विशेषेण करोति। कथम्? 'विधियुक्तम्' यथाविधानयुक्ते सति॥

॥ वार्तालीयन्त्रोद्धारः समाप्तः॥

नाम ग्लौमुर्वीपुरं वं पं ग्लौंकारवेष्टितं कृत्वा।
ह्रींकारचतुर्वलयं स्वनामयुक्तं ततो लेख्यम्॥११॥

'नाम' देवदत्तनाम। 'ग्लौं' तन्नामोपरि ग्लौंकारम्। 'उर्वीपुरं' तदुपरि पृथ्वीमण्डलम्। 'वं पं ग्लौंकारवेष्टितं कृत्वा' उर्वीपुरबहिःप्रदेशे 'वं' वंकारं, तस्योपरि 'पं' पंकारं, पंकारोपरि ग्लौंकारं, एतैरक्षरत्रयैर्वेष्टनं कारयित्वा। ह्रींकारचतुर्वलयम्। कथम्भूतम्? 'स्वनामयुक्तम्' तद् ह्रींकारं स्वकीयनामान्वितम्। 'ततः' तस्मात् ह्रींकारात्। 'लेख्यं' लेखनीयम्॥

ॐ उच्छिष्टपदस्याग्रे स्वच्छन्दपदमालिखेत्।
ततश्चाण्डालिनि! स्वाहा टान्तयुग्मकवेष्टितम्॥१२॥

'ॐ' ॐ इत्यक्षरम्। 'उच्छिष्टपदस्य' उच्छिष्टेतिपदं तस्य। 'अग्रे' उच्छिष्टपदस्याग्रे। 'स्वच्छन्दपदं' स्वच्छन्देतिपदम्। 'आलिखेत्' समन्तात् लिखेत्। 'ततः चाण्डालिनि! स्वाहा' ततः स्वच्छन्दपदाच् चाण्डालिनि! स्वाहा इति। एवं मन्त्रोद्धारः—ॐ उच्छिष्ट स्वच्छन्द चाण्डालिनि! स्वाहा॥ इति मन्त्रविन्यासः॥ 'टान्तयुग्मकवेष्टितम्' ठकारद्वयेन वेष्टितम्॥

पृथ्वीवलयं दत्त्वा पुरोक्तमन्त्रेण वेष्टयेद् बाह्ये।
रजनीहरितालाद्यैर्भूर्ये विधिनाऽन्वितो विलिखेत्॥१३॥

'पृथ्वीवलयं दत्त्वा' टान्तयुग्मबाह्ये पृथ्वीमण्डलं दत्त्वा। 'पुरोक्तमन्त्रेण' पूर्वोक्त 'ॐ उच्छिष्ट' इत्यादिमन्त्रेण। 'वेष्टयेत्' वेष्टनं कुर्यात्। बाह्ये' पृथ्वीमण्डलबहिःप्रदेशे। 'रजनीहरितालाद्यैः' हरितालहरिद्रागोदन्तादिपीतद्रव्यैः। क? 'भूर्ये' भूर्यपत्रे। 'विधिना' यथाविधानेन। 'अन्वितः' युक्तः। 'विलिखेत्' विशेषेण लिखेत्॥

तत्कुलालकरमृत्तिकावृतं तोयपूरितघटे विनिक्षिपेत्।
पार्श्वनाथमुपरिस्थमर्चयेद् दिव्यरोधनविधानमुत्तमम्॥१४॥

'तत्' तद् यन्त्रम्। 'कुलालकरमृत्तिकावृतम्' कुम्भकारकराग्रमृदा वेष्टितम्। 'तोयपूरितघटे' जलपरिपूर्णनवघटे। 'विनिक्षिपेत्' निदध्यात्। 'श्रीपार्श्वनाथं' श्रीपार्श्वभट्टारकम्। कथम्भूतम्? 'उपरिस्थं' तत्कुम्भस्योपरि स्थितम्। 'अर्चयेत' पूजयेत्। 'दिव्यरोधनविधानम्' दिव्यस्तम्भकरणम्। 'उत्तमं' श्रेष्ठम्। दिव्यस्तम्भनयन्त्रमिदम्॥

रिपुनामान्वितमान्तं मलवरयूंकारसंयुतं टान्तम्।
तद्बाह्ये भूमिपुरं त्रिशूलभूतोग्रमृगवेष्टयम्॥१५॥

'रिपुनामान्वितमान्तम्' शत्रोर्नामयुक्तं 'मान्तम्' यकारम्। 'मलवरयूंकारसंयुतं' मश्च लश्च वश्च रश्च यूंकारश्च मलवरयूंकाराः तैः संयुतम्। कम्? 'टान्तम्' ठकारम्। एवं ठम्ल्व्र्यूँ इति बीजं, यकारबहिःप्रदेशे। 'तद्बाह्ये भूमिपुरं' तत्पिण्डबाह्ये पृथ्वीमण्डलम्। 'त्रिशूलभूतोग्रमृगवेष्टयम्' तत्पृथ्वीमण्डलबाह्ये त्रिशूलानेकभूतक्रूरमृगजातैः 'वेष्टयं' परिवृतम्॥

प्रतिरूपहस्तखड्गैर्निहन्यमानारिरूपपरिवेष्टयम्।
शत्रोर्नामान्तरितं समन्ततो वेष्टयेत् पिण्डैः॥१६॥

'प्रतिरूपहस्तखड्गैः' प्रतिशत्रुहस्तकृपाणैः। 'निहन्यमानारिरूपपरिवेष्टयं' निहन्यमानैः निःशेषेण हन्यमानैः 'अरिरूपैः' प्रतिशत्रुरूपैः परिवेष्टयम्। 'शत्रोर्नामान्तरितं' वैरिनामान्तरितम्। 'समन्ततः' शत्रुप्रतिशत्रुनाम्नोर्बाह्ये परितः। 'वेष्टयेत्' वेष्टनं कुर्यात्। कैः? 'पिण्डैः' नामान्तरितठकारपिण्डैः॥

प्रतिरिपुवाजिमहागजनामान्तरितं समन्ततो मन्त्रम्।
विलिखेदोंहूँह्रीँक्लैँग्लौँ स्वाहा टान्तयुग्मान्तम्॥१७॥

'प्रतिरिपु' प्रतिशत्रुः तस्य 'वाजिमहागजनामान्तरितं' पट्टाश्वगजनामान्तरितम्। 'समन्ततः' नामान्तरितठपिण्डबाह्ये परिसमन्तात्। 'मन्त्रं' मन्त्रवलयम्। 'विलिखेत्' विशेषेण लिखेत्।

मन्त्रोद्धारः—ॐ हूँ ह्रीँ क्लैँ ग्लौँ स्वाहा ठ ठ देवदत्तस्य पट्टाश्वे, ॐ हूँ ह्रीँ क्लैँ ग्लौँ स्वाहा ठ ठ देवदत्तस्य पट्टगजे ॐ हूँ ह्रीँ इत्यादि मन्त्रेण समन्ततो वेष्टयेत्।

वेष्टनमन्त्रोद्धारः कथ्यते—ॐ ह्रीं भैरवरूपधारिणि! चण्डशूलिनि! प्रतिपक्षसैन्यं चूर्णय चूर्णय घूर्मय घूर्मय भेदय भेदय ग्रस ग्रस पच पच खादय खादय मारय मारय हुँ फट् स्वाहा॥

मन्त्रेण वेष्टयित्वाऽनेन ततोऽरातिविग्रहो लेख्यः।
अष्टासु दिक्षु बहिरपि माहेन्द्रं मण्डलं दद्यात्॥१८॥

'मन्त्रेण वेष्टयित्वाऽनेन' अनेन कथितमन्त्रेण वेष्टितं कृत्वा। 'ततः' तन्मन्त्रवेष्टनाद् बहिःप्रदेशे। 'अरातिविग्रहो लेख्यः' शत्रुरूपं लेख्यम्। क्व? 'अष्टासु दिक्षु' प्राच्याद्यष्टदिशासु। 'बहिरपि' विग्रहबहिःप्रदेशेऽपि। 'माहेन्द्रं मण्डलं' इन्द्रमण्डलम्। 'दद्यात्' देयम्॥

प्रेतवनात् सञ्चालितमृतकमुखोज्झितपटेऽथवा विलिखेत्।
कृष्णाष्टम्यां युद्ध्वा त्यक्तप्राणस्य सङ्ग्रामे॥१९॥

'प्रेतवनात्' श्मशानभूमेः सकाशात्। 'संचालितमृतकमुखोज्झितपटेऽथवा विलिखेत्' सम्यग्चलितमृतकमुखोज्झितपटेऽथवा प्रेतस्य प्रच्छादितवस्त्रे विलिखेत्। अथवा 'कृष्णाष्टम्यां युद्ध्वा त्यक्तप्राणस्य संग्रामे' कृष्णाष्टम्यां कृष्णचतुर्दश्यां 'सङ्ग्रामे' रणाङ्गणे युद्ध्वा कृतप्राणपरित्यागपुरुषस्य वस्त्रे वा विलिखेत्॥

कन्याकर्तितसूत्रं दिवसेनैकेन तत्पुनर्वीतम् ।
तस्मिन् हरितालाद्यैः कोरण्टकलेखिनीलिखितम् ॥ २० ॥

'कन्याकर्तितसूत्रं' कुमार्या कर्तितं सूत्रम् । 'तत्' कुमार्या कर्तितसूत्रम् । 'दिवसेनैकेन पुनर्वीतम्' पुनरपि एकेन दिवसेन वर्णितम् । 'तस्मिन् हरितालाद्यैः' तस्मिन् वस्त्रे हरितालादिपीतद्रव्यैः । 'कोरण्टकलेखिनी-लिखितम्' कोरण्टकलेखिन्या लिखितम् ॥

पद्मावत्याः पुरतः पीतैः पुष्पैः पुरा समभ्यर्च्य ।
यन्त्रपटं बध्नीयात् प्रख्याते चान्तरे स्तम्भे ॥ २१ ॥

'पद्मावत्याः पुरतः' पद्मावतीदेव्यग्रतः । 'पीतैः पुष्पैः पुरा समभ्यर्च्य' पीतवर्णप्रसूनैः पूर्वं सम्यक् पूजयित्वा । 'यन्त्रपटं' एतल्लिखितयन्त्रपटम् । 'बध्नीयात्' निबध्नीयात् । 'प्रख्याते' विख्याते । 'चः' समुच्चये । 'आन्तरे स्तम्भे' अभ्यन्तरस्तम्भे ॥

तं दृष्ट्वा दूरतरान्नश्यन्ति भयेन विह्वलीभूताः ।
विरचितसेनाव्यूहात् सङ्ग्रामेऽशेषरिपुवर्गाः ॥ २२ ॥

'तं दृष्ट्वा' स्तम्भे निबद्धं यन्त्रपटं दृष्ट्वा । 'दूरतरान्नश्यन्ति' अतिदूरादेव 'नश्यन्ति' पलायन्ते । 'भयेन विह्वलीभूताः' भीत्या विकलीभूताः । कस्मात् ? 'विरचितसेनाव्यूहात्' विशेषेण रचितो विरचितः, विरचितश्चासौ सेनाव्यूहश्च विरचितसेनाव्यूहः तस्मात् । क ? 'सङ्ग्रामे' रणभूमौ । के ? 'अशेषरिपुवर्गाः' इतरशत्रुसमूहाः । नश्यन्तीति सम्बन्धः ॥

इत्युभयभाषाकविशेखरश्रीमल्लिषेणसूरिविरचिते
भैरवपद्मावतीकल्पे स्तम्भनयन्त्राधिकारः
पञ्चमः परिच्छेदः ॥ ५ ॥

द्विरेफयुक्तं लिख मान्तयुग्मं षष्ठस्वरौकारयुतं सबिन्दु।
स्वरावृतं पञ्च पुराणि वह्ने रेफात् क्रमात् क्रोमथ ह्रीँ च कोणे॥ १॥

'द्विरेफयुक्तं' रेफद्वयसंयुक्तम् । 'लिख' लेखय । किं तत् ? 'मान्तयुग्मम्' मकारस्यान्तो मान्तो यकारः, तस्ययुग्ममिति यकारयुगलम् । किंविशिष्टम् ? 'षष्ठस्वरौकारयुतम्' षष्ठस्वरश्च औकारश्च षष्ठस्वरौकारौ ताभ्यां युतं षष्ठस्वरौकारयुतम्, ऊकार–औकारसंयुक्तम् । पुनः कथम्भूतम् ? 'सबिन्दु' अनुस्वारेण संयुक्तम् । एवं यूँ यौँ । पुनरपि कथम्भूतम् ? 'स्वरावृतम्' तद्बीजबहिःप्रदेशे षोडशकलाभिरावेष्टयम् । 'पञ्चपुराणि वह्नेः' आवृत-कलावेष्टनबहिःप्रदेशे पञ्चवह्निपुराणि । 'रेफात् क्रमात् क्रोमथ ह्रीँ च कोणे' रेफाक्षरसकाशाद् यथानुक्रमेण क्रोमित्यक्षरम् । अथ' क्रोँकारादनन्तरम् । 'ह्रीँ' ह्रीमिति बीजम् । 'चः' समुच्चये । क्व ? कोणे ॥

क्लैँकाररुद्धं च तथा ह्स्क्लीँ [१]ब्लूँकाररुद्धं च ह्सौँस्तथैव ।
क्रमेण दिक्षु त्रिषु चाम्बिकाया मन्त्रं बहिर्वह्निमरुत्पुरं च ॥ २ ॥

'क्लैँकाररुद्धं च' क्लैँकारद्वितयरुद्धम् । 'तथा ह्स्क्लीँ' तथा पूर्वोक्ताक्षरविधानेन ह्स्क्लीँ इति बीजाक्षरम् । 'ब्लूँकाररुद्धं च' ब्लूँकारयुगलरुद्धं च । 'ह्सौँ तथैव' ह्सौँ इति बीजाक्षरमपि । 'क्रमेण' प्रथममण्डलकोणत्रये ह्रीँ इति बीजम्, द्वितीयमण्डलकोणत्रये क्रोँ इति बीजम्, तृतीयमण्डलकोणत्रये ह्रीँ इति बीजम्, चतुर्थ-मण्डलकोणत्रये क्लैँकाररुद्धं ह्स्क्लीँ इति बीजम्, पञ्चममण्डलकोणत्रये [१]ब्लूँकाररुद्धं ह्सौः इति बीजम्, एवमनेन क्रमेण वह्निपञ्चपुराणि लेखनीयानि । 'दिक्षु त्रिषु' तन्मण्डलत्रिदिशासु 'मन्त्रं' वक्ष्यमाणमन्त्रम् । कस्याः ? 'अम्बिकायाः' अम्बिकायक्षिदेव्याः । 'बहिः' तन्मन्त्रबाह्ये । 'वह्निमरुत्पुरं' अग्निमण्डलं वायुमण्डलं च । अम्बिकामन्त्रोद्धारः—

ॐ नमो भगवति ! अम्बिके ! अम्बालिके ! यक्षिदेवि ! यूँ यौँ ब्लैँ ह्स्क्लीँ ब्लूँ ह्सौः [२]र र र र रां रां नित्यक्लिन्ने ! [३]मदनद्रवे ! मदनातुरे ! ह्रीँ क्रोँ अमुकां मम वश्याकृष्टिं कुरु कुरु संवौषट् ॥

इष्टाङ्गनाकर्षणमाहुराद्या धत्तूरताम्बूलविषादिलेख्यम् ।
यन्त्रं पटे खर्परताम्रपत्रे दिनत्रये दीपशिखाग्नितप्तम् ॥ ३ ॥[४]

---

१ ब्लैँकार इति ख पाठः । २ रः रः रः रः रां रां इति ख पाठः । ३ मदद्रवे इति ख पाठः ।

४ आकृष्टिमिष्टप्रमदाजनानां करोति यन्त्रं खदिराग्नितप्तम् ।

इति श्लोकार्धमधिकं दीपशिखाग्नितप्तमित्यस्यानन्तरं पठ्यते ग पुस्तके ॥ तट्टीकाऽपि दृश्यते । सा यथा—'आकृष्टिं' आकर्षणम् । कासाम् ? 'इष्टप्रमदाजनानां' स्वकीयेप्सितानामङ्गनानाम् । करोति' कुरुते । किं तत् ? 'यन्त्रं' एतत् कथितयन्त्रम् । किंविशिष्टम् ? 'खदिराग्नितप्तं' खदिरकाष्ठाङ्गारतप्तम् ॥

'इष्टाङ्गनाकर्षणम्' इष्टप्रमदाजनाकृष्टिम्। 'आहुः' ब्रुवन्ति। के? 'आद्याः' पूर्वाचार्याः। कम्? यन्त्रम्' किंविशिष्टम्? 'धत्तूरताम्बूलविषादिलेख्यम्' उन्मत्तरसः तन्मुखताम्बूलरसः 'विषं' शृङ्गीविषं आदिशब्दाद् उद्वर्तनादिभिः 'लेख्यम्' इत्यादिद्रव्यैर्लेखनीयम्। 'यन्त्रम्' कथितयन्त्रम्। क्व? 'पटे' वस्त्रे। 'खर्परे' नूतन-खर्परे। 'ताम्रपत्रे' शुल्वपत्रे। 'दिनत्रये' त्रिदिने। 'दीपशिखाग्नितप्तम्' प्रदीपशिखाज्वालातप्तम्॥

ॐ ह्रीँ हृत्कमले गजेन्द्रवशकं सर्वाङ्गसन्धिष्वपि
मायामाविलिखेत् कुचद्वितययोर्य्यूँ योनिदेशे तथा।
क्रोँकारैः परिवेष्ट्य मन्त्रवलयं दद्यात् पुरं चानलं
तद्बाह्येऽनिलभूपुरं त्रिदिवसे दीपाग्निनाऽऽकर्षणम्॥४॥

'ॐ ह्रीँ हृत्कमले' हृदयकमलमध्ये ॐ ह्रीँ इति बीजाक्षरं विलिखेत्। 'सर्वाङ्गसन्धिषु' सर्वशरीरसन्धिषु। 'अपि' तथा। 'गजेन्द्रवशकं' अङ्कुशम्। 'कुचद्वितययोः' स्तनद्वितययोः। 'मायामाविलिखेत्' ह्रीँकारमाविलिखेत्। 'तथा' तेन प्रकारेण। 'योनिदेशे' योनिप्रदेशे। 'य्र्यूँ' य्र्यूँ इति बीजम्। 'क्रोँकारैः परिवेष्ट्य' तद्रूपबहिःप्रदेशे क्रोँकारैः समन्तात् वेष्टयित्वा। 'मन्त्रवलयं दद्यात्' तत्क्रोँकारवेष्टनानन्तरं 'ॐ नमो भगवति! कृष्णमातङ्गिनि!' इत्यादि मन्त्रवेष्टनं दद्यात्। 'पुरं चानलम्' तन्मन्त्रवलयबहिः अग्निमण्डलं दद्यात्। 'तद्बाह्येऽनिलभूपुरम्' तदग्नि-मण्डलबहिःप्रदेशे वायुमण्डलं तदुपरि भूमण्डलं दद्यात्। 'त्रिदिवसे दीपाग्निनाऽऽकर्षणम्' दिनत्रयमध्ये प्रदीप-शिखाग्निना आकर्षणं स्यात्॥

वलयमन्त्रोद्धारः—ॐ नमो भगवति! कृष्णमातङ्गिनि! शिलावल्कलकुसुमरूपधारिणि[1]! किरातशबरि! सर्वजनमोहिनि[2]! सर्वजनवशंकरि! ह्राँ ह्रीँ ह्रूँ ह्रौँ ह्रः अमुकां मम वश्याकृष्टिं कुरु कुरु संवौषट्॥

पत्रे स्त्रीरूपमालिख्यमूर्ध्वपादमधःशिरः।
ब्रह्मादिराजिकाधूमभानुदुग्धेन लेखयेत्[3]॥५॥

'पत्रे' ताम्रपत्रे। 'स्त्रीरूपम्' इष्टाङ्गनारूपम्। 'आलिख्यं' लिखित्वा। कथम्? 'ऊर्ध्वपादमधःशिरः' पादावूर्ध्वं शिरोऽधः कृत्वा लिखेत्। 'ब्रह्मादि' ब्रह्मादि–पलाशश्रुगुधत्तूरमिति अन्ये वदन्ति ब्रह्माविष्णुरुद्रेति त्रिपुरुषम्। 'राजिका' गौरसर्षपाः। 'धूमं' गृहधूमम्। 'भानुदुग्धेन' अर्कक्षीरेण लेखयेत्। एतैः द्रव्यैः कथितस्त्रीरूपं यन्त्रं लेखयित्वा दीपशिखाग्नौ तापयेत् इत्यर्थः॥

अग्निपुटकोष्ठमध्ये कलावृतं नाथमङ्कुशनिरुद्धम्।
कोष्ठेषु प्रणवाङ्कुशमायारतिनाथररंश्च॥६॥

१ वेषधारिं इति ख पाठः २ सर्वजनमनोमोहिनी इति ख पाठः
३ लेपयुत् ख पाठः।

'अग्निपुटकोष्ठमध्ये' शिखिमण्डलद्वयसम्पुटकोष्ठमध्ये । 'कलावृतं' षोडशकलाभिरावृतम् । कम् ? 'नाथम्' भुवननाथं ह्रौँकारम् । कथम्भूतम् ? 'अङ्कुशनिरुद्धम्' तद्ह्रौँकारोभयपार्श्वे क्रौंकारद्वयरुद्धम् । 'कोष्ठेषु' तदग्निपुटषट्कोणेषु । 'प्रणवाङ्कुशमायारतिनाथरंरथ' प्रथमकोष्ठे ॐ, द्वितीयकोष्ठे क्रों, तृतीयकोष्ठे ह्रीँ, चतुर्थकोष्ठे क्लीँ, पञ्चमकोष्ठे रं, षष्ठकोष्ठे रः ॥

कृष्णशुनकस्य जङ्घाशल्ये प्रविलिख्य मनुजरक्तेन[1] ।
खदिराङ्गारैस्तप्ते सप्ताहादानयत्यबलाम् ॥ ७ ॥

'कृष्णशुनकस्य' असितभषणस्य । 'जङ्घाशल्ये' तच्छुनकदक्षिणजङ्घास्थि । 'प्रविलिख्य' प्रकर्षेण लिखित्वा । केन ? 'मनुजरक्तेन' नररुधिरेण । 'खदिराङ्गारैः' खदिरकाष्ठाङ्गारैः । 'तप्ते' तापिते सति । 'सप्ताहात्' सप्तदिनमध्ये । 'आनयति' समानयति । काम् ? 'अबलाम्' वनिताम् ॥

अथवा रजस्वलाया वस्त्रे संलिख्य जलजनागिन्याः ।
पुच्छं विधाय वर्तिं तद्दीपादानयेन्नारीम् ॥ ८ ॥

'अथवा' अन्येन प्रकारेण वा । 'रजस्वलायाः' पुष्पवत्याः । 'वस्त्रे' तद्वस्त्रे । 'संलिख्य' प्राक्शुनकास्थिलिखिताग्निपुटकोष्ठेत्यादि यन्त्रं सम्यग् लिखित्वा । 'जलजनागिन्याः' 'जलोद्भवसर्पिण्याः' । 'पुच्छं विधाय वर्तिं' नागिन्याः पुच्छं गृहीत्वा तद्वस्त्रमध्ये निक्षिप्य वर्त्तिं कृत्वा । 'तद्दीपात्' तद्वर्त्तिप्रबोधिततद्दीपात् । 'आनयेत्' समानयेत् । काम् ? 'नारीम्' वनिताम् ॥

ह्रौँकारमध्ये प्रविलिख्य नाम षट्कोणचक्रं बहिराविलेख्यम् ।
कोणेषु तत्त्वं त्रिषु चोर्ध्वकोणद्वये पुनर्य्यूमधरों लिखेच्च ॥ ९ ॥

'ह्रौंकारमध्ये' भुवननाथाधिपमध्ये । 'प्रविलिख्य' प्रकर्षेण लिखित्वा । किम् ? 'नाम' देवदत्तनाम । 'षट्कोणचक्रम्' षट्कोणम् । 'बहिः' तद्ह्रौँकाराद् बहिः । 'आलेख्यं' समन्तादालेख्यम् । 'कोणेषु' षट्कोणेषु । 'तत्त्वं' ह्रौंकारम् । 'त्रिषु च' अधोगतपार्श्वकोणद्वयम्, ऊर्ध्वगतकोणमेकम्, एवं कोणत्रये ह्रौँकारं लिखेत् । 'ऊर्ध्वकोणद्वये' पार्श्वकोणद्वये । 'पुनः' पश्चात् । 'यूँ' यूँ यूँ इति लिखेत् । 'अधरों लिखेच्च', अधोगतमध्यकोणे ॐ लिखेत् । 'चः' समुच्चये ॥

पाशाङ्कुशौ कोणशिखान्तरस्थौ मन्त्रावृतं वायुपुरं च बाह्ये ।
आकृष्टिमिष्टप्रमदाजनानां करोति यन्त्रं खदिराग्नितप्तम ॥ १० ॥

'पाशाङ्कुशौ कोणशिखान्तरस्थौ' षट्कोणचक्रकोणेषु पाशाङ्कुशौ आँ क्रौं । 'मन्त्रावृतं' षट्कोणचक्रबहिः वक्ष्यमाणमन्त्रेणावेष्टितम् । 'वायुपुरं च बाह्ये' तन्मन्त्रवलयबहिःप्रदेशे वायुमण्डलम् । 'च' समुच्चये । 'आकृष्टिं' आकर्षणम् । कासाम् ? 'इष्टप्रमदाजनानां' स्वेप्सितस्त्रीणाम् । 'करोति' कुरुते । किं तत् ? 'यन्त्रम्' कथितषट्कोणयन्त्रम् । किंविशिष्टम् ? 'खदिराग्नितप्तम्' खदिरकाष्ठाग्निना तापितम् ॥

---

१ ग पुस्तके 'भुजरक्तेन' इति पाठो दृश्यते, टिप्पण्यां स खररक्तेन इति तस्यार्थो निर्दिश्यते ।

वलयमन्त्रोद्धारः—ॐ ह्रीं ह्स्क्लीं ह्सौं आँ क्रों ग्व्यूँ नित्यक्लिन्ने ! मदद्रवे ! मदनातुरे ! अमुकीं मम वश्याकृष्टिं कुरु कुरु सं वौषट् ॥

लिखित्वा ताम्रपत्रे वा श्मशानोद्भवखर्परे।
तदङ्गमलधत्तूरविषाङ्गारप्रलेपिते ॥ ११ ॥

'लिखित्वा' आलिख्य । क ? 'ताम्रपत्रे' ताम्रविनिर्मितपत्रे। 'वा' अथवा। 'श्मशानोद्भवखर्परे' श्मशानजनित-खर्परे। 'तदङ्गमल' इष्टाङ्गनापञ्चमलः 'धत्तूर' उन्मत्तकरसः 'विष' शृङ्गीविषम् 'अङ्गार' श्मशानाङ्गारः, 'प्रलेपिते' एतैः अङ्गमलादिद्रव्यैः ताम्रपत्रे प्रलेपिते सति ॥

ह्रीं वदने योनौ क्लें[1] ह्स्क्लीं कण्ठे स्मराक्षरं नाभौ।
हृदये द्विरेफयुक्तं हूँकारं नामसंयुक्तम् ॥ १२ ॥

'ह्रीं वदने' आस्ये ह्रींकारम्। 'योनौ क्लें' योनिमध्ये क्लें। 'ह्स्क्लीं कण्ठे' कण्ठप्रदेशे ह्स्क्लीं इति। 'स्मराक्षरं नाभौ' नाभिप्रदेशे क्लींकारम्। 'हृदये द्विरेफयुक्तं हकारं' हृत्प्रदेशे अधऊर्ध्वरेफद्वययुक्तं 'हूँकारं' हूँमिति। किंविशिष्टं हूँकारम् ? 'नामसंयुक्तम्' देवदत्तनामान्वितम् ॥

नाभितले क्लूँकारं[2] वेदादिं[3] मस्तके च संविलिखेत्।
स्कन्धमणिबन्धकूर्परपदेषु तत्त्वं प्रयोक्तव्यम् ॥ १३ ॥

'नाभितले क्लूँकारं' नाभेरधःप्रदेशे क्लूँकारम्। 'वेदादिं' वेदस्य आदिर्वेदादिः ॐकारः तं 'मस्तके च' शीर्षे च संविलिखेत्। 'स्कन्धमणिबन्धकूर्परपदेषु तत्त्वं प्रयोक्तव्यम्' स्कन्धप्रदेशे मणिबन्धप्रदेशे कूर्परप्रदेशे पदद्वयप्रदेशे, एतेषु प्रदेशेषु ह्रींकारः प्रकर्षेण योजनीयः ॥

हस्ततले ग्व्यूँकारं सन्धिषु शाखासु शेषतो रेफान्।
त्रिपुटितवह्निपुरत्रयमथ तद्बाह्यप्रदेशेषु ॥ १४ ॥

कोष्ठेषु भुवननाथं कोष्ठाग्रान्तरनिविष्टमङ्कुशं बीजम्।
वलयं पद्मावत्या मन्त्रेण करोतु तद्बाह्ये ॥ १५ ॥

'हस्ततले ग्व्यूँकारम्' करतले ग्व्यूँकारं लिखेत्। 'सन्धिषु शाखासु' हस्तपादादिशाखासु 'शेषतः' अङ्गुल्यादिशाखासु 'रेफान्' रकारान् लिखेत्। 'त्रिपुटितवह्निपुरत्रयम्' एतत्क्रमेणोद्धरितपुत्तलिकाबहिःप्रदेशे

---

१ क्लैँ इति ख पाठः। २ क्ल इति ख पाठः। ३ वेदाद्यं इति ख पाठः।

अग्निमण्डलत्रयसम्पुटं कुर्यात्। 'अथ' त्रिपुटिताग्निपुरानन्तरं 'तद्बाह्यप्रदेशेषु' तदग्निमण्डलबहिःप्रदेशेषु 'कोष्ठेषु' नवकोष्ठेषु 'भुवननाथम्' ह्रींकारं लिखेत्। 'कोष्ठाग्रान्तरनिविष्टमङ्कुशं बीजम्' कोष्ठाग्रेषु तदन्तरेषु च निवेशित-क्रौंकारम्। 'वलयं' वेष्टनम् 'पद्मावत्याः' पद्मावतीदेव्याः 'मन्त्रेण' वक्ष्यमाणमन्त्रेण 'करोतु' कुर्यात् 'तद्बाह्ये' तन्मण्डलबाह्ये। वलयमन्त्रोद्धारः—

ॐ ह्रीं हैं हस्क्लीं पद्मे! पद्मकटिनि! अमुकां मम वश्याकृष्टिं कुरु कुरु संवौषट्॥

अङ्कुशरोधं कुर्यात् तद्बाह्ये मायया त्रिधा वेष्ट्यम्।
यावकमलयजचन्दनकाश्मीराद्यैरिदं लिखेद् यन्त्रम्॥ १६॥

'अङ्कुशरोधं कुर्यात्' क्रौंकाररुद्धं कुर्यात्। क्व? 'तद्बाह्ये' तन्मन्त्रवलयबहिःप्रदेशे 'मायया' ह्रींकारेण 'त्रिधा वेष्ट्यम्' त्रिप्रकारेणावेष्ट्यम्। 'यावकं' अलक्तकम्, 'मलयजं' श्रीगन्धम्, 'चन्दनम्' रक्तचन्दनम्, 'काश्मीरम्' कुङ्कुमम्, इत्यादि सुगन्धद्रव्यैः 'इदं लिखेद् यन्त्रम्' एतत् कथितयन्त्रं लिखेत्॥

वस्त्रे रजस्वलायाः खदिराङ्गारेण तापयेद् धीमान्।
कुरुते[१]ऽभिलषितवनिताकृष्टिं सप्ताहमध्येन॥ १७॥

'वस्त्रे रजस्वलायाः' पुष्पवत्या वसने लिखित्वा 'खदिराङ्गारेण तापयेत्' खदिरकाष्ठजनिताङ्गारेण तापनं कुर्यात्। कः? 'धीमान्' बुद्धिमान्। 'अभिलषितवनिताकृष्टिम्' अभिप्रेताङ्गनाकृष्टिम् 'कुरुते' कुर्यात्। कथम्? 'सप्ताहमध्येन' सप्तदिनाभ्यन्तरतः॥

रविदुग्धादिविलिप्ते युवतिकपालेऽथवा लिखेद् यन्त्रम्।
पुरुषाकृष्टौ च पुनर्नृकपाले यन्त्रमेवेदम्॥ १८॥

'रविदुग्धादि' अर्कक्षीर–स्नुहीक्षीर–गृहधूमराजिका–लवणेत्यादिभिः 'विलिप्ते' विशेषेण लिप्ते। कस्मिन्? युवतिकपाले'अथवा' प्राक्कथितरजस्वलावस्त्राभावे अनेन प्रकारेण वा 'लिखेद् यन्त्रम्' प्राक्कथितयन्त्रं विलिखेत्। 'पुरुषाकृष्टौ च' पुरुषाकर्षणविषये 'पुनः' पश्चात् 'नृकपाले' पुरुषकपाले 'यन्त्रमेवेदम्' एतदेव यन्त्रं लिखेत्॥

नाम तत्त्वविगर्भितं[२] बहिरालिखेच्छिखिमण्डलं
रेफमन्त्रवृतं श्मशानजकर्परे विलिखेदिदम्।
तापयेत् खदिराग्निना हिमकुङ्कुमादिभिरादरा-
दानयत्यबलां बलाद्दिनसप्तकैर्मदविह्वलाम्॥ १९॥

---

१ कुरुतेऽभिलिखित इति ख पाठः। २ विदर्भितं इति ख पाठः।

'नाम' देवदत्तनाम, कथम्भूतम्? 'तत्त्वविगर्भितम्' ह्रींकारमध्यस्थितम्, 'बहिः' ह्रींकाराद् बहिः प्रदेशे। 'आलिखेत्' समन्तात्लिखेत्। किम्? 'शिखिमण्डलम्' अग्निमण्डलम् 'रेफमन्त्रवृतम्' रकारमन्त्रवलयेन तदग्निमण्डलं बाह्ये वेष्ट्यम्। 'इदम्' एतद् यन्त्रम् 'विलिखेत्' लिखेत्। क्व? 'श्मशानजखर्परे' प्रेतवनकर्परे। कैर्लिखेत्? 'हिमकुङ्कुमादिभिः' कर्पूरकाश्मीरादिसुगन्धद्रव्यैः 'आदरात्' आदरेण। किं कुर्यात्? 'तापयेत्' तापनं कुर्यात्। केन? 'खदिराग्निना' खदिरकाष्ठजनिताग्निना। 'आनयति' समानयति। काम्? 'अबलाम्' वनिताम्। कथम्? 'बलात्' बलात्कारेण। कियत्कालेन? 'दिनसप्तकैः' सप्तदिवसैः। 'मदविह्वलाम्' मदनाकुलिताम्॥

वलयमन्त्रोद्धारः—

ॐ नमो भगवति! चण्डि! कात्यायनि! सुभगदुर्भगयुवतिजनानाकर्षय आकर्षय [1]ह्रीं र र र्य्ूँ संवौषट् देवदत्ताया हृदयं घे घे॥

इत्युभयभाषाकविशेखरश्रीमल्लिषेणसूरिविरचिते
भैरवपद्मावतीकल्पेऽङ्गनाकर्षणाधिकारः
षष्ठः परिच्छेदः॥ ६॥

---

१ ऑं क्रौं ह्रीं ठः ठः ठः ठः ठः हुं फट् देवदत्ताय हृदयं घे घे संवौषट् इति ख पाठः।

## सप्तमो वशीकरणयन्त्रपरिच्छेदः ।

हंसावृताभिधानं लवरयषष्ठस्वरान्वितं कूटम् ।
बिन्दुयुतं स्वरपरिवृतमष्टदलाम्भोजमध्यगतम् ॥ १ ॥

'हंसावृतम्' हंस इति पदेनावृतं–वेष्टितम् । किं तत् ? 'अभिधानम्' देवदत्तनाम । 'लवरयषष्ठस्वरान्वितम्' लश्च वश्च रश्च यश्च षष्ठस्वरश्च ऊकारः एतैरन्वितं–युक्तम् । किं तत् ? 'कूटम्' क्षकारम् । पुनः कथम्भूतम् ? 'बिन्दुयुतम्' अनुस्वारसंयुक्तम्, एवं क्ष्म्ल्व्र्यूं इति पिण्डं हंसपदाद् बहिर्देयम् । पुनरपि कथंभूतम् ? 'स्वरपरिवृतम्' पिण्डाद् बहिः स्वरैरावेष्टितम् । पुनः कथम्भूतम् ? 'अष्टदलाम्भोजमध्यगतम्' अष्टदलकमलमध्ये स्थितम् ॥

तेजो ह्रीं सोम सुधा हंसः स्वाहेति दिग्दलेषु लिखेत् ।
आग्नेय्यादिदलेष्वपि पिण्डं यत् कर्णिकालिखितम् ॥ २ ॥

'तेजो ह्रीं सोम सुधा हंसः स्वाहा' तेजः–ॐकारः, 'ह्रीं' ह्रींमिति अक्षरं, सोमः क्ष्वींकारः, सुधा क्ष्वींकारः, 'हंसः' हंस इति पदम्, 'स्वाहा' स्वाहा इति पदम् । एवं ॐ ह्रीं क्ष्वीं क्ष्वीं हंसः स्वाहा इत्येवंविशिष्टमन्त्रं 'दिग्दलेषु' प्राच्यादिषु चतुःपत्रेषु लिखेत् । 'आग्नेय्यादिदलेष्वपि' पश्चात् आग्नेय्यादिविदिग्गतचतुर्दलेषु 'पिण्डं यत् कर्णिकालिखितम्' यत् कर्णिकाभ्यन्तरे लिखितं क्ष्म्ल्व्र्यूं इति पिण्डं विदिक्पत्रेषु लिखेत् ॥

भूर्ये सुरभिद्रव्यैर्विलिख्य[1] तत् सिक्थकेन परिवेष्टय ।
नूतनघटेऽम्बुपूर्णे तद्यन्त्रं स्थापयेद् धीमान् ॥ ३ ॥

'भूर्ये' भूर्यपत्रे 'सुरभिद्रव्यैः' कुङ्कुमकर्पूरादिसुगन्धद्रव्यैः 'विलिख्य' विशेषेण लिखित्वा 'तत्' तल्लिखित-यन्त्रम् 'सिक्थकेन' मधूच्छिष्टेन 'परिवेष्टय' समन्ताद् आवेष्टय । 'नूतनघटे' नवकुम्भे । कथम्भूते ? 'अम्बुपूर्णे' शीतलजलपरिपूर्णे । 'तद् यन्त्रं' तत् सिक्थकेन वेष्टितं यन्त्रम् 'स्थापयेत्' निक्षिपेत् । कः ? 'धीमान्' बुद्धिमान् ॥

तन्दुलपूर्णं मृण्मयभाजनमप्युपरि तस्य संस्थाप्य ।
श्रीपार्श्वनाथसहितं करोति दाहज्वरोपशमम् ॥ ४ ॥

'तन्दुलपूर्णम्' शाल्यक्षतभरितम् 'मृण्मयभाजनम्' मृदा निर्मितपात्रम् 'अपि' पश्चात् 'उपरि तस्य' पूर्णकुम्भस्योपरि 'संस्थाप्य' सम्यक् स्थापयित्वा । कथम् ? 'श्रीपार्श्वनाथसहितम्' तन्दुलोपरि श्रीपार्श्वनाथ-जिनप्रतिमायुक्तम् । एवं विधानेन कृते सति 'करोति' कुरुते । कम् ? 'दाहज्वरोपशमम्' दाहज्वरस्य शान्तिम् ॥

श्रीखण्डेन तदालिख्य पाययेत् कांस्यभाजने ।
महादाहज्वरग्रस्तं तत्क्षणेनोपशाम्यति ॥ ५ ॥

---

१ विलिखेत् इति ख पाठः

'श्रीखण्डेन' मखाश्रयेण 'तत्' प्राक्कथितयन्त्रम् 'आलिख्य' लिखित्वा 'पाययेत्' आतुरं पाययेत्। तत् क्व लिखित्वा? 'कांस्यभाजने' कांस्यनिर्मितपात्रे। कम्? 'महादाहज्वरग्रस्तम्' तीव्रोष्णज्वरगृहीतम्। 'तद्' दाहज्वरम् 'क्षणेन' निमिषमात्रेण 'उपशाम्यति' उपशमं प्राप्नोति ॥

मन्त्रोद्धारः—ॐ क्ष्म्ल्व्र्यूँ हूँ क्ष्वीं क्ष्वीं हंसः असिआउसा स्वाहा।

१क्लैंतत्त्वकूटेन्दुवृतं स्वनाम तद्बाह्यभागेऽष्टदलाब्जपत्रम्।
पत्रेषु पद्मावरमूलमन्त्रं वेष्टयं तदाकर्षणपल्लवेन ॥ ६ ॥

'क्लैंतत्त्वकूटेन्दुवृतम्' 'क्लैं' क्लैंकारं, 'तत्त्वं' ह्रींकारम्, 'कूटं' क्षकारम्, 'इन्दुः' ठकारः, तैः 'वृतम्' एभिश्चतुर्बीजैरावेष्टितम्। किं तत्? 'स्वनाम' स्वकीयनाम। 'तद्बाह्यभागे' तद्बीजाक्षरबहिःप्रदेशे। 'अष्टदलाब्जपत्रम्' अष्टदलकमलपत्रम्। 'पत्रेषु' तद्दलपत्रेषु 'पद्मावरमूलमन्त्रम्' पद्मावतीदेव्या विशिष्टमूलमन्त्रम् 'वेष्टयं तद्' तद् यन्त्रं वेष्टनीयम्। केन? 'आकर्षणपल्लवेन' संवौषट् इति पल्लवेन ॥

मन्त्रोद्धारः—ॐ ह्रीं हैँ ह्स्क्लीं पद्मे! पद्मकटिनि! नमः ॥

यन्त्रं ततश्चार्द्धशशिप्रवेष्टयं विलिख्य यन्त्रं फलके वटस्य।
गोरोचनासंयुतकुङ्कुमाद्यैः साध्यस्य नामारुणचन्दनेन ॥७॥

'यन्त्रम्' एतत् कथितयन्त्रम् 'ततः' तस्माल्लेखनानन्तरम् 'चः' समुच्चये, 'अर्द्धशशिप्रवेष्टयम्' अर्द्धचन्द्ररेखया वेष्टयम्। 'विलिख्य' विशेषेण लिखित्वा 'यन्त्रं' एतद् यन्त्रम्। क्व? 'फलके' पट्टिकायाम्। कस्य? 'वटस्य' न्यग्रोधवृक्षस्य। कैः कृत्वा? 'गोरोचनासंयुतकुङ्कुमाद्यैः' गोरोचनान्वितकुङ्कुमादिद्रव्यैः। 'साध्यस्य नामारुणचन्दनेन' साध्यमनुजनामान्वितं यन्त्रं रक्तचन्दनेन लेख्यम् ॥

कृत्वा ततश्चोभयसम्पुटं च श्रीपार्श्वनाथस्य पुरो निवेश्य।
सन्ध्यासु नित्यं करवीरपुष्पैर्भवेदवश्यं जपतः सुसाध्यम् ॥ ८ ॥

'ततः' तस्मादनन्तरम्। 'चः' समुच्चये। 'उभयसम्पुटं च' साध्यसाधकयोर्लिखितयन्त्रसम्पुटम् 'कृत्वा' विरचय्य। 'श्रीपार्श्वनाथस्य' श्रीपार्श्वनाथतीर्थङ्करस्य 'पुरः' अग्रे 'निवेश्य' संस्थाप्य। कासु? 'सन्ध्यासु' त्रिषु सन्ध्यासु। 'नित्यं' सर्वकालम् 'जपतः' जाप्यं कुर्वतः। कैः? 'करवीरपुष्पैः' रक्तकरवीरपुष्पैः। जपतः पुरुषस्य 'अवश्यं' निश्चयेन 'सुसाध्यं' सम्यक् साध्यं 'भवेत्' स्यात् ॥

अन्त्यवर्गतृतीयतुर्यवकारतत्त्ववृताह्वयं
हंसवर्णवृतं ततो द्विगुणीकृताष्टदलाम्बुजम्।
तेषु षोडश सत्कलाः शिरसोनशून्यवृतं बहि-
र्मायया परिवेष्टितं प्रणवादिकादिभिरावृतम् ॥ ९ ॥

---

१ ब्लैं इति ख पाठः।

'अन्त्यवर्गः' शवर्गः। 'तृतीयः' तस्य शवर्गस्य तृतीयाक्षरः सकारः। 'तुर्यः' चतुर्थः हकारः। 'वकारः' वकाराक्षरम्। 'तत्त्वं' ह्रींकारः। 'वृताह्वयम्' एतैश्चतुर्भिरक्षरैरावेष्टितदेवदत्तनाम। 'हंसवर्णवृतम्' तदक्षरचतुष्टयाद् बहिः 'हंसः' इतिवर्णैरावृतम्। 'ततः' हंसवलयात् 'द्विगुणीकृताष्टदलाम्बुजम्' षोडशदलपद्मम्। 'तेषु' षोडशदलेषु 'षोडश सत्कलाः' अकारादिषोडशस्वराः। 'शिरसोनशून्यवृतं बहिः' तत्स्वराद् बहिः शिरोरहित-हकारैर्वेष्टितम्। 'मायया' ह्रींकारेण 'परिवेष्टितम्' समन्ताद् वेष्टितम्। 'प्रणवादिकादिभिः' तद्ह्रींकाराद् बहिःप्रदेशे प्रणव आदिर्येषां ते ककारादयः तैः कादिभिरावृतम्। ॐक, ॐख, ॐग, ॐघ, ॐङ, ॐच, इत्यनेन प्रकारेण हकारपर्यन्तं वेष्टनीयम्॥

यन्त्रमाविलिखेदिदं हिमकुङ्कुमागुरुचन्दनै—
भूर्यके फलकेऽथवा भुवि गोमयेन विमार्जिते।
प्रत्यहं विधिना समं जपतोऽरुणप्रसवैर्भृशं
तस्य पादसरोजषट्पदसन्निभं भुवनत्रयम्॥ १०॥

'यन्त्रम्' एतत्कथितयन्त्रम् 'आविलिखेत्' समन्तात् लिखेत्। कैः? 'हिमकुङ्कुमागुरुचन्दनैः' कर्पूर-काश्मीरागुरुश्रीगन्धादिसुरभिद्रव्यैः। क्व? 'भूर्यके' भूर्यपत्रे। 'फलके' पटफलके। 'अथवा' अन्येन प्रकारेण वा 'भुवि' पृथिव्याम्। 'गोमयेन' भूम्यपतितगोशकृता 'विमार्जिते' विलिप्ते 'प्रत्यहं' दिनं दिनं प्रति 'विधिना' यथाविधानेन 'समं' सह 'जपतः' जपं कुर्वतः। कैः? 'अरुणप्रसवैः' रक्तकरवीरपुष्पैः। 'भृशं' अत्यर्थम्। 'तस्य' अनेन प्रकारेण जपतस्तस्य पुरुषस्य। 'पादसरोजषट्पदसन्निभं' पादकमलभ्रमरसदृशं। किम्? 'भुवनत्रयम्' जगत्त्रयम् तस्य पुरुषस्य वशवर्ति स्यात् इत्यभिप्रायः।

मन्त्रः—ॐ ह्रीं हस्क्लीं ब्लूं हूँ असिआउसा अनाहतविद्यायै नमः॥

ब्रह्मान्तरगतं नाम मायया परिवेष्टितम्।
वेष्टितं कामराजेन बाह्ये षोडशपत्रकम्॥ ११॥

'ब्रह्मान्तरगतं' ॐकारमध्यस्थितम् 'नाम' देवदत्तनाम। कथम्भूतम्? 'मायया परिवेष्टितम्' ह्रींकारेण परिवेष्टितम्। पुनरपि ह्रींकाराद् बहिः 'कामराजेन' क्लींकारेण 'वेष्टितं' परिवेष्टितम्। 'बाह्ये' क्लींकारबाह्ये 'षोडशपत्रकं' षोडशदलपद्मम्॥

पञ्च बाणान् न्यसेत् तेषु स्वाहान्तौँकारपूर्वकान्।
तद्बाह्ये मायया वेष्टयं क्रौँकारेण निरोधयेत्॥ १२॥

'पञ्च बाणान्' ॐ द्रां द्रीं क्लीं ब्लूं सः इति पञ्च बाणान् 'न्यसेत्' स्थापयेत्। केषु? 'तेषु' प्रत्येकं

१ मायया तत् त्रिधा वेष्टयं इति ख पाठः।

पत्रेषु 'न्यसेत्' विन्यसेत्। कथंभूतान्? 'स्वाहान्तोंकारपूर्वकान्' स्वाहाशब्दान्तान् एवं 'ॐ द्रां द्रीं क्लीं ब्लूं सः स्वाहा' इत्यादिरूपान्। तद्बाह्ये' तत्पत्रबाह्ये 'मायया वेष्टयम्' ह्रींकारेण त्रिधा वेष्टयम्। 'क्रौंकारेण निरोधयेत्' क्रौंकारेण निरोधनं कुर्यात्।

भूर्यपत्रे पटे वाऽपि विलिखेच्च हिमादिभिः।
ह्राँ ह्रीं क्लीं ब्लूँ सकारान्त्यमन्त्रं क्षोभकरं जपेत् ॥ १३ ॥

'भूर्यपत्रे' भूर्जदले 'पटे वा' वस्त्रे वा 'अपि' निश्चयेन 'विलिखेच्च' विशेषेण लिखेत्। कैः? 'हिमादिभिः' कर्पूरादिसुगन्धद्रव्यैः। 'ह्राँ ह्रीं क्लीं ब्लूँ सकारान्त्यमन्त्रं' ॐ ह्राँ ह्रीं क्लीं ब्लूं सः इति मन्त्रम् 'क्षोभकरं' जनक्षोभकरम् 'जपेत्' जपं कुर्यात्॥

अष्टदलकमलमध्ये स्वनाम तत्त्वं दलेषु चित्तभवम्।
पुनरप्यष्टदलाम्बुजमिभवशकरणं ततो लेख्यम् ॥ १४ ॥

'अष्टदलकमलमध्ये' अष्टदलाम्बुजमध्ये कर्णिकायाम् 'स्वनाम तत्त्वम्' स्वकीयनामान्वितं ह्रींकारम्। 'दलेषु चित्तभवम्' तदष्टदलेषु क्लींकारम्। 'पुनरप्यष्टदलाम्बुजम्' पुनरपि अष्टदलपद्मम्। 'ततः' तदष्टदलेषु 'इभवशकरणं' क्रौंकारः 'लेख्यं' लेखनीयः॥

षोडशदलगतपद्मं क्लौंकारं तद्दलेषु सुरभिद्रव्यैः।
क्लाँ क्लीं क्लूँ क्लौंकारैस्तद् यन्त्रं वेष्टयेत् परितः ॥ १५ ॥

'षोडशदलपद्मम्' पूर्वोक्ताष्टपत्रबहिःप्रदेशे षोडशदलान्वितं पद्मं लिखेत्। 'क्लौंकारं तद्दलेषु' तत्-षोडशदलेषु क्लौंकारं लिखेत्। कैः? 'सुरभिद्रव्यैः' सुगन्धिद्रव्यैः। 'क्लां क्लीं क्लूं क्लौंकारैः' क्लाँ क्लीं क्लूं क्लौं इत्यक्षरचतुष्टयेन 'तद् यन्त्रम्' प्राग्लिखितयन्त्रम् 'वेष्टयेत्' वेष्टनं कुर्यात्। कथम्? 'परितः'समन्तात्॥

तद्बाह्येऽर्कशशिभ्यां जपतः शून्यैश्च पञ्चभिर्नित्यम्।
नागनरामरलोकः क्षुभ्यति वश्यत्वमायाति ॥ १६ ॥

'तद्बाह्ये' तद्वेष्टनबहिःप्रदेशे 'अर्कशशिभ्याम्' आदित्यचन्द्राभ्यां वेष्टनीयम्। 'जपतः शून्यैश्च पञ्चभिर्नित्यम्' सर्वकालं ह्राँ ह्रीं हूँ ह्रौं हः इति पञ्चशून्यैः जपं कुर्वतः पुरुषस्य 'नागनरामरलोकः क्षुभ्यति' नागलोकः मनुष्यलोकः देवलोकः इति लोकत्रयं तस्य क्षोभं याति, 'वश्यत्वमायाति' वशवर्तित्वमेति॥

अष्टौ लघुपाषाणान् दिशासु परिजप्य निक्षिपेद् धीमान्।
चौरारिरौद्रजीवादभयं सम्पद्यतेऽटव्याम् ॥ १७ ॥

'अष्टौ लघुपाषाणान्' अष्ट क्षुद्रपाषाणान् 'दिशासु' पूर्वादिदिशासु 'परिजप्य' प्रकर्षेण जपित्वा 'निक्षिपेत्' स्थापयेत्। कः? 'धीमान्' बुद्धिमान्। 'चौरारिरौद्रजीवात्' तस्करशत्रुरौद्रजीवेभ्यः सकाशात् 'अभयं सम्पद्यते' निर्भयं भवति। क्व? 'अटव्याम्' अरण्ये॥

मन्त्रः—ॐ नमो भगवदो अरिट्ठनेमिस्स अरिट्ठेण बंधेण बंधामि रक्खसाणं भूयाणं खेयराणं चोराणं दाढीणं साइणीणं महोरगाणं अण्णे जे के वि दुट्ठा संभवंति तेसिं सव्वेसिं मणं मुहं गइं दिट्ठिं बंधामि धणु धणु महाधणु जः जः ठः ठः ठः हुं फट् । इत्यरिष्टनेमिमन्त्रं प्राकृतम् ॥

स्मरबीजयुतं शून्यं तत्त्वैनैंकारवेष्टितम् ।
बाह्येऽष्टदलमम्भोजं नित्यक्लिन्ने! मदद्रवे! ॥ १८ ॥

मदनातुरे! वषडिति विलिखेत् स्वाहान्तविनयपूर्वेण ।
त्रिभुवनवश्यमवश्यं प्रतिदिवसं भवति संजपतः ॥ १९ ॥

'स्मरबीजयुतम्' क्लींकारयुतम् । किं तत्? 'शून्यं' हकारम् । एवं ह्क्लीं इति बीजम् । पुनः कथम्भूतम्? 'तत्त्वैनैंकारवेष्टितम्' ह्रींकारेणैंकारेण वेष्टितम् । 'बाह्ये' तदैंकारबाह्ये 'अष्टदलमम्भोजम्' अष्टदलकमलं लिखेत् । 'नित्यक्लिन्ने! मदद्रवे! मदनातुरे! वषड्' इति मन्त्रं तद्दलेषु लिखेत् । 'स्वाहान्तविनयपूर्वेण' स्वाहाशब्दमन्त्यं ॐकारं पूर्वं कृत्वा लिखेत् । 'त्रिभुवनवश्यम्' भुवनत्रयवश्यम् 'अवश्यं' निश्चितम् 'प्रतिदिवसम्' दिनं दिनं प्रति 'भवति' स्यात् । 'संजपतः' सम्यग् जपं कुर्वतः पुरुषस्य ॥

मन्त्रोद्धारः—ॐ ह्क्लीं ह्रीं ऐँ नित्यक्लिन्ने! मदद्रवे! मदनातुरे! ममामुकीं वश्याकृष्टिं कुरु कुरु वषट् स्वाहा॥

वर्णान्तं मदनयुतं वाग्भवपरिसंस्थितं वसुदलाब्जम् ।
दिक्षु विदिक्षु च मायावाग्भवबीजं ततो लेख्यम् ॥ २० ॥

'वर्णान्तं' वर्णस्यान्तो वर्णान्तः हकारः तं हकारम् । कथम्भूतम्? 'मदनयुतम्' क्लींकारयुतम् । ह्क्लीं इति । 'वाग्भवपरिसंस्थितम्' ऐंकारसमन्तात् स्थितम् । 'वसुदलाब्जम्' तदैंकाराद् बहिरष्टदलपद्मम् । 'दिक्षु विदिक्षु च मायावाग्भवबीजम्' प्राच्यादिचतुर्दिशासु ह्रींकारबीजम्, आग्नेय्यादिचतुर्विदिशासु च ऐँकारबीजम् 'ततो लेख्यम्' तस्माल्लेखनीयम् ॥

त्रैलोक्यक्षोभणं यन्त्रं सर्वदा पूजयेदिदम् ।
हस्ते बद्धं करोत्येव त्रैलोक्यजनमोहनम् ॥ २१ ॥

'त्रैलोक्यक्षोभणं' त्रैलोक्यवर्तिजनक्षोभकारि 'यन्त्रं' एतत् कथितयन्त्रम् । 'सर्वदा' सर्वकालं पूजयेत 'इदम्' एतद् यन्त्रम् । 'हस्ते बद्धं' बाहौ बद्धम् 'करोत्येव' अवश्यं करोति 'त्रैलोक्यजनमोहनम्' त्रैलोक्यान्तर्वर्तिजनानां मोहनम् ॥ मन्त्रोद्धारः—ॐ ऐँ ह्रीं देवदत्तस्य सर्वजनवश्यं कुरु कुरु वषट् ॥

भ्रमयुगलं केशि भ्रम माते भ्रम विभ्रमं च मुह्यपदम् ।
मोहय पूर्णैः स्वाहा मन्त्रोऽयं प्रणवपूर्वगतः ॥ २२ ॥

'भ्रमयुगलम्' भ्रम भ्रम इतिपदद्वयम्। 'केशि भ्रम' केशि भ्रम केशि भ्रमेति पदद्वयम्। 'माते भ्रम' माते भ्रम माते भ्रमेति पदद्वयम्। 'विभ्रमं' विभ्रम विभ्रमेति पदद्वयम्। 'चः' समुच्चये। 'मुह्यपदम्' मुह्य मुह्येति पदद्वयम्। 'मोहय' मोहय मोहय इति पदद्वयम्। 'पूर्णः' सम्पूर्णः। 'स्वाहा' स्वाहेतिपदम्। 'मन्त्रोऽयम्' अयं मन्त्रः 'प्रणवपूर्वगतः' ॐकारपूर्वकः॥

अस्य मन्त्रोद्धारः—ॐ भ्रम भ्रम केशि भ्रम केशि भ्रम माते भ्रम माते भ्रम विभ्रम विभ्रम मुह्य मुह्य मोहय मोहय स्वाहा॥

एतेन लक्षमेकं भूमिमसम्प्राप्तसर्षपैर्जप्त्वा।
क्षिप्ते गृहदेहल्यामकालनिद्रां जनः कुरुते॥ २३॥

'एतेन' कथितमन्त्रेण। 'लक्षमेकम्' एकं लक्षम्। 'भूमिमसम्प्राप्तसर्षपैः' भूम्यपतितसिद्धार्थैः। 'जप्त्वा' जपं कृत्वा। 'क्षिप्ते' निक्षिप्ते सति। क्व? 'गृहदेहल्याम्' गृहोदुम्बरके। किं करोति? 'अकालनिद्रां' आकस्मिकनिद्राम्। 'जनः' लोकः। 'कुरुते' कुर्यात्॥

मृतविधवाब्राह्मण्याः पादतलालक्तकेन परिलिखितम्।
तद्वक्त्रपिहितवस्त्रे विधवारूपं निराभरणम्॥ २४॥

'मृतविधवा' पञ्चत्वप्राप्तरण्डायाः, कस्याः? 'ब्राह्मण्याः' द्विजकुलप्रसूतायाः। 'पादतलालक्तकेन' तस्याः पादतलालक्तकेन। 'परिलिखितं' समन्ताल्लिखितम्। क्व? 'तद्वक्त्रपिहितवस्त्रे' तन्मृतरण्डामुखप्रच्छादितवसने। कम्? 'विधवारूपम्' रण्डारूपम्। 'निराभरणम्' आभरणरहितम्॥

प्रणवं विच्चे मोहे स्वाहान्तं सप्तलक्षजाप्येन।
एकाकिनी निशायां सिद्ध्यति सा यक्षिणी रण्डा॥ २५॥

'प्रणवं' ॐकारम्। कथम्भूतम्? 'विच्चे मोहे स्वाहान्तम्' विच्चे मोहे स्वाहाशब्दान्तम्। 'सप्तलक्षजाप्येन' सप्तलक्षप्रमाणमेतन्मन्त्रजापेन। 'एकाकिनी' एकाकिनी भूत्वा। 'निशायां' रात्रौ। 'सिद्ध्यति' सिद्धिं प्राप्नोति। कासौ? 'यक्षिणी रण्डा' सा रण्डा यक्षिणी॥ मन्त्रः—ॐ विच्चे मोहे स्वाहा॥

यत् साधकाभिलषितं तत् तस्मै वस्तु[1] सा ददात्येव।
क्षोभं प्रयान्ति रण्डाः सर्वा अपि भुवनवर्तिन्यः॥ २६॥

'यत् साधकाभिलषितम्' यत् किञ्चित् साधकपुरुषस्य मनोवाञ्छितम्। 'तत्' तद्वस्तु 'तस्मै' तस्मै साधकाय। 'सा ददात्येव,' सा यक्षिणी न केवलं वस्त्वेव ददाति, अपि तु 'क्षोभं प्रयान्ति' क्षोभं गच्छन्ति। काः? 'रण्डाः' विधवाः। 'सर्वा अपि भुवनवर्तिन्यः' समस्ता अपि भुवनाभ्यन्तरवर्तिन्यः॥

---

१ निश्चितं इति ख पाठः।

तत्त्वं मन्मथबीजस्य तलोपरि विचिन्तयेत् ।
पार्श्वयोरेव लंपिण्डं भ्रमन्तमरुणप्रभम् ॥ २७ ॥

'तत्त्वं' ह्रींकारम् । 'मन्मथबीजस्य' कामदेवबीजस्य क्लींकारस्य । 'तलोपरि' ततः क्लींकाराधोपरिप्रदेशे ह्रीं ह्रीमिति । 'पार्श्वयोः' तत्क्लींकारोभयपार्श्वयोः । एव । 'लं पिण्डं' क्लैंकारम् । 'विचिन्तयेत्' ध्यानं कुर्यात् । कथम्भूतम् ? 'भ्रमन्तं' चक्रवद् भ्राम्यन्तम् । पुनः कथम्भूतम् ? 'अरुणप्रभम्' जपाकुसुमवर्णम् ॥

योनौ क्षोभं मूर्धनि विमोहनं पातनं ललाटस्थम् ।
लोचनयुग्मे द्रावं ध्यानेन करोतु वनितानाम् ॥ २८ ॥

'योनौ क्षोभम्' तदक्षरत्रयात्मके चक्राकारे वनितायोनौ ध्याने कृते वनिता क्षोभं प्रयाति । 'मूर्धनि विमोहनम्' तदेव ध्यानं वनितामस्तके कृते स्त्री मोहनम् । 'पातनं ललाटस्थम्' तदेव ध्यानं वनिताललाटे कृते सति सा विह्वलीभवति । 'लोचनयुग्मे द्रावम्' तदेव ध्यानं वनितादृष्टियुग्मे कृते सति द्रावो भवति । 'ध्यानेन' अनेन कथितध्यानेन । 'करोतु' क्षोभमित्यादि कर्म कुर्यात् । कासाम् ? 'वनितानाम्' स्त्रीणाम् ॥

शीर्षास्यहृदयनाभौ पादे चानङ्गबाणमथ योज्यम् ।
सम्मोहनमनुलोम्ये विपरीते द्रावणं कुर्यात् ॥ २९ ॥

'शीर्षे' मस्तके 'आस्ये' वदने 'हृदये' हृत्प्रदेशे 'नाभौ' नाभिप्रदेशे । 'पादे' पादयोः । 'चः' समुच्चये । 'अनङ्गबाणम्' द्रां द्रीं क्लीं ब्लूँ सः इति पञ्चबाणान् । 'अथ योज्यम्' शीर्षादिषु पञ्चस्थानेषु क्रमेण योजनीयम् । 'सम्मोहनमनुलोम्ये' मूर्धादिपादान्तध्यानेन सम्मोहनम् । 'विपरीते द्रावणं कुर्यात्' तानेव पञ्च बाणान् पादादारभ्य क्रमेण मस्तकपर्यन्तं ध्यात्वा द्रावणं कुर्यात् । द्राँ द्रीँ क्लीँ ब्लूँ सः इत्यङ्गानुलोमस्थापने पञ्च बाणाः ॥

दद्यात् ताम्बूलगन्धादीन् स्मरबाणाभिमन्त्रितान् ।
क्षालयेदात्मवक्त्रं च स स्त्रीणां मन्मथो भवेत् ॥ ३० ॥

'दद्यात्' ददातु । कान् ? 'ताम्बूलगन्धादीन्' तांबूलश्रीखण्डगन्धपुष्पफलादीन् । कथम्भूतान् ? 'स्मरबाणाभिमन्त्रितान्' कामबाणमन्त्रेणाभिमन्त्रितान् । न केवलं ताम्बूलादीन्येव दीयन्ते 'क्षालयेदात्मवक्त्रं च' तन्मन्त्रेणोदकमभिमन्त्र्य स्ववदनं प्रक्षालयेच्च । 'सः' एवंविधः पुरुषः । 'स्त्रीणाम्' वनितानाम् । 'मन्मथः' कामदेवो 'भवेत्' ।

तत्पुष्पाभिमन्त्रण मन्त्रोद्धारः—ॐ द्राँ द्रीँ क्लीँ ब्लूँ सः ह्स्क्लीँ ऐँ नित्यक्लिन्ने ! मदद्रवे ! मदनातुरे ! [1]सर्वजनं मम वश्यं कुरु कुरु वषट् ॥

विचिन्तयेदेव लपिण्डमेकं सिन्दूरवर्णं वनितावराङ्गे ।
तद् द्रावणं दृष्टिनिपातमात्रात् स्त्र्याकर्षणं सप्तदिनानि मध्ये ॥ ३१ ॥

१ ह्रीं इति ख पाठः ।
२ सप्ताहतोऽप्यानयनं करोति । क पाठः ।

'विचिन्तयेत्' विशेषेण चिन्तयेत्। कम्? 'एव लपिण्डमेकम्' क्लेंकारमेकम्। कथम्भूतम्? 'सिन्दूरवर्णं' सिन्दूरसदृशवर्णम्। क्व? 'वनितावराङ्गे' स्त्रीणां योनौ। 'तद् द्रावणं' तच्चिन्तनं द्रावणं करोति। कस्मात्? 'दृष्टिनिपातमात्रात्' ध्यानकर्तुः दृष्टिनिपातमात्रात्। न केवलं द्रावं मोहं च करोति, [1]'स्त्र्याकर्षणं सप्तदिनानि मध्ये' सप्तदिनानां मध्ये स्त्र्याकर्षणं करोति॥

ब्राह्मणमस्तककेशैः कृत्वा रज्जुं तया नरकपालम्।
आवेष्ट्य साध्यदेहोद्वर्त्तनमलकेशनखरपादरजः ॥३२॥

मनुजास्थिचूर्णमिश्रं कृत्वा तन्निक्षिपेत् पुरोक्तपुटे[2]।
ज्वरयति मन्त्रस्मरणात् सप्ताहादस्थिमथनेन ॥३३॥ ॥ युगलम् ॥

'ब्राह्मणमस्तककेशैः' द्विजशिरोरुहैः। 'कृत्वा रज्जुम्' तच्छिरोरुहैः रज्जुं कृत्वा। 'तया' रज्ज्वा। 'नरकपालं' नृकपालपुटम्। 'आवेष्ट्य' समन्ताद् वेष्टयित्वा। 'साध्यदेहोद्वर्त्तनमलकेशनखरपादरजः' साध्यपुरुषस्य शरीरोद्वर्त्तनमल-शिरोरुहनखपादरेणून् गृहीत्वा 'मनुजास्थिचूर्णमिश्रम्' नरास्थिचूर्णमिश्रम्। 'कृत्वा' विधाय। 'तत्' मलादिचूर्णम्। 'निक्षिपेत्' स्थापयेत्। क्व? 'पुरोक्तपुटे' प्रागुक्तनृकपालपुटे। 'ज्वरयति' साध्यपुरुषं ज्वरेण गृह्णाति। कस्मात्? 'मन्त्रस्मरणात्' ॐ चण्डेश्वर! इत्यादिमन्त्रचिन्तनात्। कथम्? 'सप्ताहात्' सप्तदिनमध्यतः। केन! 'अस्थिमथनेन' पुरुषास्थिकीलकमथनेन।

मन्त्रोद्धारः—ॐ चण्डेश्वर! चण्डकुटारेण अमुकं ज्वरेण ह्रौं गृह्ण गृह्ण मारय मारय हूं फट् घे घे॥

चण्डेश्वराय होमान्तं सञ्जपेद् विनयादिना।
सहस्रदशकं मन्त्री पूर्वमारुणपुष्पकैः ॥३४॥

'चण्डेश्वराय' चण्डेश्वरायेति पदम्। 'होमान्तम्' स्वाहाशब्दान्तम्। 'सञ्जपेत्' सम्यग्जपेत्। कथम्? 'विनयादिना' ॐकारपूर्वेण। 'सहस्रदशकं' दशसहस्रम्। कोऽसौ? 'मन्त्री' मन्त्रवादी। कथम्? 'पूर्वम्' पूर्वसेवायाम्। कैः? 'अरुणपुष्पकैः' रक्तकरवीरपुष्पैः॥

मन्त्रोद्धारः—ॐ चण्डेश्वराय स्वाहा॥ जाप्य सहस्रदश (१००००)

टान्तवकारप्रणवनजान्तार्द्धशशिप्रवेष्टितं नाम।
शीतोष्णज्वरहरणं स्यादुष्णहिमाम्बुनिष्क्षितम् ॥३५॥

'टान्तवकार' टान्तः–ठकारः। वकारः–व इत्यक्षरम्। 'प्रणवनम्' ॐकारम्। 'जान्तो' झकारः। 'अर्द्धशशिप्रवेष्टितम्' अर्द्धचन्द्राकाररेखावेष्टितं एतैः ठकारादिपञ्चभिः 'प्रवेष्टितम्' प्रकर्षेण वेष्टितम्। किं तत्? 'नाम' ज्वरगृहीतपुरुषनाम। 'शीतोष्णज्वरहरणं स्यादुष्णहिमाम्बुनिक्षिप्तं' एतद् यन्त्रं उष्णोदकमध्ये निक्षिप्तं शीतज्वरहरणं स्यात्, तदेव यन्त्रं शीतोदकमध्ये निक्षिप्तं उष्णज्वरहरणं स्यात्॥

इदानीं होमद्रव्यविधानमभिधीयते--

१ 'सप्ताहतोऽप्यानयनं करोति' सप्तदिवसानां मध्ये स्त्र्याकर्षणं करोति। क पाठः।

२ कपालपुटे इति ख पाठः।

तत्त्वं मन्मथबीजस्य तलोपरि विचिन्तयेत् ।
पार्श्वयोरेव लंपिण्डं भ्रमन्तमरुणप्रभम् ॥ २७ ॥

'तत्त्वं' ह्रींकारम् । 'मन्मथबीजस्य' कामदेवबीजस्य क्लींकारस्य । 'तलोपरि' ततः क्लींकाराधोपरिप्रदेशे ह्रीं ह्रीमिति । 'पार्श्वयोः' तत्क्लींकारोभयपार्श्वयोः । एव । 'लं पिण्डं' क्लेंकारम् । 'विचिन्तयेत्' ध्यानं कुर्यात् । कथम्भूतम् ? 'भ्रमन्तं' चक्रवद् भ्राम्यन्तम् । पुनः कथम्भूतम् ? 'अरुणप्रभम्' जपाकुसुमवर्णम् ॥

योनौ क्षोभं मूर्धनि विमोहनं पातनं ललाटस्थम् ।
लोचनयुग्मे द्रावं ध्यानेन करोतु वनितानाम् ॥ २८ ॥

'योनौ क्षोभम्' तदक्षरत्रयात्मके चक्राकारे वनितायोनौ ध्याने कृते वनिता क्षोभं प्रयाति । 'मूर्धनि विमोहनम्' तदेव ध्यानं वनितामस्तके कृते स्त्री मोहनम् । 'पातनं ललाटस्थम्' तदेव ध्यानं वनिताल्ललाटे कृते सति सा विह्वलीभवति । 'लोचनयुग्मे द्रावम्' तदेव ध्यानं वनितादृष्टियुग्मे कृते सति द्रावो भवति । 'ध्यानेन' अनेन कथितध्यानेन । 'करोतु' क्षोभमित्यादि कर्म कुर्यात् । कासाम् ? 'वनितानाम्' स्त्रीणाम् ॥

शीर्षास्यहृदयनाभौ पादे चानङ्गबाणमथ योज्यम् ।
सम्मोहनमनुलोम्ये विपरीते द्रावणं कुर्यात् ॥ २९ ॥

'शीर्षे' मस्तके 'आस्ये' वदने 'हृदये' हृत्प्रदेशे 'नाभौ' नाभिप्रदेशे । 'पादे' पादयोः । 'चः' समुच्चये । 'अनङ्गबाणम्' द्रां द्रीं क्लीं ब्लूँ सः इति पञ्चबाणान् । 'अथ योज्यम्' शीर्षादिषु पञ्चस्थानेषु क्रमेण योजनीयम् । 'सम्मोहनमनुलोम्ये' मूर्धादिपादान्तध्यानेन सम्मोहनम् । 'विपरीते द्रावणं कुर्यात्' तानेव पञ्च बाणान् पादादारभ्य क्रमेण मस्तकपर्यन्तं ध्यात्वा द्रावणं कुर्यात् । द्राँ द्रीं क्लीं ब्लूं सः इत्यङ्गानुलोमस्थापने पञ्च बाणाः ॥

दद्यात् ताम्बूलगन्धादीन् स्मरबाणाभिमन्त्रितान् ।
क्षालयेदात्मवक्त्रं च स स्त्रीणां मन्मथो भवेत् ॥ ३० ॥

'दद्यात्' ददातु । कान् ? 'ताम्बूलगन्धादीन्' तांबूलश्रीखण्डगन्धपुष्पफलादीन् । कथम्भूतान् ? 'स्मरबाणाभिमन्त्रितान्' कामबाणमन्त्रेणाभिमन्त्रितान् । न केवलं ताम्बूलादीन्येव दीयन्ते 'क्षालयेदात्मवक्त्रं च' तन्मन्त्रेणोदकमभिमन्त्र्य स्ववदनं प्रक्षालयेच्च । 'सः' एवंविधः पुरुषः । 'स्त्रीणाम्' वनितानाम् । 'मन्मथः' कामदेवो 'भवेत्' ।

तत्पुष्पाभिमन्त्रण मन्त्रोद्धारः—ॐ द्राँ द्रीं क्लीं ब्लूँ सः ह्स्क्लीं ऐं नित्यक्लिन्ने ! मदद्रवे ! मदनातुरे ! [१]सर्वजनं मम वश्यं कुरु कुरु वषट् ॥

विचिन्तयेदेव लपिण्डमेकं सिन्दूरवर्णं वनितावराङ्गे ।
तद् द्रावणं दृष्टिनिपातमात्रात् स्त्र्याकर्षणं [२]सप्तदिनानि मध्ये ॥ ३१ ॥

---

१ ह्रीं इति ख पाठः ।
२ सप्ताहतोऽप्यानयनं करोति । क पाठः ।

'विचिन्तयेत्' विशेषेण चिन्तयेत्। कम्? 'एव लपिण्डमेकम्' क्लेंकारमेकम्। कथम्भूतम्? 'सिन्दूरवर्णं' सिन्दूरसदृशवर्णम्। क्व? 'वनितावराङ्गे' स्त्रीणां योनौ। 'तद् द्रावणं' तच्चिन्तनं द्रावणं करोति। कस्मात्? 'दृष्टिनिपातमात्रात्' ध्यानकर्तुः दृष्टिनिपातमात्रात्। न केवलं द्रावं मोहं च करोति, [1]'स्त्र्याकर्षणं सप्तदिनानि मध्ये' सप्तदिनानां मध्ये स्त्र्याकर्षणं करोति॥

ब्राह्मणमस्तककेशैः कृत्वा रज्जुं तया नरकपालम्।
आवेष्ट्य साध्यदेहोद्वर्त्तनमलकेशनखरपादरजः॥३२॥

मनुजास्थिचूर्णमिश्रं कृत्वा तन्निक्षिपेत् पुरोक्त[2]पुटे।
ज्वरयति मन्त्रस्मरणात् सप्ताहादस्थिमथनेन॥३३॥ ॥युगलम्॥

'ब्राह्मणमस्तककेशैः' द्विजशिरोरुहैः। 'कृत्वा रज्जुम्' तच्छिरोरुहैः रज्जुं कृत्वा। 'तया' रज्ज्वा। 'नरकपालं' नृकपालपुटम्। 'आवेष्ट्य' समन्ताद् वेष्टयित्वा। 'साध्यदेहोद्वर्त्तनमलकेशनखरपादरजः' साध्यपुरुषस्य शरीरोद्वर्त्तनमल-शिरोरुहनखपादरेणून् गृहीत्वा 'मनुजास्थिचूर्णमिश्रम्' नरास्थिचूर्णमिश्रम्। 'कृत्वा' विधाय। 'तत्' मलादिचूर्णम्। 'निक्षिपेत्' स्थापयेत्। क्व? 'पुरोक्तपुटे' प्रागुक्तनृकपालपुटे। 'ज्वरयति' साध्यपुरुषं ज्वरेण गृह्णाति। कस्मात्? 'मन्त्रस्मरणात्' ॐ चण्डेश्वर! इत्यादिमन्त्रचिन्तनात्। कथम्? 'सप्ताहात्' सप्तदिनमध्यतः। केन! 'अस्थिमथनेन' पुरुषास्थिकीलकमथनेन।

मन्त्रोद्धारः—ॐ चण्डेश्वर! चण्डकुठारेण अमुकं ज्वरेण ह्रौं गृह्ण गृह्ण मारय मारय हूं फट् घे घे॥

चण्डेश्वराय होमान्तं सञ्जपेद् विनयादिना।
सहस्रदशकं मन्त्री पूर्वमारुणपुष्पकैः॥३४॥

'चण्डेश्वराय' चण्डेश्वरायेति पदम्। 'होमान्तम्' स्वाहाशब्दान्तम्। 'सञ्जपेत्' सम्यग्जपेत्। कथम्? 'विनयादिना' ॐकारपूर्वेण। 'सहस्रदशकं' दशसहस्रम्। कोऽसौ? 'मन्त्री' मन्त्रवादी। कथम्? 'पूर्वम्' पूर्वसेवायाम्। कैः? 'अरुणपुष्पकैः' रक्तकरवीरपुष्पैः॥

मन्त्रोद्धारः—ॐ चण्डेश्वराय स्वाहा॥ जाप्य सहस्रदश (१००००)

टान्तवकारप्रणवनजान्तार्द्धशशिप्रवेष्टितं नाम।
शीतोष्णज्वरहरणं स्यादुष्णहिमाम्बुनिष्क्षितम्॥३५॥

'टान्तवकार' टान्तः-ठकारः। वकारः-व इत्यक्षरम्। 'प्रणवनम्' ॐकारम्। 'जान्तो' झकारः। 'अर्द्धशशिप्रवेष्टितम्' अर्द्धचन्द्राकाररेखावेष्टितं एतैः ठकारादिपञ्चभिः 'प्रवेष्टितम्' प्रकर्षेण वेष्टितम्। किं तत्? 'नाम' ज्वरगृहीतपुरुषनाम। 'शीतोष्णज्वरहरणं स्यादुष्णहिमाम्बुनिक्षिप्तं' एतद् यन्त्रं उष्णोदकमध्ये निक्षिप्तं शीतज्वरहरणं स्यात्, तदेव यन्त्रं शीतोदकमध्ये निक्षिप्तं उष्णज्वरहरणं स्यात्॥

इदानीं होमद्रव्यविधानमभिधीयते--

---

१ 'सप्ताहतोऽप्यानयनं करोति' सप्तदिवसानां मध्ये स्त्र्याकर्षणं करोति। क पाठः।

२ कपालपुटे इति ख पाठः।

शाल्यक्षतदूर्वाङ्कुरमलयजहोमेन शान्तिकं पुष्टिम् ।
करवीरपुष्पहवनात् स्त्रीणां कुर्याद् वशीकरणम् ॥ ३६ ॥

'शाल्यक्षतदूर्वाङ्कुरमलयजहोमेन' कलमाक्षतश्वेतदूर्वाङ्कुरश्रीगन्धद्रव्यहवनेन। 'शान्तिकं पुष्टिम्' शान्तिकर्म पुष्टिकर्म च कुर्यात्। 'करवीरपुष्पहवनात्'। 'स्त्रीणां' वनितानाम्। 'वशीकरणं' वश्यकर्म कुर्यात्॥

महिषाक्षपद्महोमात् प्रतिदिवसं भवति पुरजनक्षोभः ।
क्रमुकफलपत्रहवनात् राजानो वश्यमायान्ति ॥ ३७ ॥

'महिषाक्षपद्महोमात्' गुग्गुलपद्महवनात्। 'प्रतिदिवसं भवति पुरजनक्षोभः' दिनं दिनं प्रति पुरजनक्षोभो भवति। 'क्रमुकफलपत्रहवनात्' पूगफलनागवल्लीपत्रहवनात्। 'राजानो वश्यमायान्ति' सर्वे पार्थिवा वश्यं गच्छन्ति॥

तिलधान्यानां होमैराज्ययुतैर्भवति धान्यधनवृद्धिः ।
मल्लिप्रसूनहोमात् सघृताद् वश्या नियोगिजनाः ॥ ३८ ॥

'तिलधान्यानां होमैः' तिलादिधान्यहवनैः। कथम्भूतैः ? 'आज्ययुतैः' घृतान्वितैः। 'भवति धान्यधनवृद्धिः' धान्यधनवृद्धिः स्यात्। 'मल्लिप्रसूनहोमात्' मल्लिकापुष्पहोमात्। कथम्भूतात् ? 'सघृतात्' गवाज्ययुक्तात्। 'वश्या नियोगिजनाः' नियोगिजना वश्या भवन्ति ॥

घृतयुक्तचूतफलनिकरहोमतो भवति खेचरी वश्या ।
वटयक्षिणी च होमाद् भवति वशा ब्रह्मपुष्पाणाम् ॥ ३९ ॥

'घृतयुक्तचूतफलनिकरहोमतः' आज्ययुताम्रफलसमूहहवनात्। 'भवति' स्यात्। 'खेचरी' खेचरी नाम देवी। 'वश्या' वश्या भवतीत्यर्थः। 'वटयक्षिणी च' वटयक्षिणी नाम देवी च। 'ब्रह्मपुष्पाणाम्' पलाशपुष्पाणाम्। 'हवनात्' होमात्। 'भवति वशा' वशीभवति ॥

गृहधूमनिम्बराजीलवणान्वितकाकपक्षकृतहोमैः ।
एकोदरजातानामपि भवति परस्परं वैरम् ॥ ४० ॥

'गृहधूम' आगारधूम। 'निम्बः' पिचुमन्दः। 'राजी' कृष्णसर्षपः। 'लवणम्' सामुद्रम्। 'अन्वितैः' एतैर्युक्तैः 'काकपक्षकृतहोमैः' वायसपक्षकृतहोमैः। 'एकोदरजातानाम्' एकोदरसमुत्पन्नपुरुषाणाम्। 'अपि' निश्चयेन। परस्परं वैरम्'। 'भवति' जायते ॥

प्रेतवनशल्यमिश्रितबिभीतकाङ्गारसद्मधूमानाम् ।
होमेन भवति मरणं पक्षाहाद् वैरिलोकस्य ॥ ४१ ॥

'प्रेतवनशल्यमिश्रितबिभीतकाङ्गारसद्मधूमानाम्' श्मशानास्थियुक्तभूतवृक्षाङ्गारगृहधूमानाम्। 'होमेन' हवनेन। 'भवति' जायते। किं तत् ? 'मरणम्' पञ्चत्वम्। कथम् ? 'पक्षाहात्' पक्षदिनमध्यतः। कस्य ? 'वैरिलोकस्य' शत्रुजनस्य॥

इत्युभयभाषाकविशेखरश्रीमल्लिषेणसूरिविरचिते
भैरवपद्मावतीकल्पे वश्यमन्त्राधिकारः
सप्तमः परिच्छेदः ॥ ७ ॥

## अष्टमो दर्पणादिनिमित्तपरिच्छेदः ॥८॥

**सिद्ध्यति सहस्रजाप्यैर्दशगुणितैः प्रणवपूर्वहोमान्तैः ।**
**दर्पणनिमित्तमन्त्रश्चले चुले चूले प्रभृतिनोच्चार्यः ॥ १ ॥**

'सिद्ध्यति' सिद्धिं प्राप्नोति । कैः ? 'सहस्रजाप्यैः' । कथम्भूतैः ? 'दशगुणितैः' दशसहस्रैरित्यभिप्रायः । पुनः कथम्भूतैः ? 'प्रणवपूर्वहोमान्तैः' ॐकारपूर्वस्वाहाशब्दान्त्यैः । 'दर्पणनिमित्तमन्त्रः' आदर्शनिमित्तमन्त्रः उच्चार्यः ॥

मन्त्रोद्धारः—ॐ चले चुले चूडे(ले) कुमारिकयोरङ्गं प्रविश्य यथाभूतं यथाभाव्यं यथासत्यं[१] मा विलम्बय ममाशां पूरय पूरय स्वाहा ॥

**सप्तवाराभिमन्त्रितगोदुग्धं पाययेत् कुमारिकयोः ।**
**ब्राह्मणकुलप्रसूत्योस्तयोर्द्वयोः सप्तवत्सरयोः ॥ २ ॥**

'सप्तवाराभिमन्त्रितम्' कथितमन्त्रेण सप्तवाराभिमन्त्रितम् । किम् ? 'गोदुग्धम्' गोक्षीरम् । 'पाययेत्' पानं कारयेत् । 'कुमारिकयोः' कन्ययोः । किंविशिष्टयोः ? 'ब्राह्मणकुलप्रसूत्योः' विप्रवंशसञ्जातयोः । पुनः कथम्भूतयोः ? 'सप्तवत्सरयोः' सप्तवार्षिकयोः । 'तयोर्द्वयोः' उभयोः ॥

**संस्नाप्य ततः प्रातर्दत्वा ताभ्यामथ प्रसूनादीन् ।**
**भूम्यामपतितगोमयसम्मार्जितभूतले स्थित्वा ॥ ३ ॥**

'संस्नाप्य' सम्यक्स्नपयित्वा । 'ततः' स्नानानन्तरम् । 'प्रातः' प्रभातसमये । दत्वा 'ताभ्याम्' कुमारीभ्याम् । 'अथ' पश्चात् । 'प्रसूनादीन्' पुष्पाक्षतानुलेपनादीन् । 'भूम्याम्' पृथिव्याम् । 'अपतितम्' न पतितम् । 'गोमयं' शकृत् । 'सम्मार्जित भूतले' तेन गोशकृता सम्यग्मार्जितभूतले । 'स्थित्वा' उषित्वा ॥

**चतुरस्रमण्डलस्थं कलशं गन्धोदकेन परिपूर्णम् ।**
**तस्योपर्यादर्शं निवेशयेत् पश्चिमाभिमुखम् ॥ ४ ॥**

'चतुरस्रमण्डलस्थम्' समचतुरस्रमण्डलमध्यस्थितम् । कं तम् ? 'कलशम्' घटम् । कथम्भूतम् ? 'गन्धोदकेन परिपूर्णम्' सुगन्धद्रव्यान्वितोदकेन परिपूर्णम् । 'तस्योपरि' तत्पूर्णकुम्भस्योपरि । 'आदर्शं' दर्पणम् । 'निवेशयेत्' स्थापयेत् । कथम् ? 'पश्चिमाभिमुखम्' प्रतीच्यभिमुखम् ॥

**तदभिमुखे प्राक्कल्पितकुमारिकायुगलमथ निवेश्य ततः ।**
**तद्हृदये ब्लूँकारं विचिन्तयेत् प्रणवसम्पुटितम् ॥ ५ ॥**

'अथ' पश्चात् । 'तदभिमुखे' तद्दर्पणाभिमुखे । 'प्राक्कल्पितकुमारिकायुगलम्' पूर्वं स्नानादिकसङ्कल्पितकन्याया युग्मम् । 'निवेश्य' तन्मण्डले संस्थाप्य । 'ततः' पश्चात् । 'तद्हृदये' तत्कुमारिकायुगलहृदये । 'ब्लूँकारं' ब्लूमिति बीजाक्षरम् । 'विचिन्तयेत्' विशेषेण ध्यायेत् । कथम् ? 'प्रणवसम्पुटितम्' ॐकारसम्पुटगतं । ॐ ब्लूँ ॐ इत्योंकारसम्पुटितम् ॥

---

१ दर्शय दर्शय भगवती इति ख पाठः ।

शशिमण्डलवत् सौम्यं तन्मन्त्रमनुस्मरन् स्वयं तिष्ठेत् ।
आदर्शवीक्ष्यमाणं कुमारिकायुगलकं पृच्छेत् ॥ ६ ॥

'शशिमण्डलवत् सौम्यं' चन्द्रमण्डलवत्सौम्यरूपम्। 'तन्मन्त्रम्' वक्ष्यमाणमन्त्रम्। 'अनुस्मरन् स्वयं तिष्ठेत्' मन्त्रवाग्यात्मना तिष्ठेत्। 'आदर्शवीक्ष्यमाणं कुमारिकायुगलकम्' कन्यकायुगलम्। 'पृच्छेत्' प्रष्टव्यम् ॥

यद् दृष्टं यच्छ्रुतं[1] ताभ्यां तत्र रूपं वचो यथा ।
खड्गाङ्गुष्ठे जलादर्शे तत् सत्यं नान्यथा भवेत् ॥७॥

'यद् दृष्टम्' यत् तत्र दृष्टम्। 'यच्छ्रुतम्' यत् तत्र श्रुतम्। 'ताभ्याम्' कुमारिकाभ्याम्। 'तत्र' मुकुरादि-निमित्ते। 'रूपं वचो यथा' येन प्रकारेण दृष्टं रूपम्, आकर्णितं वचनम्। क्व ? 'खड्गाङ्गुष्ठजलादर्शे' खड्गाङ्गुष्ठनिमित्ते, जलपूर्णकलशे, दर्पणनिमित्ते। 'तत् सत्यम्' यद् दृष्टम्, यच्छ्रुतं तत् सर्वं तथ्यम्। 'नान्यथा भवेत्' अन्ये प्रकारेणासत्यं किमपि न भवति ॥

दर्पणाङ्गुष्ठदीपादिनिमित्तमवलोकयेत् ।
सिध्यत्यष्टसहस्रेण मन्त्रो जाप्येन मन्त्रिणाम् ॥८॥

'दर्पणाङ्गुष्ठदीपादि निमित्तं अवलोकयेत्' निरीक्षेत। 'सिध्यति' सिद्धिं प्राप्नोति। 'अष्टसहस्रेण' सहस्राष्टकेन। कोऽसौ ? 'मन्त्रः' वक्ष्यमाणमन्त्रः। 'जाप्येन' जपनेन। केषाम् ? 'मन्त्रिणाम्' मन्त्रवादिनाम्। तदाराधनमन्त्रोद्धारः:—ॐ नमो मेरु महामेरु, ॐ नमो गौरी महागौरी, ॐ नमः काली महाकाली, ॐ इन्द्रे महाइन्द्रे, ॐ जये महाजये, ॐ नमो विजये महाविजये, ॐ नमः पण्णसमणि महापण्णसमणि, अवतर अवतर देवि अवतर अवतर[2] स्वाहा ॥

दत्वा दर्भास्तरणं दुग्धाहारं पुरा कुमारिकयोः ।
संस्नाप्य ततः प्रातर्धवलाम्बरभूषणादीनि ॥ ९ ॥

'दत्वा'। किम् ? 'दर्भास्तरणम्' दर्भशय्याम्। 'दुग्धाहारम्' क्षीराहारम्। कथम् ? 'पुरा' निशि प्रथमयामे। कयोः ? 'कुमारिकयोः'। 'ततः' तदनन्तरम्। 'प्रातः' प्रभातसमये। 'संस्नाप्य' सम्यक्स्नपयित्वा। 'धवलाम्बर-भूषणादीनि' श्वेतवस्त्रालङ्करणादीनि ॥

कलशादर्शकुमारीस्थानेष्वथ विन्यसेदिमं मन्त्रम् ।
विनयं गजवशकरणं क्षांक्षींक्षूंकारहोमान्तम् ॥ १० ॥

'कलशादर्शकुमारीस्थानेषु' कलशस्थापने, दर्पणस्थापने, कुमारीस्थापने, एतेषु स्थानेषु। 'अथ' पश्चात्।

---

१ यत् श्रुतं इति ख पाठः।
२ ह्रीं स्वाहा इति ख पाठः।

'विन्यसेत्'। कम्? 'इमं मन्त्रम्' वक्ष्यमाणमन्त्रम्। 'विनयं गजवशकरणं क्षाँ क्षीँ क्षूँकारहोमान्तम्' उँकारं विनय इति सञ्ज्ञम्, गजवशकरणं–क्रोंकारम्, क्षांकारम्, क्षींकारम्, क्षूंकारम् 'होमान्तम्' स्वाहाशब्दान्तम्॥ स्थानत्रयसंस्थापनमन्त्रोद्धारः—उँ क्रोँ क्षाँ क्षीँ क्षूँ स्वाहा। एतन्मन्त्रं स्थानत्रये विन्यसेत्॥

प्रणवादिपञ्चशून्यैरभिमन्त्र्य कुमारिकाकुचस्थाने।
अशितुं तयोश्च दद्याद् घृतेन सम्मिश्रितान् पूपान्॥११॥

'प्रणवादिपञ्चशून्यैः' उँकारादि ह्राँ ह्रीँ ह्रूँ ह्रौँ ह्रः इति पञ्चशून्यैः। 'अभिमन्त्र्य' मन्त्रयित्वा। क्व? 'कुमारिका-कुचस्थाने' कन्यास्तनयुगलस्थाने। 'तयो.' द्वयोः कुमारिकयोः। 'च' पुनः। 'अशितुम्' भक्षयितुम्। 'दद्यात्' दातव्यम्। कान्? 'पूपान्' पोलिकाः। कथम्भूतान्? 'घृतेन सम्मिश्रितान्' आज्ययुक्तान्॥

आलक्तकाभिरञ्जितहस्ताङ्गुष्ठे निरीक्षयेद् रूपम्।
करनिर्वर्तिततैलेनाङ्गुष्ठस्नानकरणेन॥१२॥

'आलक्तकाभिरञ्जितहस्ताङ्गुष्ठे' मन्त्रिदक्षिणकराङ्गुष्ठे। 'निरीक्षयेत्' अवलोकयेत्। किम्? 'रूपम्' प्रतिबिम्बम्। केन? 'करनिर्वर्तिततैलेन' हस्ताभ्यां मर्दिततैलेन। कथम्भूतेन? 'अङ्गुष्ठस्नानकरणेन' मन्त्र्यङ्गुष्ठेन तैलाभ्यक्तेन अङ्गुष्ठनिमित्तमिदम्॥

प्रणवः पिंगलयुगलं पण्णत्तिद्वितयं महाविद्येयम्।
टान्तद्वयं च होमो दर्पणमन्त्रो जिनोद्दिष्टः॥१३॥

'प्रणवः' उँकारः। 'पिंगलयुगलं' पिंगल पिंगलेतिपदद्वयम्। 'पण्णत्तिद्वयं च' पण्णत्ति पण्णत्तीतिपदद्वयं च। 'महाविद्येयम्' इयं महाविद्या। 'टान्तद्वयं' ठकारद्वयम्। 'च'। 'होमः' स्वाहा। इति 'दर्पणमन्त्रः' आदर्शमन्त्रः। 'जिनोद्दिष्टः' जिनेश्वरप्रणीतः॥ मन्त्रः—उँ पिंगल पिंगल पण्णत्ति पण्णत्ति[1] ठठ स्वाहा॥

जाप्यं भानुसहस्रैः सितपुष्पैश्चन्द्रकिरणसङ्काशैः।
सिद्ध्यति दशांशहोमादादर्शनिमित्तमन्त्रोऽयम्॥१४॥

'जाप्यं' जपम्। 'भानुसहस्रैः' द्वादशसहस्रैः। कैः? 'सितपुष्पैः' श्वेतप्रसूनैः। कथम्भूतैः? 'चन्द्रकिरणसङ्काशैः' चन्द्ररश्मिसन्निभैः। 'सिद्ध्यति' सिद्धिं याति। केन? 'दशांशहोमेन' द्वादशसहस्राणां दशांशहोमेन। 'आदर्शनिमित्त-मन्त्रोऽयम्' अयं मन्त्रः दर्पणनिमित्तसाधनम्॥

चितभस्मनैकविंशतिवारान् [2]सम्मर्द्य दर्पणं पूर्वम्।
शाल्यक्षतोपरि स्थितनवाम्बुपरिपूर्णनवकुम्भे॥१५॥

---

१ महाविद्ये ठः ठः इति ख पाठः।

१ विमृशेच इति क पाठः।

'चितभस्मनैकविंशतिवारान्'। 'सम्मर्द्य' मर्दयित्वा। कम्? दर्पणम्'। 'शाल्यक्षतोपरिस्थित' कलमाक्षत-पुञ्जोपरिस्थित। 'नवाम्बुपरिपूर्णनवकुम्भे' अम्रोदकपरिपूर्णनवकुम्भे ॥

तं प्रतिनिधाय तस्मिन्नेककुलोद्भूतकन्यकायुगलम्।
त्रिषु वर्णेष्वन्यतमं स्नातं धवलाम्बरोपेतम्॥ १६ ॥

'तं प्रतिनिधाय' तं आदर्शं कुम्भस्योपरि संस्थाप्य। 'तस्मिन्' तत्कुम्भसमीपे। 'एककुलोद्भूतकन्यकायुगलम्' एककुलजनितकन्यकायुग्मम्। किंविशिष्टम्? 'त्रिषु वर्णेष्वन्यतमं' ब्राह्मणक्षत्रियवैश्यानां मध्ये सत्कन्यकायुगलं प्राप्य, तदेकम्। पुनः कथम्भूतम्? 'स्नातम्' कृतस्नानम्। 'धवलाम्बरोपेतम्' श्वेतवस्त्रपरिधानान्वितम्॥

अभ्यर्च्य गन्धतन्दुलनिवेद्यकुसुमादिभिस्ततः कलशम्।
दत्वा ताम्बूलादीन् आदर्शं दर्शयेत् ताभ्याम् ॥ १७ ॥

'अभ्यर्च्य' सम्यग् अर्चयित्वा। कैः? 'गन्धतण्डुलनिवेद्यकुसुमादिभिः' गन्धाक्षतवरपुष्पदीपधूपाद्यष्टविधार्चन-द्रव्यैः। 'ततः' तस्मात्। 'कलशं' पूर्णकुम्भम्। 'दत्वा ताम्बूलादीन्' ताम्बूलगन्धाक्षतकुसुमादीन् दत्वा। 'आदर्शं दर्शयेत्'। 'ताभ्याम्' कुमारिकाभ्याम् ॥

मन्त्रं प्रपठंस्तिष्ठेत् कुमारिकायुगलकं तथा पृच्छेत्।
दृष्टं श्रुतं च कथयति रूपं वचनं च मुकुरान्ते ॥ १८ ॥

'मन्त्रं प्रपठन्' मन्त्रं उच्चारयन्। 'तिष्ठेत्' निवसेत्। 'कुमारिकायुगलकम्' कन्यकायुगलम्। 'तथा' तेन प्रकारेण। 'पृच्छेत्' प्रश्नं कुर्वीत। 'दृष्टं श्रुतं च कथयति' यद् दृष्टं यच्छ्रुतं तत्सर्वं कथयति। 'रूपं वचनं च मुकुरान्ते' आदर्शे यद् दृष्टं रूपं यच्छ्रुतं वचनं तत्कथयति ॥ इति दर्पणावतारः।

इदानीं दीपनिषद्या कथ्यते—

अष्टसहस्रैर्जातीपुष्पैः श्रीवीरनाथजिनपुरतः।
जप्ते सुन्दरदेवी सिद्ध्यति मन्त्रेण सद्भक्त्या ॥ ॥ १९ ॥

'अष्टसहस्रैः' सहस्राष्टकैः। 'जातीपुष्पैः' मालतीप्रसूनैः। 'श्रीवीरनाथजिनपुरतः' श्रीवर्द्धमानस्वामिजिनस्याग्रे। 'जप्ते' जाप्ये कृते सति। 'सुन्दरदेवी' सुन्दरीनाम देवी। 'सिद्ध्यति' सिद्धिं प्राप्नोति। केन? 'मन्त्रेण' वक्ष्यमाण-मन्त्रेण। कथम्? 'सद्भक्त्या' सद्भक्तिविशेषेण ॥

आराधनामन्त्रोद्धारः—ॐ सुन्दरि! [1]परमसुन्दरि! स्वाहा।

ब्रह्मादिसुन्दरीशब्दं होमान्तं कर्णिकान्तरे।
अष्टपत्रेषु सर्वेषु लिखेत् परमसुन्दरी ॥ २० ॥

'ब्रह्मादिसुन्दरीशब्दं' ॐकारादि सुन्दरीपदम्। 'होमान्तं' स्वाहान्तम्। 'कर्णिकान्तरे' ॐ सुन्दरि! स्वाहा इति

१ महासुन्दरि! इति ख पाठः।

कर्णिकाभ्यन्तरे लिखेत्। 'अष्टपत्रेषु सर्वेषु' तत्कर्णिकाबहिःप्रदेशे अष्टदलेषु। 'लिखेत् परमसुन्दरी' ॐ परमसुन्दरी स्वाहा इति पदं प्रत्येकं सर्वदलेषु लिखेत् ॥

कृष्णतिलतैलपूर्णे कुलालकरमृत्तिकाकृते पात्रे।
आलक्तककृतवर्त्या दीपे न्यग्रोधवह्निभवे ॥ २१ ॥

'कृष्णतिलतैलपूर्णे' कृष्णतिलोद्भूततैलसम्पूर्णे। पुनः कथम्भूते ? 'कुलालकरमृत्तिकाकृते' कुम्भकारकराग्रगृहीतमृत्तिकया कृते। कस्मिन् ? 'पात्रे' दीपपात्रे। 'आलक्तककृतवर्त्या' आलक्तकपटलावेष्टितवर्त्या। 'दीपे' प्रदीपे। कथम्भूते ? 'न्यग्रोधवह्निभवे' वटवृक्षकाष्ठजनिताग्निप्रज्वलिते। कुमारिकाद्यष्टविधार्चनं प्राक्कथितविधानवज्ज्ञात्वा कर्तव्यम्। दीपनिमित्तमिदम् ॥

इदानीं कर्णपिशाचीविधानमभिधीयते —

श्रवणपिशाचिनि मुण्डे ! स्वाहान्तः प्रणवपूर्वकोच्चार्यः।
सिद्ध्यति च लक्षजाप्यात् कर्णपिशाचीत्ययं मन्त्रः ॥ २२ ॥

'श्रवणपिशाचिनि मुण्डे !' श्रवणपिशाची मुण्डे ! इति पदम्। 'स्वाहान्तः' स्वाहाशब्दान्त्यः। पुनः कथम्भूतः ? 'प्रणवपूर्वकोच्चार्यः' ॐकारमादिं कृत्वोच्चारितः। 'सिद्ध्यति च लक्षजाप्यात्' लक्षप्रमाणजाप्यात् सिद्धिं प्राप्नोति। 'कर्णपिशाचीत्ययं मन्त्रः' अयं मन्त्रः कर्णपिशाची नाम स्यात् ॥

मन्त्रोद्धारः—ॐ [1]श्रवणपिशाचिनि मुण्डे ! स्वाहा ॥

मन्त्रपरिजप्तकुष्ठं हृन्मुखकर्णाङ्घ्रियुगलमालिप्य।
सुप्तस्य कर्णमूले कथयति यच्चिन्तितं कार्यम् ॥ २३ ॥

'मन्त्रपरिजप्तकुष्ठं' कर्णपिशाचिनीमन्त्रेणैकविंशतिवाराभिमन्त्रितं कुष्ठं उदकपेषितम्। 'हृन्मुखकर्णाङ्घ्रियुगलमालिप्य' एतेनोदकेन पिष्टकुष्ठेन हृदयवदनश्रवणयुगलपादयुगलानि लेपयित्वा। 'सुप्तस्य' निद्रितस्य। 'कर्णमूले' श्रवणमूले। 'कथयति' वदति। 'यच्चिन्तितं कार्यं' यद् अतीतानागतवर्त्तमानेप्सितं प्रयोजनम् ॥

[2]मलयूंकारचतुर्दशकलान्वितं कूटबीजकं विलिखेत।
शिखिवायुमण्डलस्थं सनामखरताडपत्रगतम् ॥ २४ ॥

'मलयूंकारचतुर्दशकलान्वितं' मश्च लश्च यूंकारश्च चतुर्दशकला च औकारः तैः 'अन्वितम्' आवृतं मलयूंकारचतुर्दशकलान्वितम्। कम् ? 'कूटबीजकं' क्षकारबीजकम्। एवं क्ष्म्ल्यूं ईदृशं बीजम्। 'विलिखेत्' एतद् बीजाक्षरं लिखेत्। कथम् ? 'शिखिवायुमण्डलस्थं' अग्निपुरवायुपुरमध्यस्थितम्। पुनरपि कथम्भूतम् ? 'सनामखरताडपत्रगतम्' देवदत्तनामान्वितखरताडपत्रे स्थितम् ॥

---

१ ॐ ह्रीं श्रवणपिशाचिनी इति ख पाठः।

२ मलवर्यूंकार इति ख पाठः।

मार्तण्डस्नुहिदुग्धं त्रिकटुकहयगन्धसद्मभवधूमैः ।
आलिप्य ललाटस्थं गृहिणां कुरुते गृहावेशम् ॥ २५ ॥

'मार्तण्डस्नुहिदुग्धं' अर्कक्षीरं, स्नुहीक्षीरम्। 'त्रिकटुकं' प्रसिद्धम्, 'हयगन्धा' अश्वगन्धा, 'सद्मभवधूमैः' गृहधूमैः । इत्यादिद्रव्यैः 'आलिप्य' तत्पत्रमालिप्य। 'ललाटस्थं' भालस्थम्। केषाम्? 'गृहिणां' गृहीतपुरुषाणाम्। 'कुरुते' करोति। कम्? 'गृहावेशम्' गृहावतारम् ॥

कुनटीगन्धकतालकचूर्णं कृत्वा सितार्कतूलेन।
संवेष्ट्य पद्मनालकसूत्रेण च वर्तिरिह कार्या ॥ २६ ॥

'कुनटी' मनःशिला, 'गन्धकः' प्रसिद्धः, 'तालकम्' गोदन्तचूर्णम्, 'कृत्वा' एतेषां द्रव्याणां चूर्णं कृत्वा। 'सितार्कतूलेन' श्वेतरविफलोद्भवतूलेन। 'संवेष्ट्य' तच्चूर्णं तत्तूलमध्ये सम्यग्वेष्टयित्वा, केवलं तेन 'पद्मनालकसूत्रेण च' पद्मनालोद्भवसूत्रेण परिवेष्ट्य च। 'वर्तिरिह कार्या' अनेन प्रकारेण वर्तिरिह वर्तव्या ॥

सा कङ्गुतैलभाव्या तया प्रदीपं विबोधयेन्मन्त्री ।
यत्राधोमुखमगमद्दीपस्तत्रास्ति वसुराशिः ॥ २७ ॥

'सा कङ्गुतैलभाव्या' सा कृता वर्तिः कङ्गुतैलेन भावनीया। 'तया' एवंविधवर्त्या। 'प्रदीपं' प्रकाशितदीपम्। 'विबोधयेत्' प्रज्वालयेत्। कः? 'मन्त्री' मन्त्रवादी। 'यत्राधोमुखमगमद्दीपः' तत्र यस्मिन् स्थले तद्दीपः अधोमुखं गच्छति 'तत्रास्ति वसुराशिः' तस्मिन् स्थले सुवर्णराशिरस्तीति ज्ञातव्यम् ॥

विनयादिप्रज्वलितज्योतिर्दिशायां मरुन्नभोऽन्तपदम् ।
प्रपठन् मनसा मन्त्रं प्रदीपमालोकयेन्मन्त्री ॥ २८ ॥

'विनयादि' ॐकारपूर्वम् 'प्रज्वलितज्योतिर्दिशायाम्' इति पदम्। पुनः कथम्भूतम्? 'मरुन्नभोऽन्तपदम्' स्वाहाशब्दान्वितम्। 'प्रपठन् मनसा मन्त्रं' एवं विशिष्टमन्त्रं मानसेनोच्चारयन्। 'प्रदीपं' प्रकृष्टं दीपम्। 'आलोकयेत्' विलोकयेत्। कः? 'मन्त्री' मन्त्रवादी ॥

मन्त्रोद्धारः—ॐ [1]ज्वलितज्योतिर्दिशायां स्वाहा। इयं दीपवर्तिः अश्वखुरे छुरिकायां वा प्रतिबोध्य संस्थाप्यावलोकनीया ॥

प्रायोर्वीशनदीनवग्रहनगव्याधिप्रसूनाक्षरा-
ण्येकीकृत्य नखान्वितं त्रिगुणितं तिथ्या पुनर्भाजितम् ।
ब्रूयादुद्धरिताच्छुभाशुभफलं वैषम्यसाम्ये सुधी-
रेतत् तथ्यमिहोदितं मुनिवरैर्भव्याब्जघर्मांशुभिः ॥ २९ ॥

---

१ ॐ ह्रीं प्रज्वलित इति ख पाठः।

'प्राय' बालयुववृद्धेति त्रिविधप्रायमध्ये नामैकम्, 'उर्वीश' सार्वभौमानां राज्ञां मध्ये नामैकं, 'नदी' गङ्गादिमहानदीनां मध्ये नामैकं, 'नवग्रह' आदित्यादिनवग्रहाणां मध्ये नामैकम्, 'नग' मन्दरादिपर्वतानां मध्ये नामैकं, 'व्याधि' वातपित्तश्लेष्मोद्भवानां मध्ये नामैकं, 'प्रसून' मल्लिकाजातिशतपत्रादिपुष्पाणां मध्ये नामैकम्, 'अक्षराणि' प्रायादिप्रसूनान्तानां प्रश्नकथिताक्षरसंख्याम्। 'एकीकृत्य' तानि सर्वाण्यप्येकत्राङ्कं कृत्वा। 'नखान्वितं' तदङ्कराशिमध्ये विंशत्यङ्कं योजयित्वा। 'त्रिगुणितं' तत् सप्तराशिं त्रिभिर्गुणितं कृत्वा, 'तिथ्या पुनर्भाजितम्' पुनः पश्चात् त्रिगुणितराशिं पञ्चदशभिः संख्यैर्विभज्य। 'ब्रूयात्' कथयेत्। कस्मात्। 'उद्धरितात्' भागावशेषात्। किं? 'शुभाशुभफलं' शुभफलमशुभफलं च। कस्मिन्? 'वैषम्यसाम्ये' विषमाङ्के शुभफलं ब्रूयात्, समाङ्के विरुद्धफलं ब्रूयात्। कः? 'सुधीः' धीमान्। 'एतत् तथ्यं' एतत् प्रश्ननिमित्तं निश्चितं सत्यम्। 'इह' अस्मिन् कल्पे। 'उदितं' प्रतिपादितम्। कैः? मुनिवरैः मुनिवृषभैः। कथम्भूतैः? भव्याब्जघर्मांशुभिः भव्या एव अब्जानि तेषां घर्मांशुरादित्यस्तद्वत्तैर्मुनिभिः। इति प्रश्नः॥

अर्द्धेन्दुरेखाग्रगतं त्रिशूलं मध्ये च सम्यक्प्रविलिख्य धीमान्।
ऋक्षेऽमवास्याप्रतिपद्दिने तु यस्मिन् मृगाङ्को व्यवतिष्ठतेऽसौ ॥३०॥

'अर्द्धेन्दुरेखाग्रगतम्' अर्द्धचन्द्राकाररेखाग्रस्थितम्। किं तत्? 'त्रिशूलम्' त्रिशूलाकारम्, न केवलचन्द्राकाराग्रगतं त्रिशूलम्। 'मध्ये च' तदर्धचन्द्राकाररेखामध्येऽपि च त्रिशूलम्। 'सम्यक्प्रविलिख्य' शोभनं प्रकर्षेण लिखित्वा। कः? 'धीमान्' बुद्धिमान्। 'ऋक्षे' नक्षत्रे। 'अमवास्याप्रतिपद्दिने तु' अमावास्यानिवर्तमानप्रतिपद्दिने तु। 'यस्मिन् मृगाङ्कः' असौ चन्द्रमाः प्रतिपद्दिने यस्मिन् ऋक्षे 'व्यवतिष्ठते' सन्तिष्ठते॥

कृत्वा तदादिं विगणय्य युद्धे विन्द्यात् त्रिशूलाग्रगतेषु मृत्युम्।
मार्तण्डसंख्येषु जयं च तेषु पराजयं षट्सु बहिःस्थितेषु ॥३१॥

'कृत्वा तदादिं' तत्प्रतिपद्दिने यस्मिन् नक्षत्रे मृगाङ्कस्तिष्ठति तं नक्षत्रं त्रिशूलरेखाग्रे संस्थाप्य तन्नक्षत्रमादिं कृत्वा। 'विगणय्य', क्व? 'युद्धे', यस्मिन् दिने युद्धे यस्य युध्यमानस्य पुरुषस्य जन्मनक्षत्रं यत्र लभ्यते तत्पर्यन्तं गणयेत्। 'त्रिशूलाग्रगतेषु मृत्युम्' जन्मनक्षत्रं त्रिशूलाग्रगतं यदा भवति तदा मृत्युम्। 'विन्द्यात्' जानीयात्। 'मार्तण्डसंख्येषु जयं च तेषु' अर्द्धचन्द्राकाररेखाभ्यन्तरगतद्वादशर्क्षेषु तेषु जयं स्यात्। 'पराजयं षट्सु बहिःस्थितेषु' अर्धचन्द्राकाररेखाबहिःस्थितेषु षडक्षेषु पराजयः स्यात्॥

॥ इति युद्धप्रकरणेऽर्द्धेन्दुरेखाचक्रम् ॥

दिशि विदिशि तदुभयान्तरवर्तिभ्यां दिशतु पृच्छके मन्त्री।
क्रमशो बालं बालां नपुंसकं पूर्णगर्भिण्याः ॥३२॥

'दिशि विदिशि' दिशासु विदिशासु। 'तदुभयान्तरवर्तिभ्यां' तदुभयपार्श्ववर्तिभ्यां तद्दिग्विदिग्भ्यां उभयपार्श्वस्थितानाम्। 'दिशतु' कथयतु। 'पृच्छके' प्रश्नकारिपुरुषे। कः? 'मन्त्री' मन्त्रवादी। कथम्? 'क्रमशः' यथाक्रमम्। 'बालं बालां नपुंसकम्' दिशि पृच्छके बालं, विदिशि पृच्छके कुमारीं दिशतु, तद्दिग्विदिग्भ्यां मध्ये वर्तिनि पृच्छके नपुंसकं दिशतु। कस्याः? 'पूर्णगर्भिण्याः' सम्पूर्णगर्भिण्याः॥

वर्णमात्राश्च दम्पत्योरेकीकृत्य त्रिभाजिताः।
शून्येनैकेन मृत्पुंसो नार्या द्व्यङ्केन निर्दिशेत् ॥ ३३ ॥

'वर्णमात्राश्च' वर्णाः ककारादिहकारपर्यन्ताः, मात्राश्च अकारादिषोडशस्वराः। कयोः ? 'दम्पत्योः' स्त्रीपुंसोः। 'एकीकृत्य' तयोर्नामवर्णमात्राश्च पृथक्पृथग् विश्लेष्य ताः सर्वा एकस्थाने कृत्वा। 'त्रिभाजिताः' तां राशिं त्र्यङ्केन विभाजिताः। 'शून्येनैकेन' तद्भागोद्धरितशून्येन एकेन च। 'मृत्पुंसः' पुरुषस्य मृत्युः। 'नार्या द्व्यङ्केन' तदुद्धरितद्व्यङ्केन नार्या मृत्युम्। 'निर्दिशेत्' कथयेत् ॥

इत्युभयभाषाकविशेखरश्रीमल्लिषेणसूरिविरचिते
भैरवपद्मावतीकल्पे निमित्ताधिकारः

अष्टमः परिच्छेदः ॥ ८ ॥

लवंगं कुङ्कुमोसीरं नागकेसरराजिका[1]।
एलामनःशिलाकुष्टं तगरोत्पलरोचनाः ॥ १ ॥

'लवङ्गं' देवकुसुमम्। 'कुङ्कुमम्' वाल्हीकम्। 'उसीरं' श्वेतवालकम्। 'नागकेसरं' चाम्पेयम्। 'राजिकाः' श्वेतसर्षपाः। 'एला' पृथ्वीका। 'मनःशिला' कुनटी। 'कुष्टम्' वाप्यम्। 'तगरं' पिण्डीतगरम्। 'उत्पलं' श्वेतकमलम्। 'रोचना' पिङ्गला॥

श्रीखण्डतुलसीपिक्वी[2] पद्मकं कुटजान्वितम्।
सर्वं समानमादाय नक्षत्रे पुष्यनामनि ॥ २ ॥

'श्रीखण्डं' माखाश्रयम्। 'तुलसी' [3]सरसा। 'पिक्की' गन्धद्रव्यम्। 'पद्मकं' प्रसिद्धम्। 'कुटजान्वितं' इन्द्रयवान्वितम्। 'सर्वं समानमादाय' एतत् सर्वं समानभागं गृहीत्वा। 'नक्षत्रे पुष्यनामनि' पुष्यनाम्नि नक्षत्रे॥

कन्यया पेषयेत् सर्वं हिमभूतेन वारिणा।
कुरु चन्द्रोदये जाते तिलकं जनमोहनम् ॥ ३ ॥

'कन्यया' कुमार्या। 'पेषयेत्' सञ्चूर्णयेत्। 'सर्वं' तत् सर्वमौषधम्। केन? 'हिमभूतेन वारिणा' हिमाज्जनितोदकेन। 'कुरु'। कस्मिन्? 'चन्द्रोदये जाते', अमृतोदये जाते। किं? 'तिलकम्' विशेषकम्। कथम्भूतम्? 'जनमोहनम्' जनवश्यकरम्॥

बर्हिशिखासितगुञ्जागोरम्भाभानुकीटकस्य मलम्।
निजपञ्चमलोपेतं चूर्णं वनितां वशीकुरुते ॥ ४ ॥

'बर्हिशिखा' मयूरशिखा, 'सितगुञ्जा' श्वेतगुञ्जा 'गोरम्भा' प्रसिद्धा। 'भानुकीटकस्य मलं', अर्कपत्रकीटकविद्। 'निजपञ्चमलोपेतं' स्वकीयपञ्चमलोपेतम्। 'चूर्णं' एतद् द्रव्यान्वितं ताम्बूलचूर्णम्। 'वनितां' स्त्रियम्। 'वशीकुरुते' वशीकरोति॥

करवीरभुजङ्गाक्षीजारीदण्डीन्द्रवारुणी—।
गोबन्धिनीसलज्जानां विधाय वटिका बहूः ॥ ५ ॥

'करवीर' रक्ताश्वमारजटा, 'भुजङ्गाक्षी' सर्पाक्षीजटा, 'जारी' पुत्रजारी, 'दण्डी' ब्रह्मदण्डीजटा, 'इन्द्रवारुणी' विशालाजटा, 'गोबन्धिनी' अधःपुष्पी, प्रियङ्गुरित्येके, 'सलज्जानां' समन्ताज्जटान्वितानां एतेषां द्रव्याणां चूर्णं संपेष्य। 'विधाय वटिका बहूः' बहूरपि वटिकाः कृत्वा॥

---

१ सर्षपाः इति ग पाठः। २ पिक्का इति ग पाठः ३ सुरभा इति ग पाठः

वटिकाभिः समं क्षिप्त्वा लवणं शुभभाजने ।
पक्त्वा स्वमूत्रतो दद्यात् खाद्ये स्त्रीजनमोहनम् ॥ ६ ॥

'वटिकाभिः समं क्षिप्त्वा' प्रकृतवटिकाभिः समं क्षिप्त्वा क्षेपयित्वा। किम्? 'लवणम्' समुद्रलवणम्। क्व? 'शुभभाजने' मनोज्ञभाण्डे। 'पक्त्वा' पाकं कृत्वा। कथम्? 'स्वमूत्रतः' निजमूत्रतः। 'दद्यात् खाद्ये' अन्नादिषु दद्यात्। 'स्त्रीजनमोहनं' वनिताजनमोहनं स्यात् ॥

मृतभुजगवदनमध्ये लज्जरिकां सन्निधाय सितगुञ्जाम् ।
रुद्रजटासम्मिश्रामाकृष्य दिनत्रयं यावत् ॥७॥

'मृतभुजगवदनमध्ये' पञ्चत्वप्राप्तकृष्णसर्पास्यमध्ये। 'लज्जरिकां' समङ्गामूलम्। 'सन्निधाय' सम्यग्निधाय। 'सितगुञ्जां' श्वेतरक्तिकाम्। किंविशिष्टाम्? 'रुद्रजटासम्मिश्राम्' रुद्रजटासंयुक्ताम्। 'आकृष्य दिनत्रयं यावत्' एतन्मूलत्रयं तत्सर्पास्ये दिनत्रयं यावत् संस्थाप्य, पश्चात् 'आकृष्य' निष्कास्य ॥

लाङ्गलिकायाः कन्दे गोमयलिप्ते परिक्षिपेच्चूर्णम् ।
परिभाव्य शुनीपयसा स्वमलैः पञ्चाङ्गसम्भूतैः ॥८॥

'लाङ्गलिकायाः कन्दे' कलिहार्याः कन्दं उत्कीर्य तद्‌द्वयसम्पुटमध्ये। कथम्भूते? 'गोमयलिप्ते' गोशकृता परिलिप्य। 'परिक्षिपेच्चूर्णम्' प्राक्कथितौषधत्रयकृतचूर्णं तत्कन्दमध्ये निक्षिपेत्। किं कृत्वा? 'परिभाव्य' तच्चूर्णं सम्यग्भावयित्वा। केन? 'शुनीपयसा' कृष्णशुनीदुग्धेन, न केवलं शुनीदुग्धेन भाव्यम्। 'स्वमलैः पञ्चाङ्ग-सम्भूतैः' स्वकीयपञ्चाङ्गजनितमलैरपि भावयित्वा ॥

नेत्रश्रोत्रमलं शुक्रं दन्तजिह्वामलं तथा ।
वश्यकर्मणि मन्त्रज्ञैः पञ्चाङ्गमलमुच्यते ॥ ९ ॥

'नेत्रं' लोचनम्, 'श्रोत्रं' श्रवणम्, तयोर्मलम्। 'शुक्रं' बीजम्। 'दन्तः' रदनः, 'जिह्वा' रसना 'मलं' अनयोर्मलम्। 'तथा' तेन प्रकारेण। 'वश्यकर्मणि' स्त्रीवश्यकर्मकरणे। 'मन्त्रज्ञैः' मन्त्रविद्भिः। 'पञ्चाङ्गमलमुच्यते' एवं पञ्चाङ्गमलमिति कथ्यते ॥

पक्त्वा चूर्णमिदं पश्चाज्जगद्वश्यकरं परम् ।
दद्यात् खाद्यान्नपानेषु स्त्रीपुंसोश्च परस्परम् ॥ १० ॥

'पक्त्वा' पाकं कृत्वा। 'चूर्णमिदम्' एतत्कथितचूर्णम्। 'पश्चात्' तदनन्तरम्। 'जगद्वश्यकरं' सकलजन-वश्यकरम्। 'परं' अतिशयेन। 'दद्यात्' ददातु। केषु? 'खाद्यान्नपानेषु' खादनपानेषु। कयोः? 'स्त्रीपुंसोश्च' स्त्रीपुरुषयोः। कथम्? 'परस्परं' एकैकं तद्दद्यात् वशीभवति ॥

पञ्चपयस्तरुपयसा पोतवयण्डकरसेन परिभाव्या ।
तिलतैलदीपवर्तिस्त्रिभुवनजनमोहकृद्भवति ॥ ११ ॥

'पञ्चपयस्तरुपयसा' न्यग्रोध-उदुम्बर-अश्वत्थ-प्लक्ष-वटी, वटस्थाने वंदुलमिति वदन्ति केचित्, इति पञ्चक्षीरवृक्षक्षीरैः। न केवलं पञ्चक्षीरवृक्षक्षीरैरेव 'पोतवयण्डकरसेन' कृष्णमन्थेलिकारसेन। 'परिभाव्या' पञ्चसूत्रवर्तिः परिभाव्या, अर्कतूलाब्जसूत्रसाल्मलीतूलपट्टकपासा इति पञ्चसूत्रकृता। 'तिलतैलदीपवर्तिः'। 'त्रिभुवन-जनमोहकृद् भवति' भुवनत्रयस्थितजनानां मोहकारिणी भवति ॥

विषमुष्टिकनकहलिनीपिशाचिकाचूर्णमम्बु देहभवम् ।
उन्मत्तकभाण्डगतं क्रमुकफलं तद्वशं कुरुते ॥ १२ ॥

'विषमुष्टिः' विषदोडिका। 'कनकम्' कृष्णधत्तूरः 'हलिनी' कलिहलिनी 'पिशाचिका' कपिकच्छुका, 'चूर्ण' एतेषां चतुर्द्रव्याणां चूर्णम्। 'अम्बु देहभवम्' स्वमूत्रम्। 'उन्मत्तकभाण्डगतं' एतद्द्रव्याणां चूर्णं स्वमूत्रसहितं कृष्णधत्तूरकफलभाण्डमध्ये दिनत्रयस्थितं। 'क्रमुकफलं' पूगीफलम्। 'तद्वशं कुरुते' तत्क्रमुकफलं खादने दत्ते स्त्रीवशं करोति ॥

क्रमुकफलं मुखनिहितं तस्माद्दिवसत्रयेण संगृह्य ।
कनकविषमुष्टिहलिनीचूर्णैः प्रत्येकं संक्षिप्त्वा(प्य) ॥ १३ ॥

'क्रमुकफलं' पूगीफलम्। 'मुखनिहितं' सर्पास्ये स्थापितम्। 'तस्मात्' सर्पमुखात्। 'दिवसत्रयेण संगृह्य' तत्क्रमुकफलं दिनत्रयानन्तरं गृहीत्वा। 'कनकविषमुष्टिहलिनीचूर्णैः' धत्तूरकमूलचूर्णम्, विषडोडिकाचूर्णं, हलिनी-चूर्णम्, 'प्रत्येकं' पृथक्पृथक् 'संक्षिप्त्वा(प्य)' निक्षिप्य ॥

खरतुरगशुनीक्षीरैः क्रमशः परिभाव्य योजयेत् खाद्ये ।
अबलाजनवशकरणं मदनक्रमुकं समुद्दिष्टम् ॥ १४ ॥

'खरतुरगशुनीक्षीरैः' रासभाश्वशुनीक्षीरैः। 'क्रमशः' परिपाटया। 'परिभाव्य' भाव्यं, कनकचूर्णं खरदुग्धेन भाव्यं, विषमुष्टिचूर्णं तुरगदुग्धेन भाव्यं, हलिनीचूर्णं शुनीदुग्धेन भाव्यमिति क्रमेण तत्पूगीफलं दिनत्रयेण भावनीयम्, 'योजयेत् खाद्ये' एतत्प्रकारसिद्धं क्रमुकं सकलं ताम्बूले योजनीयम्। 'अबलाजनवशकरणं मदनक्रमुकं' स्त्रीजनानां वशीकरणं अनङ्गबाणनामधेयं क्रमुकम्। 'समुद्दिष्टं' सम्यक्कथितम् ॥

पुत्तंजारीकुङ्कुमशरपुङ्खमोहनीशमीकुष्टम् ।
गोरोचनाहिकेसरतगररुदन्ती च कर्पूरम् ॥ १५ ॥

'पुत्तंजारी' प्रसिद्धा, 'कुङ्कुमं' काश्मीरम्, 'शरपुङ्खी' श्वेतबाणपुङ्खी, 'मोहनी' वटपत्रिका, 'शमी' केशहन्त्री, 'कुष्टं' कोष्टम्। 'गोरोचना' पिङ्गला, 'अहिकेसरं' नागकेसरम्, 'तगरं' पिण्डीतगरम्, 'रुदन्ती' प्रतीता। 'कर्पूरं' चन्द्रान्वितम् ॥

कृत्वैतेषां चूर्णं यावकमध्ये ततः परिक्षिप्य ।
पङ्कजभवतन्तुवृता वर्तिः कार्या पुनस्तेन ॥ १६ ॥

'एतेषां प्रागुक्तद्रव्याणां। 'चूर्णं कृत्वा' चूर्णं विधाय। 'यावकमध्ये ततः परिक्षिप्य' तदनन्तरं तच्चूर्णं अलक्तकपटलमध्ये निक्षिप्य। 'पङ्कजभवतन्तुवृता' पद्मनालिकाजनितसूत्रेण वृता। 'वर्तिः कार्या' अनेन प्रकारेण वर्तिः कर्तव्या। 'पुनस्तेन' पश्चात् तेन वक्ष्यमाणेन ॥

कारुकिकुचभवपयसा त्रिवर्णयोषासुतस्तनक्षीरैः।
परिभाव्य ततः कपिलाघृतेन परिबोधयेद्दीपम्[1] ॥ १७॥

'कारुकिकुचभवपयसा' पञ्चकारुकीस्तनोद्भवदुग्धेन। 'त्रिवर्णयोषासुतस्तनक्षीरैः' ततः कारुकीकुचभवपयसोऽनन्तरं ब्राह्मणक्षत्रियवैश्यस्त्रीणां स्तनदुग्धेन। 'परिभाव्य' प्राक्कृतवर्तिः तैर्दुग्धैर्भावयितव्या। 'ततः' भावनानन्तरं 'कपिलाघृतेन' कपिलाज्येन। 'परिबोधयेत्' प्रज्वालयेत्। कम्? दीपम् ॥

उभयग्रहणे दीपोत्सवे च नवकर्परेऽञ्जनं धार्यम्।
गोमयविलिप्तभूम्यां स्थित्वा मन्त्राभिषिक्तायाम् ॥ १८॥

'उभयग्रहणे' सोमसूर्यग्रहणे। 'दीपोत्सवे च' अथवा दीपावलीपर्वणि। 'नवकर्परेऽञ्जनं धार्यम्' नवीनमृद्भाण्डकपाले 'अञ्जनं धार्यम्' कज्जलं ग्राह्यम्। 'गोमयविलिप्तभूम्यां' भूम्यपतितगोमयेन सम्मार्जितपृथिव्याम्। 'स्थित्वा' उषित्वा। कथम्भूतायाम्? 'मन्त्राभिषिक्तायां' वक्ष्यमाणमन्त्रेणाऽभिषिक्तभूम्याम् ॥

मन्त्रोद्धारः—ॐ भूर्भूमिदेवते! तिष्ठ तिष्ठ ठः ठः ॥ भूमिसंमार्जनमन्त्रः ॥[2]

ॐ नमो भगवते चन्द्रप्रभाय चन्द्रेन्द्रमहिताय नयनमनोहराय हरिणि हरिणि सर्वं वश्यं कुरु कुरु स्वाहा ॥

कज्जलोद्धारणमन्त्रः ॥

ॐ नमो [3]भूताय समाहिताय कामाय रामाय ॐ चुलुचुलु गुलुगुलु नीलभ्रमरि नीलभ्रमरि मनोहरि नमः ॥

नयनाञ्जनमन्त्रः ॥

कज्जलरञ्जितनयने दृष्ट्वा तां [4]वाञ्छतीह मदनोऽपि।
[5]नरमप्यञ्जितनयनं भूपाद्यास्तस्य यान्ति वशम् ॥ १९॥

'कज्जलरञ्जितनयने' कज्जलेनाञ्जिते नेत्रे। 'दृष्ट्वा' विलोक्य। 'तां' कामिनीं 'वाञ्छतीह मदनोऽपि' कामदेवोऽपि वशं याति। 'नरमप्यञ्जितनयनं' पुरुषमप्यञ्जितनयनं दृष्ट्वा। 'भूपाद्याः तस्य यान्ति वशं' तस्य कज्जलाञ्जितपुरुषस्य क्षत्रियाद्यास्तदञ्जनाद्वश्या भवन्ति ॥

विषमुष्टिकनकमूलं रालाक्षतवारिणा ततः पिष्टम्।
तद्रसभावितपत्रं पिशाचयत्युदरमध्यगतम् ॥ २०॥

१ °द्दीपः इति ख पाठः।
२ 'ॐ ऐँद्रदेवते! कज्जलं गृह्ण गृह्ण स्वाहा' कर्प्पराभिमन्त्रणं। इति ख ग पाठः।
३ भूतेशाय इति ख पाठः। ४ वशयतीति मदनोपि इति ग पाठः
५ नरमप्यञ्जितनेत्रं भूपाद्या यान्ति तस्य वशम् इति ग पाठः

'विषमुष्टिः' विषडोडिका। 'कनकमूलं' धत्तूरमूलम्। 'रालाक्षतवारिणा' रालाक्षतधौतोदकेन। 'ततः पिष्टम्' तस्मात् पिष्टम्। 'तद्रसभावितपत्रं' तत्पिष्टौषधरसेन भावितं ताम्बूलपत्रम्। 'पिशाचयति' पिशाच इवाचरति। 'उदरमध्यगतं' जठरमध्यं गते सति पुरुषं पिशाचयति॥

चिक्कणिकेप्सितरूपापिशाचिकासार्द्रचितमषीमथिते।
नृकपाले मातृगृहे काननकार्पासकृतवर्त्या॥२१॥

'चिक्कणिका' इलोठा, कर्णाटभाषायां उहाठा। 'ईप्सितरूपा' बहुरूपा, सरटविट्। 'पिशाचिका' कपिकच्छुका। 'सार्द्रचितमषीमथिते' सार्द्रचितोद्भवमष्या निर्मथिते। कस्मिन्? 'नृकपाले' नरकपाले। 'मातृगृहे' सप्तमातृकाणां गृहे। 'काननकार्पासकृतवर्त्या' अरण्योद्भवकार्पासतूलेन निर्मितवर्त्या॥

धार्यं कृष्णाष्टम्यामञ्जनमेतन्महाघृतोद्भूतम्।
तेन त्रिशूलमञ्जनमपि कुर्यादङ्कभीत्यर्थम्॥२२॥

'धार्यम्' धर्तव्यम्। 'कृष्णाष्टम्यां' कृष्णाष्टम्यां कृष्णचतुर्दश्यां वा। किम्? 'अञ्जनं' कज्जलम्। 'एतत्' एतत्कज्जलम्। 'महाघृतोद्भूतम्' महाघृतोद्भवम्। 'तेन त्रिशूलं कुर्यात्' अनेन प्रकारेण कृतकज्जलेन न केवलं त्रिशूलं कुर्यात्। 'अञ्जनमपि कुर्यात्' नयनाञ्जनमपि करोतु। किमर्थम्? 'अङ्कभीत्यर्थम्' एतदञ्जनं प्रतिपक्षकस्य भयोत्पादनार्थम्॥

तत्कज्जलोद्धारमन्त्रः—ॐ नमो भगवति! हिडिम्बवासिनि! अल्लमांसप्पिये! नहयलमंडलपइट्ठिए तुह रणमत्ते पहरणदुट्ठे आयासमंडि! पायालमंडि सिद्धमंडि जोइणिमंडि सव्वमुहमंडि कज्जलं पडउ[1] स्वाहा॥ प्राकृतमन्त्रः॥ कज्जलपातनं ऐशान्यभिमुखेन कर्तव्यम्॥

चितवह्निदग्धभूतद्रुमयमशाखामषीं समाहृत्य।
अंकोल्लतैलसूतककृष्णबिडालीजरायुश्च॥२३॥

'चितवह्निदग्धभूतद्रुमयमशाखामषीं' चिताग्निज्वलितकलिद्रुमदक्षिणदिग्भवशाखाजनितमषीम्। 'समाहृत्य' सम्यगाहृत्य। 'अङ्कोल्लतैलं' अङ्कोल्लबीजोद्भवतैलं। 'सूतकम्' पारदरसम्। 'कृष्णबिडालीजरायुश्च' कृष्णमार्जारीजरायुमपि॥

घूकनयनाम्बुमर्दितगुलिकां कृत्वा त्रिलोहसम्भठिताम्।
धृत्वा तामात्ममुखे पुरुषोऽदृश्यत्वमायाति॥२४॥

'घूकनयनाम्बुमर्दितगुलिकां कृत्वा' उलूकनेत्राम्बुमर्दितभूतद्रुमोद्भवमष्यादिचतुर्द्रव्याणां गुटिकां कृत्वा। 'त्रिलोहसम्मठितां' ताम्रतारसुवर्णाख्यैः अर्कषोडशवह्निभिरिति भागकृतत्रिलोहेन सम्यग्मठितां कृत्वा। 'धृत्वा तामात्ममुखे' तां त्रिलोहमठितां गुलिकां स्वमुखे धारयित्वा। 'पुरुषः' पुमान्। 'अदृश्यत्वम्' अदृश्यभावम्। 'आयाति' आगच्छति॥

---

१ हुँ फट् घे घे स्वाहा इति ख पाठः।

सितशरपुंखामूलं धृत्वा सितकोकिलाक्षबीजं च।
वनवसलारसपिष्टं वीर्यस्तम्भं मुखे संस्थम् ॥ २५॥

'सितशरपुङ्खामूलं' श्वेतबाणपुङ्खामूलम्। 'धृत्वा' गृहीत्वा। 'सितकोकिलाक्षबीजं च' श्वेतकोकिलाक्षबीजानि च। 'वनवसलारसपिष्टम्' अरण्योद्भव (उ) पोदकीरसेन पेषितं वनवला इति, कर्णाटभाषायां कासलि। 'वीर्यस्तम्भं' शुक्रस्तम्भम्। 'मुखे संस्थं' पुरुषमुखे संस्थम् ॥

कृष्णवृषदंशदक्षिणजङ्घायाः शल्यखण्डमादाय।
बद्धं कटिप्रदेशे वीर्यस्तम्भं नृणां कुरुते ॥ २६ ॥

'कृष्णवृषदंशदक्षिणजंघायाः' कृष्णबिडालदक्षिणजङ्घायाः। 'शल्यखण्डं' तदस्थिखण्डम्। 'आदाय' गृहीत्वा। 'बद्धं कटिप्रदेशे' पुंसः कटिप्रदेशे बद्धम्। 'नृणां' मनुष्याणाम्। वीर्यस्तम्भं 'कुरुते' करोति ॥

कपिलाघृतेन बोधितदीपः सुरगोपचूर्णसम्मिलितः।
स्तम्भयति पुरुषवीर्यं रत्यारम्भे निशासमये ॥ २७॥

'कपिलाघृतेन' कपिलाज्येन। 'बोधितदीपः' प्रज्वालितदीपः। कथम्भूतः? 'सुरगोपचूर्णसम्मिलितः' इन्द्रगोपचूर्णगर्भकृतवर्त्यान्वितः। स दीपः किं करोतीत्याह 'स्तम्भयति' स्तम्भं करोति। किम्? 'पुरुषवीर्यम्' नृवीर्यम्। कस्मिन्? 'रत्यारम्भे' सुरतप्रारम्भे। क्व? 'निशासमये' रात्रिसमये ॥

टङ्कणपिप्पलिकामासूरणकर्पूरमातुलिङ्गरसैः।
कृत्वात्माङ्गुलिलेपं कुरुते स्त्रीणां भगद्रावम् ॥ २८॥

'टङ्कणं' मालतीतटसम्भवम्। 'पिप्पलिकामा' महाराष्ट्री। 'सूरण' अरण्यश्वेतसूरणकन्दः। 'कर्पूरः' चन्द्रः। 'मातुलिङ्गं' बीजपूरम्। तेषां रसैः। 'कृत्वा'। कम्? 'आत्माङ्गुलिलेपं' स्वाङ्गुलिलेपम्। 'स्त्रीणां' वनितानाम्। 'भगद्रावं' भगनिर्झरणं कुरुते ॥

मूलं श्वेतापमार्गस्य कुबेरदिशि संस्थितम्।
उत्तरात्रितयं ग्राह्यं शीर्षस्थं द्यूतवादजित् ॥ २९॥

'मूलं श्वेतापमार्गस्य' श्वेतखरमञ्जर्या मूलम्। कथम्भूतम्? 'कुबेरदिशि संस्थितम्'। 'उत्तरात्रितये' उत्तराफाल्गुनी–उत्तराषाढा–उत्तराभाद्रपदेतिऋक्षत्रये। 'ग्राह्यं' गृहीतव्यम्। 'शीर्षस्थं' मस्तके स्थितम्। 'द्यूतवादजित्' द्यूते विवादे विजयं करोति ॥

अग्न्यावर्तितनागे हरवीर्यं निक्षिपेत् ततो द्विगुणम्।
मुनिकनकनागसर्पज्योतिष्मत्यतसिमिश्रं तन्मर्द्यम् ॥ ३० ॥

'अग्न्यावर्तितनागे' अग्निना वर्तिते नागे। 'हरवीर्यं' पारदरसम्। 'निक्षिपेत् ततो द्विगुणं' ततः नागैकभागाद्रसं द्विभागं निक्षिपेत्। 'मुनिः' रक्तागस्तिः। 'कनकं' कृष्णधत्तूरं। 'नागसर्पः' नागदमनकं। 'ज्योतिष्मत्यतसिभिश्च' कंगुण्यतसीभ्यां च। 'तन्मर्द्यम्' तत्पूर्वोक्तनागमेतेषां रसैर्मर्दनीयम्॥

डीकेन मर्दयित्वा गणियार्या मदनवलयकं कृत्वा।
रतिसमये वनितानां रतिदर्पविनाशनं कुर्यात् ॥३१॥

'डीकेन' निर्यासेन। 'मर्दयित्वा' पुनरपि मर्दनं कृत्वा। कस्याः डीकेन ? 'गणियार्याः' कर्णिकारवृक्षस्य। 'मदनवलयकं कृत्वा' स्मरवलयं लिङ्गे कृत्वा। 'रतिसमये' सुरतकाले। 'वनितानां' स्त्रीणाम्। 'रतिदर्पविनाशनं' सुरतगर्वविनाशनम्। 'कुर्यात्' करोति॥

व्याघ्रीबृहतीफलरससूरणकण्डूतिचणकपत्राम्बु।
कपिकच्छुवज्रवल्लीपिप्पलिकामाम्लिकाचूर्णम् ॥३२॥

'व्याघ्रीबृहतीफलरसं' वृहतीद्वयफलरसं। 'सूरणं' श्वेतसूरणं। 'कण्डूतिः' अग्निकः। 'चणकपत्राम्बु' आर्द्रचणकपत्राम्बु। 'कपिकच्छुः' पिशाचिका। 'वज्रवल्ली' काण्डवल्ली। 'पिप्पलिकामा' महाराष्ट्री। 'अम्लिका' चाङ्गेरी। 'चूर्णं' केषांचिद्रसः॥

अग्न्यावर्तितनागं नववारं भावयेदिमैर्द्रव्यैः।
स्मरवलयं कृत्वैवं वनितानां द्रावणं कुरुते ॥३३॥

'अग्न्यावर्तितनागं'। 'नववारं' नवसंख्यावारैः। 'भावयेद्' भावनां कुर्यात्। कैः ? 'इमैर्द्रव्यैः' एतत्कथितद्रव्यैः। 'स्मरवलयं कृत्वैवं' अनेन प्रकारेण मदनवलयं कृत्वा। 'वनितानां' स्त्रीणाम्। 'द्रावणं' भगनिर्झरणं। 'कुरुते' करोति॥

भानुस्वरजिनसंख्याप्रमाणसूतकगृहीतदीनारान्।
अङ्कोल्लराजवृक्षकुमारीरसशोधनं कुर्यात् ॥३४॥

'भानुस्वरजिनसङ्ख्या' द्वादशसङ्ख्या, षोडशसङ्ख्या, चतुर्विंशतिसङ्ख्या। 'प्रमाणसूतकगृहीतदीनारान्' एवं त्रिसङ्ख्याकथितप्रमाणपारदरसगृहीतगद्याणकान्। 'अङ्कोल्लराजवृक्षकुमारीरसशोधनं कुर्यात्' 'अङ्कोल्लरसः' सम्पाकरसः। 'राजवृक्षरसः'। 'कुमारीरसः' गृहकन्यारसः। एतैः रसैः पारदसंशोधनं कुर्यात्॥

शशिरेखाखरकर्णीकोकिलनयनापमार्गकनकानाम्।
चूर्णैः सहैकविंशतिदिनानि परिमर्दयेत् सूतम्[1] ॥३५॥

'शशिरेखा' वाकुचीबीजं। 'खरकर्णी' गर्दभकर्णी, कर्णाटभाषया कत्येंगिरि। 'कोकिलानयनं' कोकिलाक्षिबीजं च। 'अपामार्गः' प्रत्येकपुष्पीबीजम्। 'कनकं' कृष्णधत्तूरकम्। 'चूर्णैः सहैकविंशतिदिनानि' एभिः चूर्णैः सह प्रत्येकं एकविंशतिदिनानि। 'परिमर्दयेत् सूतं' शोधितपारदरसं मर्दयेत्॥

---

१ सम्यक् इति ख पाठः।

निशायां काञ्जिकाधूपं दत्त्वा योनौ प्रवेशयेत् ।
बालां मध्यां गतप्रायां योषां विज्ञाय तत्क्रमात् ३६ ॥

'निशायां' रात्रौ । 'काञ्जिकाधूपं दत्त्वा' आरनलिनधूपं दत्त्वा । 'योनौ प्रवेशयेत्' तद्धूपितरसं स्त्रीयोनौ प्रवेशयेत् । 'बालां मध्यां गतप्रायां योषां विज्ञाय तत्क्रमात्' बालस्त्रीणां द्वादशगद्याणप्रमाणरसकृतजलूका मध्यप्रमाणस्त्रीणां षोडशगद्याणप्रमाणरसकृतजलूका गतप्रायस्त्रीणां चतुर्विंशतिगद्याणप्रमाणरसकृतजलूका इति क्रमं ज्ञात्वा प्रवेशयेत् ।

नीरसतां बिभ्राणां योषां रतिसंगरे मदोन्मत्तां ।
द्रावयति तादृशीमप्येष जलूकाप्रयोगस्तु ॥ ३७ ॥

'नीरसतां बिभ्राणां' निर्द्रवभावं धारयन्तीं । 'योषां' स्त्रियम् । 'रतिसङ्गरे' सुरतरणरङ्गे । 'मदोन्मत्तां' यौवनमदोन्मत्ताम् । 'द्रावयति तादृशीमपि' एवंविधां मदोन्मत्तामपि क्षरयति । 'एष जलूकाप्रयोगस्तु' तु—पुनः एषः—कथितप्रकारेण कृतजलूकाप्रयोगः ॥ इति जलूकाप्रयोगविधानम् ॥

सोमाशाश्रितमूलं कपिकच्छोर्गोजलेन परिपिष्टम् ।
निजतिलकप्रतिबिम्बं संपश्यति शाकिनीशीर्षे ॥ ३८ ॥

'सोमाशाश्रितमूलं' उत्तरादिग्गतमूलम् । कस्याः ? 'कपिकच्छोः' पिशाच्याः । कथम्भूतं मूलम् ? 'गोजलेन परिपिष्टं' गोमूत्रेण वर्तितम् । 'निजतिलकप्रतिबिम्बं' स्वकीयविशेषकं प्रतिरूपम् । 'सम्पश्यति शाकिनीशीर्षे' स्वकीयतिलकं शाकिनीललाटे तदेव पश्यति ॥

आदित्याक्षतदिव्यस्तम्भविधौ मरिचपिप्पलीकामाम् ।
दिव्यस्तम्भे सुण्ठीचूर्णं च भक्षयेद् धीमान् ॥ ३९ ॥

'आदित्याक्षतदिव्यस्तम्भविधौ' आदित्यतन्दुलदिव्यस्तम्भने । 'मरिचपिप्पलीकामाम्' उषणमहाराष्ट्रीचूर्णं भक्षयेत् । कर्पूरदिव्यस्तम्भने तु कपालिकादि कर्परादिं । 'दिव्यस्तम्भे' दिव्यस्तम्भविधाने । 'सुण्ठीचूर्णं च भक्षयेत्' महौषधीचूर्णं भक्षयेत् । कः 'धीमान्' बुद्धिमान् ॥

लज्जरिकाभेकवसा[1] करलिप्तं स्तम्भनं करोत्यग्नेः ।
श्वासनिरोधेन तुलादिव्यस्तम्भो भवत्येव ॥ ४० ॥

'लज्जरिका' लज्जरिकासमंगा । 'भेकवसा' हरिवसा । 'करलिप्तं' तच्चूर्णानि तद्वसया हस्तलिप्तम् । 'स्तम्भनं करोत्यग्नेः' अग्निस्तम्भो भवत्येव । 'श्वासनिरोधेन तुलादिव्यस्तम्भो भवत्येव' श्वासनिरोधेन घटे तुलादिव्यस्तम्भोऽवश्यं भवत्येव ॥

---

१ भेकवसा इति ख पाठः ।

निर्गुण्डिका च सिद्धार्था गृहद्वारेऽथवापणे।
बद्धं पुष्यार्कयोगेन जायते क्रयविक्रयम् ॥४१॥

'निर्गुण्डिका' सितभूतकेशी। 'सिद्धार्था:' श्वेतसर्षपाः। 'गृहद्वारे' स्ववेश्मद्वारे। 'अथवा आपणे' विपणौ। 'बद्धं पुष्यार्कयोगेन' पुष्यनक्षत्रे रविवारेण योगे बद्धं चेत्। 'जायते क्रयविक्रयं' वस्तुक्रयविक्रयं भवत्येव॥

पिबति प्रसूनसमये जपाप्रसूनं विमर्द्य कञ्जिकया।
न बिभर्ति सा प्रसूनं धृतेऽपि तस्याः न गर्भः स्यात् ॥४२॥

'पिबति' पानं करोति। 'प्रसूनसमये' दिनत्रयपुष्पकाले। किम्? 'जपाप्रसूनं' जपाकुसुमम्। किं कृत्वा? 'विमर्द्य' विशेषेण मर्दयित्वा। कया? 'कञ्जिकया' सौवीरेण। 'सा' नारी। 'प्रसूनं' पुष्पं। 'न बिभर्ति' न धारयति। 'धृतेऽपि' यदि कथमपि पुष्पं धरति तथापि 'तस्या न गर्भः स्यात्' तस्या वनिताया गर्भ-सम्भवो न भवत्येव॥

इत्युभयभाषाकविशेखरश्रीमल्लिषेणसूरिविरचिते
भैरवपद्मावतीकल्पे वश्यतन्त्राधिकारो नाम

नवमः परिच्छेदः ॥९॥

संग्रहमङ्गन्यासं रक्षां स्तोभं च वच्म्यहं स्तम्भम् ।
विषनाशनं सचोद्यं खटिकाफणिदशनदंशं च ॥ १ ॥

'संग्रहं' दष्टस्य संग्रहम् । 'अङ्गन्यासं' दष्टपुरुषस्य शरीराक्षरविन्यासम् । 'रक्षां' दष्टस्य रक्षाकरणम् । 'स्तोभं च' दष्टावेशकरणं, चः समुच्चये । 'वच्म्यहं' मल्लिषेणाचार्यः कथयामि । 'स्तम्भं' दष्टस्य शरीरे विष-प्रसरणनिरोधः स्तम्भम् । 'विषनाशनं' निर्विषीकरणम् । 'सचोद्यं' चोद्येन सह वर्तत इति सचोद्यं, दष्टपटाच्छादनादि कौतुकम् । 'खटिकाफणिदशनदंशं च' खटिकालिखितसर्पदन्तदंशमित्यष्टाङ्गगारुडमहं वच्मीति सम्बन्धः ॥
प्रथमस्तावत्संग्रहोऽभिधीयते—

समविषमाक्षरभाषिणि दूते शशिदिनकरौ च वहमानौ ।
दष्टस्य जीवितव्यं तद्विपरीते मृतिं विन्द्यात् ॥ २ ॥

'समविषमाक्षरभाषिणि दूते शशिदिनकरौ च वहमानौ' चन्द्रदिवाकरौ स्वरौ प्रवर्तमानौ । 'दष्टस्य जीवितव्यं' समाक्षरभाषिणि दूते चन्द्रे वहमाने, विषमाक्षरभाषिणि दूते सूर्ये वहमाने दष्टपुरुषस्य संग्रहोऽस्तीति विन्द्यात् । 'दष्टस्य जीवितव्यं तद्विपरीते मृतिं विन्द्यात्' समाक्षरभाषिणि दूते सूर्ये वहमाने, विषमाक्षरभाषिणि दूते चन्द्रे वहमाने इति स्वरवर्णवैपरीत्ये दष्टपुरुषस्य संग्रहो न विद्यते इति विन्द्यात् ॥

दूतमुखोत्थितवर्णान् द्विगुणीकृत्य त्रिभिर्हरेद्भागम् ।
शून्येनोद्धरितेन च मृतिजीवितमादिशेत् प्राज्ञः ॥ ३ ॥

'दूतमुखोत्थितवर्णान् द्विगुणीकृत्य' तानि प्रश्नाक्षराणि सर्वाणि द्विगुणीकृत्य । 'त्रिभिर्हरेद्भागं' तद्द्विगुणित-राशिं त्रिभिर्भागे हरेत् । 'शून्येनोद्धरितेन च' तद्भागावशेषशून्येन शून्य समच्छेदेन एकद्विरवशिष्टेन च । 'मृत-जीवितमादिशेत्' शून्येन दष्टस्य संग्रहाभावमादिशेत्, एकद्विरुद्धरितेन दष्टस्य संग्रहोऽस्तीत्यादिशेत् ॥

हं वं क्षं मन्त्रमन्त्रिततोयेनोद्धुषति यस्य गात्रं चेत् ।
स च जीवत्यथवाक्षिस्पन्दनतो नान्यथा दष्टः ॥ ४ ॥

'हं वं क्षं मन्त्रः' हं वं क्षं इति मन्त्रः । 'मन्त्रिततोयेन' अनेन मन्त्रेणाभिमन्त्रितोदकेनाच्छोटितेन । 'उद्धुषति यस्य गात्रं चेत्' यस्य दष्टस्य शरीरं कम्पवच्चेत् । 'स च जीवति' स उद्धुषितगात्रपुरुषो जीवति । 'अथवा-क्षिस्पन्दनतः' अन्येन प्रकारेणाक्ष्णोरुन्मीलनेन संदष्टो जीवति । 'नान्यथा दष्टः' यस्य दष्टस्य तदुदकसिञ्चनेन गात्रोद्धुषणं तदक्षिस्पन्दनं च न विद्यते तस्य दष्टस्य जीवितं न स्यादिति ज्ञातव्यम् ॥

इति संग्रहपरिच्छेदः ।

अतः परमङ्गन्यासोऽभिधीयते—

क्षिप ॐ स्वाहा बीजानि विन्यसेत् पादनाभिहृन्मुखशीर्षे ।
पीतसितकाञ्चनासितसुरचापनिभानि परिपाट्या ॥ ५ ॥

'क्षिप ॐ स्वाहा बीजानि' क्षिप ॐ स्वाहेति पञ्च बीजानि। 'विन्यसेत्' विशेषेण स्थापयेत्। केषु? 'पादनाभिहृन्मुखशीर्षे' पादद्वये, नाभौ, हृदये, आस्ये, मस्तके इत्येतेषु पञ्चसु स्थानेषु। कथम्भूतानि बीजानि? 'पीतसितकाञ्चनासितसुरचापनिभानि' पीतं—हरिद्रानिभं, श्वेतं—श्वेतवर्णं, काञ्चनं—सुवर्णवर्णं, असितं—कृष्णवर्णं, सुरचापं—इन्द्रधनुर्वर्णं, निभानि—सदृशानि। एवं पञ्चवर्णबीजानि 'परिपाट्या' 'क्षि' बीजं पीतवर्णं पादद्वये, 'प' बीजं श्वेतवर्णं नाभौ, ॐ बीजं काञ्चनवर्णं हृदि, स्वा इति बीजं कृष्णवर्णं आस्ये, 'हा' इति बीजं इन्द्रचापवर्णं मूर्ध्नि, एवं क्रमेण पञ्चसु स्थानेषु विन्यसेत्॥ इत्यङ्गन्यासक्रमः॥

अतः परं रक्षाविधानं कथ्यते—

पद्मं चतुर्दलोपेतं भूतान्तं नामसंयुतम्।
दलेषु शेषभूतानि मायया परिवेष्टितम्[1]॥६॥

'पद्मं' कमलम्। 'चतुर्दलोपेतं' चतुःपत्रयुक्तम्। 'भूतान्तं' भूतानि—पृथिव्यप्तेजोवाय्वाकाशसंज्ञानि तेषामन्त आकाशो हकारः, तं हकारं कर्णिकामध्ये। कथम्भूतम्? 'नामसंयुतं' दष्टनामगर्भीकृतम्। 'दलेषु' बहिःस्थित-चतुर्दलेषु। 'शेषभूतानि' क्षिप ॐ स्वाहेति चतुर्बीजानि लिखेत्। 'मायया परिवेष्टितं' तत्पद्मोपरि ह्रींकारेण त्रिधा परिवेष्टितं लिखित्वा दष्टस्य गले बध्नीयात्।अथवा चन्दनेन दष्टवक्षःस्थले एतद्यन्त्रं लिखेत्॥ इति रक्षाविधानम्॥

इदानीं स्तोभकरणमारभ्यते—

वह्निजलभूमिपवनव्योमाग्रे दहपचद्वयं योज्यम्।
स्तोभययुगलं स्तोभं मध्यमिकाचालनाद्भवति॥७॥

'वह्निः' ॐकारः। 'जलं' पकारः। 'भूमिः' क्षिकारः। 'पवनः' स्वाकारः। 'व्योम' हकारः। 'अग्रे' एतेषां पञ्चबीजाक्षराणामग्रे। 'दहपचद्वयं योज्यम्' दह दहेति पदद्वयं योज्यं, तदग्रे पच पचेति पदद्वयं योजनीयम्। 'स्तोभययुगलं' स्तोभय स्तोभयेति पदद्वयम्। 'स्तोभं' अनेन मन्त्रोच्चारणाच्चाटनेन (?) दष्टावेशः। कथम? 'मध्यमिकाचालनात्' मध्यमाङ्गुल्याश्चालनाद्। 'भवति' जायते॥

मन्त्रोद्धारः—ॐ पक्षि स्वाहा दह दह पच पच स्तोभय स्तोभय॥ इति स्तोभनमन्त्रः॥

॥ इति स्तोभनविधानम्॥

इदानीं विषस्तम्भनमुदीर्यते—

आद्यन्ते भूबीजं मध्ये जलवह्निमारुतं योज्यम्।
स्तम्भययुगलं स्तम्भो वामकराङ्गुष्ठचालनतः॥८॥

'आद्यन्ते भूबीजं' मन्त्रादौ मन्त्रान्ते पृथ्वीबीजम्—क्षि इति। 'मध्ये जलवह्निमारुतं योज्यं' मन्त्रमध्ये प ॐ स्वेति बीजत्रयं योजनीयम्। 'स्तम्भययुगलं' तदग्रे स्तम्भयेति पदद्वयम्। 'स्तम्भः' अनेन कथित-मन्त्रोच्चारणेन विषप्रसरस्तम्भो भवति। कथम्? 'वामकराङ्गुष्ठचालनतः' स्ववामकराङ्गुष्ठचालनेन।

---

१ त्रिमायापरिवेष्टितं इति ख पाठः। 'त्रिमायावेष्टितं शुभम्' इत्यपि पाठः॥

मन्त्रोद्धारः—क्षिप ॐ स्वाक्षि स्तम्भय स्तम्भय ॥ विषस्तम्भनमन्त्रः ॥

इदानीं निर्विषीकरणमभिधीयते—

जलभूमिवह्निमारुतगगनैः संप्लावयद्वयोपेतैः ।
भवति च विषापहारस्तर्जन्याश्चालनादचिरात् ॥ ९ ॥

'जलं' पकारः । 'भूमिः' क्षिकारः । 'वन्हिः' ॐकारः । 'पवनः' स्वाकारः । 'गगनं' हाकारः । इति पञ्च-बीजाक्षरैः । कथम्भूतैः ? 'संप्लावयद्वयोपेतैः' संप्लावय संप्लावयेति पदद्वयान्वितैः । 'भवति' स्यादेव । कः ? 'विषापहारः' विषनिर्विषीकरणम् । कस्मात् ? 'तर्जन्याश्चालनात्' स्ववामकरतर्जन्याश्चालनात् । कथम् ? 'अचिरात्' शीघ्रतः । अतः मन्त्रोद्धारः—पक्षि[१] ॐ स्वाहा संप्लावय संप्लावय ॥ इति विषापहारः ॥

इदानीमन्यत्रविषसंक्रमणकौतुकमभिधीयते—

मरुदग्निवारिधामव्योमपदं संक्रमव्रजद्वितयम् ।
चालनयाऽनामिकया नितरां विषसंक्रमो भवति ॥ १० ॥

'मरुत्' स्वाकारः । 'अग्निः' ॐकारः । 'वारि' पकारः । 'धाम' क्षिकारः । 'व्योम' हाकारः । 'संक्रमव्रजद्वितयं' संक्रम संक्रम व्रज व्रजेति पदद्वयम् । 'चालनयानामिकया' स्ववामकरानामिकायाश्चालनेन । 'नितरां' अतिशयेन । 'विषसंक्रमो भवति' परं प्रति विषसंक्रमो भवति ॥

स्वा ॐ प क्षि हा संक्रम संक्रम व्रज व्रजेति विषसंक्रामणमन्त्रः ॥

नागावेशः—

व्योमजलवह्निपवनक्षितियुतमन्त्राद्भवत्यथावेशः ।
सं क्षि प हः प क्षि प हः पठनेन कनिष्ठिचालनतः ॥ ११ ॥

'व्योम' हाकारः । 'जलं' पकारः । 'वन्हिः' ॐकारः । 'पवनः' स्वाकारः । 'क्षितिः' क्षिकारः । 'युतमन्त्रात्' युक्तमन्त्रात् । 'भवति' एतत्कथितमन्त्राज्जायते । 'अथ' पश्चात् । 'आवेशः' पुरुषशरीरे नागावेशः । 'सं क्षि प हः प क्षि प हः इति । 'पठनेन' एतन्मन्त्रपठनेन । कस्मात् ? 'कनिष्ठिचालनतः' वामकरकनिष्ठिकाचालनात् ॥

मन्त्रोद्धारः--हा प ॐ स्वाक्षि सं क्षि प हः प क्षि प हः । इति पदे नागावेशमन्त्रः ॥

कर्णजाप्येन भेरुण्डा निर्विषं कुरुते नरम् ।
विद्या सुवर्णरेखापि दष्टं तोयाभिषेकतः ॥ १२ ॥

'कर्णजाप्येन' दष्टपुरुषस्य कर्णजाप्येन । 'भेरुण्डा' भेरुण्डदेव्या विद्या । 'निर्विषं कुरुते' निर्विषीकरणं कुरुते । 'नरं' दष्टं पुरुषम् । 'विद्या सुवर्णरेखापि' अपि—पश्चात् सुवर्णरेखा विद्या । 'दष्टं' पुरुषं । 'तोयाभिषेकतः' सुवर्णरेखानामविद्ययाऽभिमन्त्रितोदकाभिषेकेण निर्विषं करोति ॥

---

१ क्षिप ॐ स्वाहा स्तंभय स्तंभय निर्विषकरणं पक्षि ॐ स्वाहा संप्लावय संप्लावय । अयं विषापहारमन्त्रः इति ख पाठः ॥

भेरुण्डविद्यामन्त्रोद्धारः—ॐ एकहि एकमाते भेरुण्डा विज्जाभविकजकरंडे तंतु मंतु आमोसइ हुंकारविष नासइ थावर जंगम किंत्तिम अंगज[1] ॐ फट्॥ इयं कर्णजाप्या भेरुण्डविद्या। प्राकृतमन्त्रः॥

अतः सुवर्णरेखामन्त्रोद्धारः—ॐ सुवर्णरेखे! कूटविग्रहरूपिणि! स्वाहा॥

इयं तोयाभिषेककरणसुवर्णरेखा विद्या।

भूजलमरुन्नभोऽक्षरमन्त्रेण घटाम्बु मन्त्रितं कृत्वा।
पादादिविहितधारानिपातनाद्भवति विषनाशः॥१३॥

'भू' क्षि। 'जलं' प। 'मरुत्' स्वा। 'नभोऽक्षरं' हा। 'मन्त्रेण' क्षि प स्वा हेत्यक्षरचतुष्टयमन्त्रेण। 'घटाम्बु मन्त्रितं कृत्वा' कलशोदकमनेन मन्त्रेणाभिमन्त्रितं कृत्वा। 'पादादिविहितधारानिपातनात्' आपादमस्तकादिकृत-जलधारानिपातनात्। 'भवति' स्यात्। 'विषनाशः' दष्टस्य विषनाशः।

मन्त्रोद्धारः—क्षिप स्वाहा॥ इति निर्विषीकरणमन्त्रः॥

इदानीमष्टविधनागाभिधानमभिधीयते—

अनन्तो वासुकिस्तक्षः कर्कोटः पद्मसंज्ञकः।
महासरोजनामा च शङ्खपालस्तथा कुलिः॥१४॥

'अनन्तो वासुकिस्तक्षः' अनन्तनामा नागः, वासुकिर्नाम नागः, तक्षको नाम नागः। 'कर्कोटः' कर्कोटको नाम नागः। 'पद्मसंज्ञकः' पद्मनामा नागः। 'महासरोजनामा च' महापद्मनामनागः। 'शङ्खपालः' शङ्खपालो नाम नागः। 'तथा कुलिः' तेन प्रकारेण कुलिको नाम नागः। इत्यष्टविधनागानां नामानि निरूपितानि॥

अतः परं तेषां नागानां कुल-जाति वर्ण-विष-व्यक्तयः पृथक्पृथगभिधीयन्ते—

क्षत्रियकुलसम्भूतौ वासुकिशङ्खौ धराविषौ रक्तौ।
कर्कोटकपद्मावपि शूद्रौ कृष्णौ च वारुणीयगरौ॥१५॥

'क्षत्रियकुलसम्भूतौ' क्षत्रियकुलसम्भवौ। कौ? 'वासुकिशङ्खौ' वासुकिशङ्खपालनागौ। 'धराविषौ' तौ द्वौ पृथ्वीविषान्वितौ। 'रक्तौ' रक्तवर्णौ। 'कर्कोटकपद्मावपि' अपि—पश्चात् कर्कोटकपद्मौ। 'शूद्रौ' शूद्रकुलोद्भूतौ। 'कृष्णौ' तौ द्वौ कृष्णवर्णौ। चः समुच्चये। 'वारुणीयगरौ' तौ द्वौ अब्विषान्वितौ॥

विप्रावनन्तकुलिकौ वह्निगरौ चन्द्रकान्तसङ्काशौ।
तक्षकमहासरोजौ वैश्यौ पीतौ मरुद्गरलौ॥१६॥

'अनन्तकुलिकौ' अनन्तकुलिकनामनागौ। 'विप्रौ' विप्रकुलसम्भूतौ। 'वह्निगरौ' अग्निविषान्वितौ। 'चन्द्रकान्तसङ्काशौ' स्फटिकवर्णसदृशौ। 'तक्षकमहासरोजौ' तक्षकमहापद्मनामनागौ। 'वैश्यौ' वैश्यकुलोद्भवौ। 'पीतौ' पीतवर्णौ। 'मरुद्गरलौ' वायुविषान्वितौ। इत्यष्टविधनागानां कुलवर्णविषव्यक्तयः प्रतिपादिताः। जयविजय-नागौ देवकुलोद्भूतौ आशीविषौ पृथिव्यां न प्रवर्तेते इत्येतस्मिन्ग्रन्थे न प्रतिपादितौ॥

---

१ ह्रौं देवदत्तस्य विषं हर विषं हर हुं फट् इति ख पाठः॥

इदानीं चतुर्विधं चिह्नमभिधीयते—

पार्थिवविषेण गुरुता जडता देहस्य सन्निपातत्वम् ।
लालाकण्ठनिरोधो गलनं दंशस्य तोयविषात् ॥ १७ ॥

'पार्थिवविषेण' पृथ्वीविषनागदष्टस्य। 'गुरुता' गुरुत्वम्। 'जडता देहस्य' शरीरस्य जाड्यम्।'सन्निपातत्वं' सन्निपातस्वरूपमिति पार्थिवविषचिह्नं स्यात्। 'लालाकण्ठनिरोधः' मुखे लालास्रवः। 'गलनं दंशस्य'सर्पदष्टदंशे रक्तक्षरणम्। कस्मात्? 'तोयविषात्' अम्बुविषात् अम्बुविषदष्टस्यैवंविधं चिह्नं स्यात्॥

गण्डोद्गमता दृष्टेरपाटवं भवति वह्निविषदोषात् ।
विच्छायतास्यशोषणमपि मारुतगरलदोषेण ॥ १८ ॥

'गण्डोद्गमता' दष्टशरीरे गण्डोद्गमत्वम्। 'दृष्टेरपाटवं' नेत्रयोरपटुत्वम्। 'भवति' स्यात्। कस्मात्? 'वन्हिविषदोषात्' वन्हिविषनागदष्टस्य पुरुषस्यैवंविधं चिह्नं स्यात्। 'विच्छायता' शरीरे दुश्छवित्वं, 'आस्यशोषणमपि' वदने निर्द्रवत्वमपि। केन? 'मारुतगरलदोषेण' वायुविषदोषेण। वायुविषनागदष्टपुरुषस्यैवं चिह्नं स्यात्॥

॥ इत्यष्टविधनागानां कुलवर्णविषचिह्नव्यक्तयः प्रतिपादिताः ॥

ॐ नमो भगवत्यादिमन्त्रमष्टोत्तरं शतम् ।
पठित्वा क्रोशपटहं ताडयेद्दष्टसन्निधौ ॥ १९ ॥

'ॐ नमो भगवत्यादिमन्त्रं' ॐ नमो भगवति० इत्यादि वक्ष्यमाणमन्त्रं। 'अष्टोत्तरं शतं' अष्टाधिकं शतम्। 'पठित्वा' पठनं कृत्वा। 'क्रोशपटहं' क्रोशडमरुम्। 'ताडयेत्' ताडनं कुर्यात्। 'दष्टसन्निधौ' दष्टस्य पार्श्वे॥

मन्त्रोद्धारः—ॐ नमो भगवति! वृद्धगरुडाय सर्वविषविनाशिनि! छिन्द छिन्द भिन्द भिन्द। गृह्ण गृह्ण एहि एहि भगवति! विद्ये हर हर हुं फट् स्वाहा॥ दष्टश्रुतौ क्रोशपटहताडनमन्त्रः॥

धृत्वार्धचन्द्रमुद्रां दक्षिणभागेऽहिदंशिनः स्थित्वा ।
वदतु तव गौरिदानीं तस्करलोकेन नीतेति ॥ २० ॥

'धृत्वार्धचन्द्रमुद्राम्' अर्धचन्द्राकारां—वामकराङ्गुष्ठतर्जनीभ्यां धृत्वा मुद्राम्। क्व? 'दक्षिणभागे' दक्षिणदिग्भागे। कस्य? 'अहिदंशिनः' सर्पदष्टपुरुषस्य। 'स्थित्वा' उषित्वा। 'वदतु' भाषताम्। किं वदतु? 'तव गौः' त्वदीया गौः। 'इदानीं' साम्प्रतं। 'तस्करलोकेन' दस्युजनेन। 'नीतेति' गृहीत्वा नीतेति वदति॥

तं समाहन्य पादेन याहीत्युक्ते स धावति ।
उत्थापयति तं शीघ्रं मन्त्रसामर्थ्यमीदृशम् ॥ २१ ॥

'तं समाहन्य पादेन' तं दष्टपुरुषं मन्त्रिणा स्वपादेन आहन्य। 'याहीत्युक्ते' गच्छेत्युक्ते। 'स धावति' स दष्टपुरुषो धावनं करोति। 'उत्थापयति तं शीघ्रं' तं दष्टपुरुषं झटित्युत्थापयति। 'मन्त्रसामर्थ्यमीदृशं' भगवत्या मन्त्रमाहात्म्यमीदृशं एवंविधम्॥

॥ क्रोशपटहताडनेन दष्टोत्थापनविधानम् ॥

इदानीं नागाकर्षणमन्त्रविधानमभिधीयते—

नियुतजपात् संसिध्यति दशांशहोमेन फणिसमाकृष्टिः ।
प्रणवादिः[१] स्वाहान्तः चिरिचिरिशब्दादिको मन्त्रः ॥ २२ ॥

'नियुतजपात्' लक्षजपात्। 'संसिध्यति' सम्यक् सिद्धिं प्राप्नोति। केन? 'दशांशहोमेन' दशसहस्रहवनेन। 'फणिसमाकृष्टिः' नागाकर्षणम्। 'प्रणवादिः स्वाहान्तः' ॐकारादिः स्वाहाशब्दान्तः। 'चिरिचिरिशब्दादिको मन्त्रः'[२] चिरिचिरि[२] इति शब्दाद्यो मन्त्रः[२] ॥

मन्त्रोद्धारः—ॐ चिरि चिरि इन्द्रवारुणि! एहि एहि कड कड स्वाहा॥ इति नागाकृष्टिमन्त्रः॥

इदानीं नागप्रेषणमन्त्रविधानमभिधीयते—

नागप्रेषणमन्त्रोऽशीतिसहस्रैर्दशांशहोमेन ।
सिध्यति जाप्येन पुनः शोणितकरवीरपुष्पाणाम् ॥ २३ ॥

'नागप्रेषणमन्त्रः' नागानां क्षुद्रकर्मकरणप्रस्थापनमन्त्रः। 'अशीतिसहस्रैः' अशीतिसहस्रप्रमाणैः। जाप्येन। कथम्भूतेन? 'दशांशहोमेन' अष्टसहस्रहवनेन। 'सिध्यति' सिद्धिं प्राप्नोति। 'पुनः' पश्चात्। केषां? 'शोणितकरवीरपुष्पाणाम्' रक्तकरवीरपुष्पाणाम्॥

नागसम्प्रेषणमन्त्रोद्धारः—ॐ नमो नागपिशाचि! रक्ताक्षिभ्रुकुटिमुखि! उच्छिष्टदीप्ततेजसे! एहि एहि भगवति! हुं फट् स्वाहा॥ नागप्रेषणमन्त्रः॥

वल्मीकनिकटे होमं कुर्यात् त्रिमधुरान्वितम् ।
मन्त्रसिद्धौ तमाज्ञाप्य प्रेषयेदुरगेश्वरम् ॥ २४ ॥

'वल्मीकनिकटे' वामलूरसमीपे। 'होमं' हवनम्। 'कुर्यात्' करोतु। 'त्रिमधुरान्वितं' क्षीराज्यशर्करामिश्रित प्राग्भारीकृतप्रसूनान्वितम्। 'मन्त्रसिद्धौ' एतद्विधानेन कृतमन्त्रसिद्धौ प्राप्तायां। 'तमाज्ञाप्य' तं नागेश्वरमाज्ञां कृत्वा। 'प्रेषयेदुरगेश्वरं' नागेश्वरं क्षुद्रकर्मकरणे प्रस्थापयेत्॥ नागप्रेषण-कर्मकरण-जप-होमविधानमभिहितम्॥

प्रेषितोऽहमनेनेति मा कस्यापि पुरो वदेः ।
अन्यमन्त्रेण मा गच्छ मानवं भक्षयामुकम् ॥ २५ ॥

'प्रेषितः' प्रस्थापितः। कः? 'अहं' नागः। केन? 'अनेन' मन्त्रवादिना। 'इति' एवम्। 'कस्यापि पुरो मा वदेः' कस्यापि पुरुषस्याग्रतः मा भाषस्व। 'अन्यमन्त्रेण मा गच्छ' एतन्मन्त्रं विहाय अन्यमन्त्रेण त्वं मा गच्छ। 'मानवं भक्षयामुकं' अमुकं दुष्टपुरुषं भक्षय॥ इति नागप्रेषणविधानम्॥

---

१ प्रणवादिस्वाहान्तश्चिरिधिरिशब्दादिको मन्त्रः इति ग पुस्तके पाठः।

२ चिरि धिरि इति ग पाठः।

इदानीं दूतपातनविधानमभिधीयते —

फणिदष्टस्य शरीरादोंस्वाहामन्त्रतो विषं हृत्वा।
सोमं श्रवल्ललाटाद् दूतं मन्त्रेण पातयेत् ॥२६॥

'फणिदष्टस्य शरीरात्' सर्पदष्टस्य पुरुषस्य शरीरात्। 'ॐ स्वाहा मन्त्रतः' ॐ स्वाहेति वक्ष्यमाणमन्त्रात्। 'विषम्' दष्ट पुरुषदेहस्थं विषम्। 'हृत्वा' अपहृत्य। कथम्? 'सोमं श्रवत्' अमृतं श्रवमाणम्। कस्मात्? 'ललाटात्' भालस्थलात्। 'दूतं' प्रेषकम्। 'मन्त्रेण पातयेत्' पातयितव्यः॥

एतन्मन्त्रोद्धारः—ॐ स्वाहा इत्यनेन मन्त्रेण विषमाह्रियते।

ॐ नमो भगवते वज्रतुण्डाय स्वाहा रक्ताक्षि कुनखि दूतं पातय पातय मर मर धर धर ठ ठ ठ हुँ फट् घे घे॥ इति दूतपातनमन्त्रः।

ॐ लामों फड् मन्त्रोच्चारणतः पतति भोगिना दष्टः।
ॐ होमादिफडन्तो दष्टपटच्छादनो मन्त्रः ॥२७॥

'ॐ लामों फड् मन्त्रोच्चारणतः'। इत्यनेन मन्त्रोच्चारणेन भूमौ पतति। कः? 'भोगिना दष्टः' सर्पेण दष्टपुरुषः। 'ॐ होमादिफडन्तः' ॐ स्वाहा शब्दमादिं कृत्वा फट्शब्दान्तः—वक्ष्यमाणमन्त्रः। 'दष्टपटच्छादनो मन्त्रः' पतितदष्टपुरुषस्य शरीरोपरिवस्त्रच्छादनमन्त्रः।

मन्त्रोद्धारः—ॐ लाँ ॐ फड् इति दष्टपातनमन्त्रः।

ॐ स्वाहा रु रु रु रु[1] ह्रो प्लं सर्वं हारय संहारय ॐ यूँ ॐ ॐ गरुडाक्षि ॐ फट्॥ इति दष्टपटच्छादनमन्त्रः॥

पवननभोऽक्षरमन्त्रेणाकृष्य च धावते ततो वस्त्रम्।
अनुधावति तत्पृष्ठे यत्र पटः पतति तत्रासौ ॥२८॥

'पवननभोऽक्षरमन्त्रेण' स्वाहेत्यक्षरमन्त्रेण। 'आकृष्य' तद्दष्टाच्छादनपटमाकृष्य। 'धावते' धावनं करोति। 'ततः' तस्मात्। 'वस्त्रं' आच्छादनपटम्। 'अनुधावति तत्पृष्ठम्' तद्वस्त्रमाकृष्य यः पुरुषो धावति तत्पृष्ठं स दष्टः अनुधावति। 'यत्र पटः पतति तत्रासौ' यस्मिन् स्थले तद् गृहीतपटः पतति तत्रैवासौ दष्टः पतति॥ स्वाहेति दष्टाच्छादितपटाकर्षणमन्त्रः॥

मन्त्रेणानेन फणी विषमुक्तो भवति जल्पितेन शनैः।
अपहरति निजस्थानादशितेऽपि विषं न सङ्क्रमते ॥२९॥

'मन्त्रेणानेन' अनेन कथितमन्त्रेण। 'फणी विषमुक्तो भवति' सर्पो विषमुक्तो भवति। केन? 'जल्पितेन' वक्ष्यमाणमन्त्रपठनेन। 'शनैः' शनैरपि। 'अपहरति निजस्थानात्' स्वकीयस्थानात् तद्दष्टस्य विषापहारो भवति। 'अशितेऽपि विषं न सङ्क्रमते' सर्पेण भक्षितेऽपि सति तस्य पुरुषस्यापि विषसङ्क्रमो न भवतीति निर्विषीकरणम्॥

---

१ क्ष क्ष क्ष क्ष क्ष इति ख पाठः।

मन्त्रोद्धारः—ॐ नमो भगवते पार्श्वतीर्थङ्कराय हंसः महाहंसः पद्महंसः शिवहंसः कोपहंसः उरगेशहंसः पक्षि महाविषभक्षि हुँ फट्[१] ।। इति निर्विषीकरणमन्त्रः ।।

तेजो नमः सहस्रादि मन्त्रं प्रपठतः फणी ।
अनुयाति ततः पृष्ठं याहीत्युक्ते निवर्तते ।। ३० ।।

'तेजो नमः सहस्रादि मन्त्रं प्रपठतः' ॐ नमः सहस्रजिह्वे ! इत्यादिं मन्त्रं प्रपठतः पुरुषस्य। 'फणी' सर्पः। 'अनुयाति ततः पृष्ठं' तन्मन्त्रपठितपुरुषस्य पृष्ठमनुगच्छति। 'याहीत्युक्ते निवर्तते' स एव सर्पः पुनरपि याहीत्युक्ते व्याघुटय गच्छति ।।

तन्मन्त्रोद्धारः—ॐ नमो सहस्रजिह्वे ! कुमुदभोजिनि ! दीर्घकेशिनि ! उच्छिष्टभक्षिणि ! स्वाहा ।।

इतिं नागसहागमनमन्त्रः ।।

ॐ ह्रीँ श्रीँ ग्लौँ हुँ क्ष्रूँ टान्तद्वितयेन फणिमुखस्तम्भः ।
हुँ क्ष्रूँ ठठेति गमने दृष्टिं हाँ क्ष्राँ ठठेति बध्नाति ।। ३१ ।।

'ॐ ह्रीँ श्रीँ ग्लौँ हुँ क्ष्रूँ'। 'टान्तद्वितयेन' ठठेति मन्त्रेण। 'फणिमुखस्तम्भः' अनेन मन्त्रेण सर्पमुखस्तम्भो भवति। 'हुँ क्ष्रूँ ठठेति गमने' हुँ क्ष्रूँ ठ ठ इत्यनेन मन्त्रेण सर्पस्य गतिस्तम्भो भवति। 'दृष्टिं हाँ क्ष्राँ ठठेति बध्नाति' सर्पस्य दृष्टिं हाँ क्ष्राँ ठ ठ इति मन्त्रेण बध्नाति ।। ।। इति फणिमुख-गति-दृष्टिस्तम्भनविधिः ।।

वामं सुवर्णरेखाया गरुडाज्ञापयत्यतः ।
स्वाहान्तं मन्त्रमुच्चार्य कुण्डलीकरणं कुरु ।। ३२ ।।

'वामं सुवर्णरेखायाः' ॐ सुवर्णरेखाया इति पदम्। 'गरुडाज्ञापयत्यतः' सुवर्णरेखापदानन्तरं गरुडाज्ञापयतीति पदम्। 'स्वाहान्तं मन्त्रमुच्चार्य' स्वाहाशब्दमन्ते कृत्वा तन्मन्त्रं पठित्वा। 'कुण्डलीकरणं कुरु'।

मन्त्रोद्धारः—ॐ सुवर्णरेखाया गरुडाज्ञापयति कुण्डलीकरणं कुरु कुरु स्वाहा ।।

सप्रणवः स्वाहान्तो ललललललसंयुतः करोत्येषः ।
मन्त्रो घटप्रवेशं क्षणेन नागेश्वरस्यापि ।। ३३ ।।

'सप्रणवः स्वाहान्तः' ॐकारादिः स्वाहाशब्दान्त्यः। 'ललललललसंयुतः' लललललल इत्यक्षरैः षड्भिर्युक्तः। 'करोतिं' कुरुते। 'एषः मन्त्रः' एतत्कथितमन्त्रः। किं करोति? 'घटप्रवेशं' कुम्भप्रवेशं। 'क्षणेन' क्षणमात्रेण। कस्य? 'नागेश्वरस्यापि' नागाधिपस्यापि क्षणेन घटप्रवेशं करोति ।।

मन्त्रोद्धारः—ॐ लललललल स्वाहा ।। फणिकुम्भप्रवेशनमन्त्रः ।।

ॐ हाँ ह्रीँ गरुडाज्ञा ठठेति तन्मुद्रया कृतां रेखाम् ।
भुजगो मरणावस्थां न लङ्घते तां कदाचिदपि ।। ३४ ।।

---

१ फट् स्वाहा इति ख पाठः।

'ॐ ह्राँ ह्रीँ गरुडाज्ञा ठठेति' ॐ ह्राँ ह्रीँ गरुडाज्ञा ठठ इत्यनेन मन्त्रेण। 'तन्मुद्रया' गरुडमुद्रया। 'कृतां रेखां' मन्त्रिणा भूमौ कृतां रेखां। 'भुजगो मरणावस्थः' सर्पो मरणावस्थां प्राप्तः। 'न लङ्घते' लङ्घनं कर्तुं न शक्नोति। 'कदाचिदपि' कस्मिंश्चित्कालेऽपि ॥

मन्त्रोद्धारः—ॐ ह्राँ ह्रीँ गरुडाय ठठ ॥ इति रेखामन्त्रः ॥

कपिकच्छूरसभावितखटिका प्रणवादिनील परिजप्त्वा।
लेख्यस्तयोपदेशात् खटिकासर्पः शनेर्वारे ॥ ३५ ॥

'कपिकच्छूरसभावितखटिका' कण्डुकरीरसेन सप्तवारं भाविता खटिका। 'प्रणवादिनील परिजप्त्वा' सा खटिका प्रणवादि-नीलमन्त्रेण समं जप्त्वा। 'लेख्यस्तया' खटिकया लेखनीयः। कथम्? 'उपदेशात्' उपदेशपूर्वेण। कः? 'खटिकासर्पः' तत्खटिकालिखितसर्पः। कस्मिन्? 'शनेर्वारे' शनिदिने ॥

मन्त्रोद्धारः—ॐ नीलविषमहाविषसर्पसंक्रामणि! स्वाहा ॥ इति विषसंक्रामणमन्त्रः ॥

यो हन्यात् तद्वक्त्रं खटिकासर्पो दशति नात्र सन्देहः।
दृष्ट्वा करतलदशनं मूर्च्छति विषवेदनाकुलितः ॥ ३६ ॥

'यो हन्यात् तद्वक्त्रं खटिकासर्पो दशति नात्र संदेहः' अत्र खटिकासर्पविधाने सन्देहो न कार्यः। 'दृष्ट्वा करतलदशनं' तत्सर्पदशनदंशं करतले दृष्ट्वा। 'मूर्च्छति' पुरुषो मूर्च्छां प्राप्नोति। कथम्भूतः? 'विषवेदनाकुलितः' विषजनितवेदनाकुलितः। इति खटिकासर्पकौतुकविधानम् ॥

ॐ क्रौँ प्रौँ त्रौँ ठः मन्त्रेण विषं हूँकारमध्यगं जप्त्वा।
सूर्यं दृशावलोक्य भक्षयेत् पूरकात् ततः ॥ ३७ ॥

अतः परं मूलविषविधानमभिधीयते—

'ॐ क्रौँ प्रौँ त्रौँ ठ मन्त्रेण' अनेन मन्त्रेण। 'विषं' स्थावरविषम्। कथम्भूतम्? 'हूँकारमध्यगम्' करतलहूँकारमध्ये स्थितं विषं कथितमन्त्रेण। 'जप्त्वा' अभिमन्त्र्य। 'सूर्यं' रविं। 'दृशावलोक्य' दृष्ट्या निरीक्ष्य। 'भक्षयेत्' विषभक्षणं कुर्यात्। कथम्? 'पूरकात् ततः' पूरकयोगात् ॥

मन्त्रोद्धारः—ॐ क्रौँ प्रौँ त्रौँ ठः ॥ इति विषभक्षणमन्त्रः ॥

प्रतिपक्षाय दातव्यं ध्यात्वा नीलनिभं विषम्।
ग्लौँ ह्लौँ मन्त्रयित्वा तु ततो घे घेति मन्त्रिणा ॥ ३८ ॥

'प्रतिपक्षाय' शत्रुलोकाय। 'दातव्यं' देयम्। 'ध्यात्वा' ध्यानं कृत्वा। कथम्भूतम्? 'नीलनिभम्' नीलवर्णस्वरूपम्। किम्? 'विषं' मूलविषम्। किं कृत्वा? 'ग्लौँ ह्लौँ मन्त्रयित्वा' इतिमन्त्रेणाभिमन्त्र्य। 'तु' पुनः। 'ततः' ग्लौँ ह्लौँ इति बीजद्वयात्। 'घेघेति' घे घे इति पदं जपित्वा। केन? 'मन्त्रिणा' मन्त्रवादिना ॥

मन्त्रोद्धारः—ग्लौँ ह्लौँ घे घे ॥ ॥ इति प्रतिपक्षाय नीलध्यानेन युक्तविषदानमन्त्रः ॥

मुनिहयगन्धाघोषा वन्ध्या कटुतुम्बिका कुमारी च।
त्रिकटुककुष्ठेन्द्रयवा घ्नन्ति विषं नस्यपानेन ॥ ३९ ॥

'मुनिः' अगस्तिः। 'हयगन्धा' अश्वगन्धा। 'घोषा' देवदाली। 'वन्ध्या' कर्कोटी। 'कटुतुम्बिका' कटुकालाबुका। 'कुमारी' गृहकन्या। 'त्रिकटुकं' त्र्यूषणम्। 'कुष्ठम्' रुक्। 'इन्द्रयवा' कुटजबीजम्। 'घ्नन्ति' नाशयन्ति। 'विषं' स्थावरजङ्गमविषम्। कथम्? 'नस्यपानेन' एतदौषधानां नस्येन पानेन च सर्वं विषं नश्यति॥

द्विपमलभूतच्छत्रं रविदुग्धं श्लेष्मतरुफलोपेतम्।
वृश्चिकविषसङ्क्रामं बदरीतरुदण्डसंयोगात् ॥ ४० ॥

'द्विपमलभूतच्छत्रं' द्विरदमलोद्भूतच्छत्रम्। 'रविदुग्धं' मार्तण्डक्षीरम्। 'श्लेष्मतरुफलोपेतम्' श्लेष्मातकफलचिक्कान्वितम्। 'वृश्चिकविषसंक्रामं' वृश्चिकविषोत्तारणं अन्येषां विषसंक्रामम्। 'बदरीफलदण्डसंयोगात्' पुष्यार्के ऊर्ध्वाधोगतकण्टकद्वयान्वितबदरीशलाकां गृहीत्वा तदौषधत्रयलेपं कृत्वा ऊर्ध्वकण्टकेनोत्तार्य अधोगतकण्टकेन अन्योऽन्यं संक्रामति॥

षट्कोणभवनमध्ये कुरुकुल्लां यो लिखेद् गृहे विद्याम्।
तत्र न तिष्ठति नागो लिखिते नागारिबन्धेन ॥ ४१ ॥

'षट्कोणभवनमध्ये' षट्कोणचक्रमध्ये। 'कुरुकुल्लां' कुरुकुल्लानामदेव्या मन्त्रः। 'यो लिखेद्' यः कोऽपि मन्त्रवादी लिखेत्। क्व? 'गृहे' गृहदेहल्याम्, स्ववासोत्तराङ्गे। काम्? 'विद्याम्' कुरुकुल्लादेव्या विद्याम्। 'तत्र' तस्मिन् गृहे। 'न तिष्ठति' न स्थाति। कः? 'नागः' सर्पः। कस्मिन् कृते सति? 'लिखिते' सति। केन? 'नागारिबन्धेन' गरुडबन्धेन॥

मन्त्रः—ॐ कुरुकुल्ले! हूं फट्॥

इदानीं मण्डलोद्धारणमभिधीयते—

चतुरस्रं मण्डलमतिरमणीयं पञ्चवर्णचूर्णेन।
प्रविलिख्य चतुःकोणे तोयभृतान् स्थापयेत् कलशान् ॥ ४२ ॥

'चतुरस्रं' समचतुरस्रम्। 'मण्डलं' वक्ष्यमाणमण्डलम्। 'अतिरमणीयं' अत्यन्तशोभमानम्। 'पञ्चवर्णचूर्णेन' श्वेतरक्तपीतहरितकृष्णमिति पञ्चवर्णचूर्णेन। 'प्रविलिख्य' प्रकर्षेण लिखित्वा। 'चतुःकोणे' तन्मण्डलचतुःकोणे। 'तोयभृतान्' जलपरिपूर्णान्। स्थापयेत्। कान्? 'कलशान्' कुम्भान्॥

तस्योपरि विपुलतरं मण्डपमतिसुरभिपुष्पमालिकाकीर्णम्।
चन्द्रोयकध्वजतोरणघण्टारवदर्पणोपेतम् ॥ ४३ ॥

'तस्योपरि' तन्मण्डलोपरि। 'विपुलतरं' अतिविस्तीर्णम्। 'मण्डपं'। कथम्भूतम्? 'अतिसुरभिपुष्पमालिकाकीर्णम्'। पुनः कथम्भूतम्? 'चन्द्रोयकध्वजतोरणघण्टारवदर्पणोपेतम्' वितानध्वजवन्दनमालाक्षुद्रघण्टिकाविशिष्टदर्पणान्वितम्॥

पञ्चपरमेष्ठिमन्त्रं प्रत्येकं प्रणवपूर्वहोमान्तम् ।
अष्टदलकमलमध्ये हिमकुङ्कुममलयजैर्विलिखेत् ॥ ४४ ॥

'पञ्चपरमेष्ठिमन्त्रं' अर्हत्सिद्धाचार्योपाध्यायसर्वसाधूनां मन्त्रम् । अमुं च कथम्भूतम् ? 'प्रत्येकं' पृथक्पृथक् । 'प्रणवपूर्वहोमान्तं' ॐकारादिस्वाहाशब्दान्तम् । 'अष्टदलकमलमध्ये' अष्टदलाम्बुजमध्ये—अष्टदलकर्णिकामध्ये । 'हिमकुङ्कुममलयजैः' कर्पूरकाश्मीरश्रीगन्धैः । 'विलिखेत्' विशेषेण लिखेत् ॥

मन्त्रोद्धारः—ॐ अर्हद्भ्यः स्वाहा, ॐ सिद्धेभ्यः स्वाहा, ॐ सूरिभ्यः स्वाहा, ॐ पाठकेभ्यः स्वाहा, ॐ सर्वसाधुभ्यः स्वाहा । इति पञ्चपरमेष्ठिनां मन्त्रं कर्णिकामध्ये लिखेत् ॥

पूर्वाग्न्यादिषु दद्याज्जयादिजम्भादिदेवता ह्येताः
तद्दक्षिणदिग्भागे हेममयीं पादुकां देव्याः ॥ ४५ ॥

'पूर्वाग्न्यादिषु' पूर्वादिचतुर्दिशासु आग्नेय्यादिचतुर्विदिशासु च । 'हि' स्फुटम् । 'एताः' कथितदेवताः । 'तद्दक्षिणदिग्भागे' तन्मण्डलदक्षिणदिक्प्रदेशे । 'हेममयीं' स्वर्णविनिर्मिताम् । 'पादुकां देव्याः' पादुकाद्वयं दद्याद्देव्याः ॥

स्थापनक्रमः—जये स्वाहेति प्राच्यां दिशि १, ॐ विजये स्वाहेति दक्षिणायां दिशि २, ॐ अजिते स्वाहेति प्रतीच्यां दिशि ३, ॐ अपराजिते स्वाहेति उत्तरस्यां दिशि ४, ॐ जम्भे स्वाहेत्याग्नेय्यां दिशि ५, ॐ मोहे स्वाहेति नैरृत्यां दिशि ६, ॐ स्तम्भे स्वाहेति वायव्यायां दिशि ७, ॐ स्तम्भिनि स्वाहेतीशान्यां दिशि ८, इत्यष्टदलेषु जयादिजम्भादिदेवता विलिखेत् ॥

अभ्यर्च्य गन्धतन्दुलकुसुमनिवेद्यप्रदीपधूपफलैः ।
परमेष्ठिनं च मन्त्रं भैरवपद्मावतीपादौ ॥ ४६ ॥

'अभ्यर्च्य' अभिपूज्य । कैः ? 'गन्धतन्दुलकुसुमनिवेद्यप्रदीपधूपफलैः' श्रीगन्धाक्षतपुष्पचरुनैवेद्यदीपधूपफलाद्यष्टविधार्चनाद्रव्यैः । 'परमेष्ठिनं च मन्त्रम्' पञ्चपरमेष्ठिमन्त्रम् । 'अभ्यर्च्य' पूजयित्वा । 'पूजयेत् भैरवपद्मावतीपादौ' भैरवपद्मावतीदेव्याः पादौ—स्वर्णपादुके अपि पूजयेत् ॥

परसमयजनविरक्तं शिष्यं जिनसमयदेवगुरुभक्तम् ।
कृतवस्त्रालङ्कारं संस्नातं मण्डलाभिमुखम् ॥ ४७ ॥

'परसमयजनविरक्तम्' मिथ्याशासनलोकविरक्तम् । 'शिष्यं' विनेयम् । पुनः कथम्भूतम् ? 'जिनसमयदेवगुरुभक्तम्' जिनशासनदेवतासद्गुरुभक्तम् । 'कृतवस्त्रालङ्कारं' कृतो वस्त्रालङ्कारो येनासौ कृतवस्त्रालङ्कारः तम् कृतवस्त्रालङ्कारम् । पुनः कथम्भूतम् ? 'संस्नातम्' सम्यक्स्नातम् । 'मण्डलाभिमुखम्' उद्धारितमण्डलस्याभिमुखम् ॥

संस्नाप्य चतुःकलशैः सहिरण्यैस्तं ततोऽन्यवस्त्रादीन् ।
दत्त्वा तस्मै मन्त्रं निवेदयेत् गुरुकुलायातम्[1] ॥ ४८ ॥

---

१ क्रमायातम् ख पाठः

'संस्नाप्य' तं शिष्यं सम्यक्स्नापयित्वा। कैः? 'चतुःकलशैः' प्राङ्मण्डलकोणस्थचतुःपूर्णकलशैः। कथम्भूतैः? 'सहिरण्यैः' स्वर्णयुक्तैः। 'तं' शिष्यम्। 'ततः' स्नानानन्तरम्। 'अन्यवस्त्रादीन्दत्त्वा' पूर्ववस्त्रादीनपहायान्य-नववस्त्रादीन् दत्त्वा। 'तस्मै' एवंविधशिष्याय। 'मन्त्रं निवेदयेत्'। कथम्भूतं मन्त्रम्? 'गुरुकुलायातम्' गुरुपारम्पर्येणागतम्॥

भवतेऽस्माभिर्दत्तो[१] मन्त्रोऽयं गुरुपरम्परायातः।
साक्षीकृत्य हुताशनरविशशिताराम्बराद्रिगणान्॥४९॥

'भवते' तुभ्यं शिष्याय। 'अस्माभिर्दत्तः'। 'मन्त्रोऽयं' प्राक्कथितमन्त्रः। कथम्भूतः? 'गुरुपरम्परायातः' गुरुपारम्पर्येणागतः। किं कृत्वा? 'साक्षीकृत्य' साक्षिकं कृत्वा। कान्? 'हुताशनरविशशिताराम्बराद्रिगणान्' अग्न्यर्कचन्द्रनक्षत्राकाशाद्रिसमूहान्॥

भवतापि न दातव्यः सम्यक्त्वविवर्जिताय पुरुषाय।
किन्तु गुरुदेवसमयिषु भक्तिमते गुणसमेताय॥५०॥

'भवतापि' त्वयापि। 'न दातव्यः' न देयः। कस्मै? 'सम्यक्त्वविवर्जिताय' सम्यक्त्वविहीनाय। 'पुरुषाय' नराय। 'किन्तु' अथवा। 'गुरुदेवसमयिषु भक्तिमते' गुरुदेवसमये भक्तियुक्ताय। 'गुणसमेताय' सकलगुणसंयुक्ताय एवंगुणविशिष्टाय पुरुषाय दातव्यः॥

लोभादथवा स्नेहाद्दास्यसि चेदन्यसमयभक्ताय।
बालस्त्रीगोमुनिवधपापं यत्तद्भविष्यति ते॥५१॥

'लोभात्' अर्थाभिलाषात्। अथवा 'स्नेहात्' व्यामोहात्। 'दास्यसि चेत्' यदि इमां विद्यां दास्यसि। कस्मै? 'अन्यसमयभक्ताय' परसमयभक्तियुक्ताय। तदा 'बालस्त्रीगोमुनिवधपापं यत्' बालकस्त्रीजनगोमुनिजन-हननेन यत् पापम्। 'तद्भविष्यति ते' तत् पापं तव भविष्यति।

इत्येवं श्रावयित्वा तं सन्निधौ गुरुदेवयोः।
मन्त्री समर्पयेन्मन्त्रं मन्त्रसाधनयोगतः॥५२॥

'तं' मन्त्रग्राहकम्। 'इत्येवं श्रावयित्वा' इत्यनेन प्रकारेण शपथं कारयित्वा। कथम्? 'सन्निधौ गुरु-देवयोः' गुरुदेवयोः सन्निधाने। 'मन्त्री' मन्त्रवादी। 'समर्पयेत्' नियोजयेत्। कम्? 'मन्त्रम्' गुरुपारम्पर्यागतं मन्त्रम्। कथम्? 'मन्त्रसाधनयोगतः' मन्त्राराधनविधानयोगात्॥

प्रशस्तिः—

सकलनृपमुकुटघटितचरणयुगः श्रीमदजितसेनगणी।
जयतु दुरितापहारी भव्यौघभवार्णवोत्तारी॥५३॥

---

१ मया क पाठः

'सकलनृपमुकुटघटितचरणयुगः' सकलभूपालमुकुटघटितपादारविन्दद्वयः। 'श्रीमदजितसेनगणी' श्रीमदजितसेनाचार्यः। 'जयतु' सर्वोत्कर्षेण वर्तताम्। 'दुरितापहारी' पापापहारी। पुनः कथम्भूतः? 'भव्यौघभवार्णवोत्तारी' भव्यजनसमूहस्य संसारसमुद्रोत्तारकः।

जिनसमयागमवेदी गुरुतरसंसारकाननोच्छेदी।
कर्मेन्धनदहनपटुस्तच्छिष्यः कनकसेनगणिः ॥ ५४ ॥

'जिनसमयागमवेदी' जिनेश्वरसमयसकलागमज्ञाता। 'गुरुतरसंसारकाननोच्छेदी' दुर्धरसंसृतिकान्तारोन्मूलनसमर्थः। 'कर्मेन्धनदहनपटुः' सकलकर्मेन्धनदहनक्रियायां अतीव दक्षः। 'तच्छिष्यः' श्रीमदजितसेनाचार्यस्य शिष्यः। कः? 'कनकसेनगणी' कनकसेनाचार्यः ॥

चारित्रभूषिताङ्गो निःसङ्गो मथितदुर्जयानङ्गः।
तच्छिष्यो जिनसेनो बभूव भव्याब्जघर्मांशुः ॥ ५५ ॥

'चारित्रभूषिताङ्गः' सकलचारित्रभूषितशरीरः। 'निःसङ्गः' बाह्याभ्यन्तरपरिग्रहरहितः। 'मथितदुर्जयानङ्गः' दुर्जयश्चासौ अनङ्गश्च दुर्जयानङ्गः मथितो दुर्जयानङ्गो येन स मथितदुर्जयानङ्गः निर्जितमदनः। 'तच्छिष्यः' कनकसेनाचार्यस्य शिष्यः। कः? 'जिनसेनः' जिनसेनाचार्यः। 'बभूव' सञ्जातः। कथम्भूतः? 'भव्याब्जघर्मांशुः' भव्यकमलप्रबोधनदिवाकरः ॥

तदीयशिष्योऽजनि मल्लिषेणः सरस्वतीलब्धवरप्रसादः।
तेनोदितो भैरवदेवताया कल्पः समासेन चतुःशतेन ॥ ५६ ॥

'तदीयशिष्यः' जिनसेनाचार्यस्य शिष्यः। 'अजनि' जातः। कः? 'मल्लिषेणः' मल्लिषेणाचार्यः। कथम्भूतः? 'सरस्वतीलब्धवरप्रसादः' सरस्वतीदेव्याः सकाशात् प्राप्तवरप्रसादः। 'तेन' मल्लिषेणाचार्येण। 'उदितः' कथितः। 'भैरवदेवतायाः' भैरवपद्मावतीदेव्याः। 'कल्पः' मन्त्रवादसमूहः। 'समासेन' संक्षेपेण। 'चतुःशतेन' चतुःशतसङ्ख्याग्रन्थप्रमाणेन ॥

यावद्वार्धिमहीधरतारागणगगनचन्द्रदिनपतयः।
तिष्ठन्ति तावदास्तां भैरवपद्मावतीकल्पः ॥ ५७ ॥

'यावत्' यावत्कालपर्यन्तम्। 'वार्धिः' समुद्रः। 'महीधरः' कुलशैलः। 'तारागणः' नक्षत्रसमूहः। 'गगनं' आकाशः। 'चन्द्रः' मृगाङ्कः। 'दिनपतिः' मार्तण्डः। एते वार्ध्यादयो यावत्कालपर्यंतं 'तिष्ठन्ति' स्थास्यन्ति। 'तावत्' तावत्कालपर्यन्तम्। 'आस्ताम्' तिष्ठतु। 'भैरवपद्मावतीकल्पः' भैरवपद्मावतीनामदेव्याः मन्त्रकल्पः ॥

इत्युभयभाषाकविशेखरश्रीमल्लिषेणसूरिविरचितो
भैरवपद्मावतीकल्पः समाप्तः ॥

## परिशिष्ट १

श्वेताम्बरचक्रचूडामणिश्रीयशोभद्रोपाध्यायशिष्यश्रीचन्द्रसूरिविरचितः

# अद्‌भुतपद्मावतीकल्पः।

श्रीपार्श्वनाथाय नमः।

शकलीकरणलक्षणं तृतीयं प्रकरणम् ॥३॥

पूर्वं पूर्वाभिमुखः स्नातः शुभवस्त्रभूषितः सुरभिः।
पर्यङ्कासनसंस्थो नासाग्रन्यस्तदृग्युग्मः ॥ १ ॥
निर्मलनिर्जनदेशे स्थित्वा मन्त्री निरुध्य वायुं च।
आपूर्य शनैरन्तो रेचकविधिना ततस्तूर्ध्वम् ॥ २ ॥
उत्क्षिप्य च धूमशिखाकारेण विधूय पापरेणुं च।
आत्मानं कर्मेन्धनपुञ्जस्योपरि स्थितं स्मरेत् ॥ ३ ॥

त्रिभिः कुलकम्।

दीपशिखाकारेण तु तदधो जाज्वल्यमानरेफं च।
निजहृदये चाकारं विचिन्तयेदात्मरूपेण ॥ ४ ॥
प्रविचिन्त्य धकारं तद्रेफस्याधश्च वायुरूपेण।
दन्दह्यमानमग्निकबीजेनात्मानमवमत्य ॥ ५ ॥
भस्मीभूतमकारकबीजात्मकशेषमुपरि तस्यैव।
मेघाकारेण ततस्त्वधो मुखाकारबीजमाकाशे ॥ ६ ॥
वर्षन्तममृतमुक्ताफलसन्निभतोयनिकरेण।
प्लवमानं संस्मरयेत् परितो मन्त्री च सदूहृदयः ॥ ७ ॥

त्रिभिः कुलकम् ॥

द्विकूछदनममलकमलं तदमृतभावोद्भवं सदा विकचम् ।
तत्कर्णिकमध्यगतं सुधोद्भवात्मानमर्जुनभम् ॥ ८ ॥
पर्यङ्कासनसंस्थितमिति ध्यात्वाऽथ हृदि करवलेन ।
षोडशदशमम्बुरुहं तत्कर्णिकमध्यमूर्ध्वस्थान् ॥ ९ ॥
[1]पविनन्द्यावर्तयवांस्तदुपरि संस्थाप्य पार्श्वजिननाथम् ।
निखिलकललक्षणाढ्यं विविधचतुस्त्रिंशदतिशयोपेतम् ॥ १० ॥
पापमथनाष्टकमहाप्रातिहार्ययुक्तं ततस्ततः परिधौ ।
तत्केशरेषु मरुदेव्यादिकजननीगणं न्यस्य ॥ ११ ॥
तत्पत्रगता रोहिणिमुख्याश्च द्व्यष्टदेवताः क्रमशः ।
इति विन्यस्य च मन्त्री ध्यानविधानं करोतु सदा ॥ १२ ॥

चतुर्भिः कलापकम् ।

अर्हत्सिद्धाचार्योपाध्यायान् सर्वसाधुयुतान् ।
अङ्गुष्ठाद्यङ्गुलितत्पर्वसु संन्यस्य वाद्यन्तान् ॥ १३ ॥
[2]होमान्ताः [3]प्रणवनमोमुख्याः [4]पञ्चपरमेष्ठिमध्यगताः ।
ह्राँ ह्रीं ह्रूँ ह्रौं ह्रः शरबीजाः प्रान्त्यादिदेशपदाः ॥ १४ ॥
त्रीन् वारान् पञ्चाङ्गुलिमन्त्रणमाधाय जल्पितैर्मन्त्रैः ।
सर्वैकरेण तैरपि [5]ललाटमुख्यादिपञ्चकं मन्त्र्यम् ॥ १५ ॥
सव्यासव्यकराभ्यां त्रीनथ हृदयं शिरःशिखां वारान् ।
कवचीकृत्य च तैरपि मुख्यं मन्त्रं ततो ध्यायेत् ॥ १६ ॥

चतुर्भिः कलापकम् ॥

इति शकलविधानं शाकिनीदुष्टभूत-
ग्रहगणभवपीडाकष्टनिष्ठापनाग्निः ।
स्वकवपुषि विधाय भ्रान्तिनिर्घाटनं च
तदनु रचतु मन्त्री देवीपूजाक्रमं हि ॥ १७ ॥

इति श्वेताम्बरचक्रचूडामणिश्रीयशोभद्रोपाध्याय-
शिष्यचन्द्रप्रकाशितेऽद्भुतपद्मावतीकल्पे
शकलीकरणलक्षणं तृतीयं[6]
समाप्तम् ॥ ३ ॥

---

१ वज्रम् । २ स्वाहान्ताः । ३ ॐकार० । ४ 'अरिहंताणं' इत्यादीनि लभ्यन्ते । ५ शीर्षं, वदनं, हृदयं, नाभिः, पादौ चेति मुख्यादिपञ्चकम् । ६ आद्यप्रकरणद्वयं न क्वापि दृष्टिगोचरीबभूव मे ।

## देव्यर्चनाक्रमसयन्त्रलक्षणं चतुर्थं प्रकरणम् ॥४॥

उद्यानवने जिनवरह्रदिनीतटेऽथवा पुलिने ।
नगकटके निर्जन्तुकदेशे वाऽन्यत्र संस्थाय ॥ १ ॥
अऊऋऌवर्जं [1]कूटैर्दशभिः [2]कलाभिरधियुक्तैः ।
प्राच्यादिदिग्विबन्धं पूर्वं मन्त्री करोतु शुचिः ॥ २ ॥ युग्मम् ॥
ध्यायेत् पीतमखण्डं रानुस्नं (?) वज्रपञ्जरं स्वस्य ।
परितो दुष्टैरन्यैरभेद्यमेतत् ततः स्थिरधीः ॥ ३ ॥
यन्मध्यगतं दुष्टग्रहो जिघांसुर्न लङ्घयेत् कोऽपि ।
मन्त्रार्चादिप्रभृतिनि कार्ये सर्वत्र मन्त्रविदम् ॥ ४ ॥
याति ग्रहोऽपि धूर्तस्त्यक्त्वा पात्रं हि चेत् तदार्नो तु ।
आशाबन्धं मन्त्रं कुर्यादित्थं पुरा गदितम् ॥ ५ ॥
आकर्षणं वसन्ते ग्रीष्मे विद्वेषमुच्चाटम् ।
प्रावृडि शिशिरे मारणमथ शान्तिं शरदि मन्त्रविदः ॥ ६ ॥
हेमन्ते पौष्टिकमिह ये कुर्वन्त्यविरतं नियतम् ।
सकलत्रिलोकमूर्धनि भवन्ति ते पूजनीया हि ॥ ७ ॥
पूर्वाह्णेऽथ वसन्तं मध्याह्ने ग्रीष्ममपराह्णे ।
प्रावृडपि प्रदोषे शिशिरं शरदं तथाऽर्धनिशि ॥ ८ ॥
हेमन्तमुषाप्रान्ते मन्त्रविदो विदुरसन्दिग्धम् ।
कर्मभिः कालैः कृतमिह सिद्धिं याति नो वितथम् ॥ ९ ॥
एतद् विदन्ति केचित् पुनरन्ये चैतदेव विवदन्ति ।
षट्कर्मकृतिविधानं सम्यक् सन्मन्त्रतन्त्रविदः ॥ १० ॥
वश्यविधानं पूर्वाह्णे मध्याह्ने प्रीतिनाशनं झटिति ।
उच्चाटनमपराह्णे सन्ध्यायां मारणं तदनु ॥ ११ ॥
शान्तित्वमर्धरात्रे प्रातः पौष्टिकमामनन्ति बुधाः ।
अनयोरेकान्मध्ये यद्युक्तं तत् करोतु सदा ॥ १२ ॥
कुकुडं [3]नीरज-दण्ड-स्वस्तिक-पवि-भद्रपीठकास्यानि[4] ।
द्वेषण-शान्त्याकर्षण-वशीकरण-रोध-बोध-वधसमये ॥ १३ ॥
पवि-कमल-[5]बोध-वल्लव-शङ्खाङ्कुशलक्षणा हि षण्मुद्राः ।
वध-वश्य-शान्ति-विद्वेषण-रोधाकृष्टिकार्येषु ॥ १४ ॥

---

१ क्षकारैः । २ अनुस्वारविसर्जनीयसहितानां स्वराणां कला इति सञ्ज्ञा भवति । ३ पद्मम् । ४ आसनानि । ५ बोधो मुद्रयस्य मुद्रा ।

शान्त्युच्चाटन-मारण-विद्वेषाकृष्टि-वश्य-संस्तम्भाः ।
[1]उदधि-मरुद्धर-वसु-यम-सोमाऽमरदिक्षु नैर्ऋते पुष्टिः ॥ १५ ॥
रोध-ग्रथन-विदर्भण-दीपन-पल्लवसम्पुटैः क्रियते ।
वध-नाशा-कृष्टि-स्तम्भन-शान्ति-विद्वेषण-वशीकृतिविधानम् ॥ १६ ॥
आदौ मध्ये चान्ते नामनिवेशो हि रोध आख्यातः ।
वर्णान्तरितं ग्रथनं द्विवर्णमध्ये विदर्भश्च ॥ १७ ॥
आदौ दीपनमन्ते सुपल्लवः सम्पुटं तदन्तरगम् ।
एवं षट्कर्मकृतिं ज्ञात्वा मन्त्री जपेन्मन्त्रम् ॥ १८ ॥
ब्रह्मादिपाशकाङ्कुशमाया वाग्बीजचित्तनाथमथ ।
क्लीं षान्तयुतं पद्मावत्यै नम एवमादिमं मन्त्रम् ॥ १९ ॥
ज्ञेयं मन्त्रस्यान्ते जाप्ये समये सदा नमःशब्दः ।
स्वाहा तु होमकाले मन्त्रस्यासौ क्रमः प्रोक्तः ॥ २० ॥
वश्ये वषडुच्चाटे फट् हुं द्वेषे च शान्तिके स्वाहा ।
आकृष्टौ वौषट् घे मारे पौष्टौ स्वधेति मन्त्री ते ॥ २१ ॥
अङ्गुष्ठादावङ्गुलिमणयोऽङ्गुष्ठेन संविवर्त्यन्ते ।
मोक्षाभिचार[2]शान्तिकवशीकराकृष्टिकरणविधौ ॥ २२ ॥
पूर्वमभिमन्त्र्य सलिलं मन्त्रेणाद्येन सप्तवारं हि ।
भूम्युपकरणादीनां शुद्धिं विदधातु सिद्धये मन्त्री ॥ २३ ॥
निर्दोषपट्टममलं धौतं शुचिवारिणा च विन्यस्य ।
[3]रोचनचन्दनकुङ्कुमघनसारप्रभृतिसुरभिभिर्लिप्तम् ॥ २४ ॥
निर्यातिं मरुति मन्त्री शतपत्रकविमलवृन्तकाग्रेण ।
मौनावलम्बनिरतो मण्डलमेवं न्यसेत् तत्र ॥ २५ ॥
सोल्लोचमण्डपलसत्केतुपताकादिमण्डितं विपुलम् ।
विदिशि निवेशितकुम्भं सन्मुसलमथ भूततोरणकम् ॥ २६ ॥ युग्मम् ॥
पूर्वाग्नियमनैर्ऋतपश्चिमवायूत्तरेशदिक्चक्रम्[4] ।
[5]तत्त्वादिनमोऽन्तयुतं सृष्ट्या स्थाप्यं क्रमान्निखिलम् ॥ २७ ॥
[6]श्रीवाग्बीजकमायाधरणेन्द्राय नम एव पाताले ।
स्वर्गाय नमोऽत्रादिमबीजेन्द्राय[7] नम एव ततः ॥ २८ ॥

---

१ पश्चिम–वायव्यकोण–ईशान–आग्नेय–दक्षिण–उत्तर–पूर्वदिक्षु । २ उच्चाटनम् । ३ गोरोचना । ४ ईश–ईशानदिक् । ५ ॐकारः । ६ वाग्बीजं–ऐङ्कारः, माया तु ह्रीं, श्रींऐंह्रीं धरणेन्द्राय नमः, पातालाय नमः इत्याम्नायः । ७ श्रींऐंह्रीं इन्द्राय नमः ।

ह्रिपुटितवह्निपुरान्तः सप्तफटाराजिमुखकमलम् ।
नीलोत्पलदलदेहं सश्रीकं न्यस्य पार्श्वजिनम् ॥ २९ ॥
तदधः सुधाङ्गधवलां चतुर्भुजां लोचनत्रिकोपेताम् ।
मन्त्रात्मिकां न्यसेत् श्रीसुभगां पद्मावतीं देवीम् ॥ ३० ॥ युग्मम्
तत्पूर्वकोणमुख्यात् [1]तेजो-माया-स्मरादिपूर्वनमः ।
नित्या[2] क्लिन्नाथ मदा स्यादुन्मादा द्रवाद्रवा ॥ ३१ ॥
स्यात् तत्परितो वलयेऽन्तनमः षण्मुख्यमन्त्रवर्णाद्याः ।
कामा-कुसुमाऽनङ्गा प्रत्येकं [3]बाणपूर्विकान्येवम् ॥ ३२ ॥
षोडशकोष्ठे तदुपरि [4]मायाद्यन्तनमोयुताः क्रमशः ।
रोहिण्या प्रज्ञप्ती [5]पविपूर्वा श्रृङ्खलांकुशा चक्रा ॥ ३३ ॥
मानवदत्ता काली महायुताऽन्या च गौरी स्यात् ।
गन्धारी जालन्धरी वैरोट्या मानवी तथाऽच्छुप्ता ॥३४॥
मानस्यसावपि महायुक्ता चेति देवता द्व्यष्टौ ।
त्रिवलयमध्ये तदुपरि दण्डेशा विंशदेवतायाः स्युः ॥३५॥
करिराजपद्मदेवासिखिजालौ शोणितांशनाशाडैः ।
केशिश्चण्डः कर्दभभुवनभ्रमणा महारक्तः ॥३६॥
कृष्णो विजयः सिंहः सुस्निग्धो रुद्रजम्भवौ सृष्टया ।
सिद्धार्थश्चेति नमः प्रान्ता ह्रीमादयश्चैते ॥३७॥
[6]तदुपरि युगवलये श्रीदेव्याः[7] सख्यश्चतुर्विंशाः ।
[8]मायादिजया विजया च जयन्त्यपराजिता च मन्दा च ॥३८॥
भद्रा रुद्रा च करालिका च योगिन्यथ शिवा च ।
सा नन्दाऽथो अमला कमला पद्मा [9]महाग्रयोगिन्यः ॥३९॥
[10]सुयुते यन्त्रारूपे चित्रा वियुता परा च जम्भा च ।
स्तम्भा दम्भा मोहा सिद्धेति नमोऽन्तका चेति ॥४०॥
पञ्चमवलये ततः पद्मावत्यङ्गरक्षकाः सुभगाः ।
तुर्यसहस्रा निजनिजशस्त्रयुताः स्युः ससोममुखाः ॥४१॥
देवीसख्यस्त्वथष्टावासां प्रत्येकमस्ति परिवारः ।
पञ्चशतसंख्ययुक्ते ज्ञेयस्तत्रैव गुरुवचनात् ॥ ४२ ॥

---

१ तेज इति ॐकारः । २ ॐह्रीं क्लीं नित्यायै नमः । ३ कामबाण इत्यादि । ४ ह्रींरोहीणी नमः । ५ वज्रश्रृङ्खला, वज्राङ्कुशी । ६ चतुर्थवलये । ७ पद्मावत्याः । ८ ह्रींजयायै नमः । ९ महायोगिनी । सुयन्त्रा, सुरूपा ।

षष्ठम(ष्ठे)वलये तदुपरि पद्मावत्या हि पञ्चशतचेट्यः ।
नानाभरणविभूषितगात्रा न्यस्याः सुरूपयुताः ॥४३॥
सप्तमवलये देव्या दण्डेशा विंशतिस्त्वमीषां स्यात् ।
प्रत्येकं परिवारस्तुर्यसहस्रो महासुभटः ॥४४॥
देव्या अष्टमवलये द्वाःस्थः श्रीमाणिभद्रपरिवारः ।
पञ्चसहस्रो वीरः संस्थाप्यो मन्त्रिभिर्गुरुतः ॥४५॥
[1]पञ्चदशदशमवर्णैर हिताः क्षयुताश्च तत्र युक्तम्ल्र्यूँ ।
व्यञ्जनवर्णाः सृष्ट्या क्रमशः स्थाप्या ध्रुवं स्वस्थाः ॥४६॥
वामेऽ[2]वामेधस्तान्मूर्ध्नि [3]प्रत्यङ्गिराम्बिका ज्वाला ।
चक्रान्तनमो विधिना श्रीमायाकामबीजमुख्याश्च ॥४७॥
रवि-शशि-मङ्गल-बुध-गुरु-शुक्र-शनैश्चर-राहु-केत्वाख्याः ।
[4]तेजस्त्रिमूर्तिपूर्वान्तनमोऽधस्तान्नव ग्रहाः क्रमशः ॥ ४८ ॥
वाग्बीजकश्रीतत्त्वाद्यान्तनमः स्युस्त्वनन्तवासुकिनौ[5] ।
तक्षक-कर्कोटक-कमल-महाकमल-शङ्ख-कुलि-जयास्तदधः ॥ ४९ ॥
श्रीइन्द्रनन्दिमुख्या गुरवः स्थाप्याः क्रमेण तदधस्तु ।
निजगुरुकथिताः शिष्यैरवलम्बितमौनमतिनिपुणैः ॥ ५० ॥
संस्थाप्यैवं मण्डलमथेप्सितासनसमाश्रितो ध्यायेत् ।
दन्तैर्दन्तान् बहुशस्त्वसंस्पृशन्निति महामन्त्री ॥ ५१ ॥
नाभ्युद्गताष्टपत्रककमलप्रान्तस्थितां सुधाशुद्धाम् ।
त्रिफणाहिभूषिततमस्फारशिरस्कां शुभाङ्गधराम् ॥ ५२ ॥
पद्माङ्कुशवरपाशकसम्भूषितभुजचतुष्टयां हृष्टाम् ।
अम्भोजासनसंस्थां श्रीपद्मां देवतां स्थिरधीः ॥ ५३ ॥
शुभ्राम्बरपरिधानां दन्तच्छेदाभहंससंरूढाम् ।
ध्यानविधानेनान्तः श्रीपद्मां देवतां स्थिरधीः (ध्यायेत्) ॥ ५४ ॥

चतुर्भिः कलापकम् ।

पञ्चोपचारपूजामस्येति करोतु चाह्वानम् ।
स्थितिसन्निधिकरणे द्वे पूजां विसर्जनं प्राहुः ॥ ५५ ॥
आदिमबीजाद् देव्याः सम्बोधनमेहि एहि संवौषट् ।
आह्वाननमिदममुना मन्त्रेण करोतु कुसुमाद्यैः ॥ ५६ ॥

---

१ णञौ वर्जयित्वा । २ दक्षिणे । ३ ॐ ह्रों क्लीं प्रत्यङ्गिरायै नमः । ४ ॐ ह्रीँ रवये नमः इतिग्रहस्थापना । ५ ॐ श्रीं ह्रीँ वासुकिने नमः ।

तिष्ठद्वितयं टान्तद्वन्द्वं तु स्थितिकृतौ समारचतु ।
मम सन्निहिता भव भव वषडिति योज्यं च सन्निधीकरणे ॥ ५७ ॥
पूजादीन् गृह्णयुगं नम इति पूजाविधानके तद्वत् ।
स्वस्थानं गच्छयुगं यस्त्रितयं त्वयि विसर्जनके ॥ ५८ ॥
पूरकरेचकयोगेऽमृतमाह्वानं विसर्जनं च तथा ।
पूजाभिमुखीकरणस्थापनसमये च कुम्भकं योगे ॥ ५९ ॥
मन्त्रो येषां यो यः स्यात् तेषां तेन तेन पूजादि ।
कर्मास्मिन् मण्डलके क्रमशः कार्यं ध्रुवं विधिना ॥ ६० ॥
सञ्जप्य लक्षमेकं पुष्पैर्जात्यादिभिः सदा ब्रह्म ।
भूशय्यैकभोज्यः संस्नातो धौतसद्वस्त्रः ॥ ६१ ॥
सदशांशजापकुसुमैर्घृतमधुगुग्गुलसधूपको होमः ।
मन्त्रोच्चारान् नीचैर्दिक्पत्राम्भोजसमकुण्डे ॥ ६२ ॥
क्षीरद्रुममयसुसमित्प्रवर्द्धितानम्भकलवह्नौ ।
देयो निर्मलचित्तैर्मन्त्रिभिरत्यन्तकृतरक्षैः ॥ ६३ ॥
सत्येवं श्रीपद्मा प्रत्यक्षीभूय राज्यमतिविपुलम् ।
नानासिद्धिसमेतं ददाति नियतं क्षणादेव ॥ ६४ ॥
भूतोरगवेतालाः करालकङ्कालकालयोगिन्यः ।
उरलकसहजाद्यशुभास्त्रसन्ति तदृष्टिविक्षेपात् ॥ ६५ ॥
चिन्तितनार्याकृष्टिश्चिन्तितरिपुवर्गमारणोच्चाटम् ।
चिन्तितशान्तिक-पौष्टिकमिहापि वचनैर्भवेत् तस्य ॥ ६६ ॥

अनुदिनमतिभक्त्या मण्डलं यः स्वशक्त्या द्विनवकुसुमषट्कैरर्चयेन्मासषट्कः ।
किमिह बहुभिरुक्तैः सारसीमाविरक्तैः स्मरति यदपि कामं स्यात् करे तत् प्रकामम् ॥

इति श्वेताम्बरचक्रचूडामणिश्रीयशोभद्रोपाध्यायशिष्य-
चन्द्रप्रकाशितेऽद्भुतपद्मावतीकल्पे देव्यर्चनाक्रम-
सयन्त्रलक्षणं चतुर्थम् ।

पात्रविधिलक्षणं पञ्चमं प्रकरणम् ॥५॥

श्रवणचरणचक्षुःपाणिनासाप्रशस्तं
द्वितयकुलविशुद्धं षट्कवर्षप्रमाणम् ।
सुरभिजलपवित्रं श्वेतसद्वस्त्रयुक्तं
कुसुममलयजाद्यैर्भूषि पात्रं प्रशस्तम् ॥ १ ॥
अतिशयितकुरूपं छिन्नकर्णादिरूपं
कुकुलमधमभावं रूक्षकान्तिप्रभावम् ।
अरुणगुलिकवस्त्रं गात्रदेशाङ्कसंस्थं
भवति हि तदपात्रं मण्डले दुष्टपात्रम् ॥ २ ॥
मलयजरसलिप्ते शुद्धपात्रस्य भाले
वदनपरिधि युक्त्या [1]तत्त्वरेखात्रियुक्ते ।
चरण युगलकाधो न्यस्यते तस्य यन्त्रं
विमलखटिकयैतत् सद्गुरुद्दिष्टयुक्त्या ॥ ३ ॥
[2]त्रिवलितमदनान्तोऽधोमुखेन्दुप्रखण्ड-
विवरविहिततत्त्वं दिक्षु न्यस्तं तदेव ।
इति कृतवति पश्चान्नागवल्लीदलान्त-
र्लिखितविमलचूर्णाग्रथादिमन्त्रेण युक्तम् ॥ ४ ॥
शुभसुरभितपूगं दीयते तस्य मन्त्रात्
तदनु जलशभास्यं मण्डलस्याग्रतःस्थम् ।
स्तुतिरचितसमूहैर्वर्ण्यते तत्र देवी
विहितविशदमुद्रा मन्त्रिणोच्चैर्यथावत् ॥ ५ ॥
जैने पद्मावतीति त्वमशुभदलना त्वं च गौरीति शैवे
तारा बौद्धागमे त्वं प्रकृतिरिति मता देवि ! साङ्ख्यागमे त्वम् ।
गायत्री भट्टमार्गे त्वमसि च विमले कौलिके त्वं च वज्रा
व्याप्तं विश्वं त्वयेति स्फुरदुरुयशसे मेऽस्तु पद्मे ! नमस्ते ॥ ६ ॥
पातालं हुंकृतेन प्रबलबलयुजा देवि ! भित्त्वाशु पीत्वा
पीयूषं सप्तसप्तिप्रभवकरखरं क्ष्मातलं चेत्यमानः ।
ॐ आँ क्रौँ मन्त्रमूर्ते ! कुरु झटिति महाक्षुब्धदत्तारिचक्रे !
सद्यः पात्रं सशोभं चटुलकरशिरःकेशपाशप्रचण्डे ॥ ७ ॥

---

१ तत्त्वं ह्रींकारः । २ मदनः क्लींकारः ।

चण्डी चण्डीशदंष्ट्राक्रकचसमलसत्क्रूरपाशक्षतारे !
तारे ! तारावतारे ! विदलितदितिजे ! देवि ! पद्मे ! सुपद्मे ! ।
ह्रीं ऐं क्लीं मन्त्ररूपे ! चलचपलकरे ! शीघ्रमेह्येहि दुर्गे !
दुष्टः कः स्थातुमग्रे तव भवतु वरे ! हुंहुकारं वहन्त्याः ॥ ८ ॥
ॐ ह्सौंकारान् सबिन्दौ द्रुतहृतविषमव्याधिबाधातिमुद्रे !
हुँ हुँ हुँ हुँ हुमष्टादशविविधमहादोषमुद्रां प्रहृत्य ।
श्रीपद्मे ! देवि ! वेगाद् वपुरमलमलं कम्पि कम्पि प्रकम्पे !
ह्रीं ऐं मातः सुरूपे ! परपरमगते ! भेदि भेदि प्रभद्रे ! ॥ ९ ॥
पातालं क्षोभयन्ती धरणितलमलं कम्पयन्ती सुवेगाद्
ब्रह्माण्डं स्फोटयन्ती जलधिजलचरध्वानरुद्रातिभीमम् ।
आगच्छागच्छ देवि ! द्रुतमतुलगुणे ! गौरि ! दुर्गे ! सुवर्गे ! ।
ह्रींकारान् भेदय द्राग् धगधगधमिते सार्द्धरोमत्रिकोटि ॥ १० ॥
अव्यक्ते ! व्यक्तरूपे ! परमसुखकरे ! हंसपृष्ठाधिरूढे !
सोत्सेके ! निष्कलङ्के ! कलितकलिमले ! ध्वस्तमुद्रेऽस्ततन्द्रे ।
नित्ये ! ऽनित्ये ! सुरूपे ! कृतसमयमुखे ! भिन्दि भिन्दि प्रभिन्दि
क्लीं दोषान् बन्ध बन्ध प्रवररवपरे ! देवि ! दुष्टान् समस्तान् ॥११॥
श्रीपद्मे ! देवी ! भीमे ! भवभयदलने ! क्रूरनेत्रे ! सुगात्रे !
सश्रीके ! कामरूपे ! परमतदमने ! रक्तनेत्रे ! त्रिनेत्रे ! ।
निःशङ्के ! क्रूरजिह्वे ! रररररमते ! ऽट्टहासे ज्वलन्ती
ॐ ॐ मन्त्राणि दोषे दह दह दहने क्षोभय क्षोभय द्राक् ॥ १२ ॥
रे रे रे रे क्व दोषा डरलकसहजा जाततूर्णं सदूरं
चण्डोऽयं बाहुदण्डः स्फुरति परमदद्रावणो वः पुरस्तात् ।
नो चेदुच्चैश्च चञ्चद् ययययययजाकारमुच्चार्य देवी
युष्मानेकाररूपा भृतभृकुटिघटा पश्यतैषा क्षणोति ॥ १३ ॥
भो ! भो ! कोटिंगयक्षा शुभविविधमरुद्व्यन्तरोच्छिष्टदैत्या
रक्षश्चण्डालचण्डग्रहगमनपयोभूमिगोत्रादिदेव्यः ।
दूराद् दूरं प्रदेशं भजत निजममुं बीजमादाय तूर्णं
नो चेत् घृतस्तम्भमूर्ध्वं झटिति पटुभटा स्थाण्णुमादाय वाञ्छम् ॥ १४॥
एकैकं देवि ! बीजं तव मुहुरनयं विघ्नसङ्घातघाति
यो यः सद्बिन्दुभक्त्या स्मरति करं...सक्रमं व्यक्रमं वा ।
मातश्चारूच्चवीचीचलदुदधिलसद्भल्लरी......पत्रे
स्फूर्जच्छेषाहिदण्डे ससुरमहितः स्वर्णकुम्भायितश्रीः ॥ १५ ॥

श्रीमदिन्द्रनन्दिमन्त्रवादिविद्याचक्रवर्तिचूडामणि करी आज्ञा देवि !, गुरु तणी आज्ञा देवि !, परमगुरु तणी आज्ञा देवि !, भट्टारक श्री पार्श्वनाथ करी आज्ञा देवि !, सप्त पाताल फोडिउ, नव नागकुंडि अमृतपान करी आवियइ वेगिइ देवि !, देवि ! स्तम्भिनि !, देवि ! मोहिनि !, देवि ! दीपनि !, देवि ! दुष्टशोषकि !, देवि ! दोषनिर्दलनि !, देवि ! द्वादशादित्य करउ तेजु, अगण्यपुण्यदाक्षिण्यनैपुण्यनिधि ! देवि ! अविचलवाचा युधिष्ठिरि !, देवि ! जिनशासनोद्धारकि !, देवि ! भट्टारक श्रीपार्श्वनाथ भक्तानुभक्ति !, देवि ! कृपाकारकि !, देवि ! सुस्फुरि !, देवि ! प्रज्ञानिवहिकि, देवि ! ॐ आँ क्रौं मन्त्रमूर्ते !, देवि ! पद्मावति !, ध्वनि ध्वनि कंपि कंपि ह्रींकारेण गात्रं चालि चालि, बाहुं चालि चालि, शीर्षं चालि चालि, साङ्गोपाङ्गि हि चालि चालि, कटि कटि कम्पि कम्पि कम्पावय कम्पावय आवेशय आवेशय ह्स्रौँ मण्डलमध्ये प्रवेशय प्रवेशय यदिगत इन्द्रान् आणि आणि रुद्रलोकान् आणि आणि पातालात् आणि आणि ह्रीं यँ अहूठ कोडि रोमराइ भेदि भेदि ।

तदनु सुरभिपुष्पैरक्षतैः सारधूपै-
रगुरुमलयजाद्यैर्मध्यमध्यं समन्त्रैः ।
इति कृतवति पश्चात् पृच्छयते स्वेष्टकार्यं
यदपि वदति वाक्यं तद् भवत्येव सत्यम् ॥ १६ ॥

विविधमन्त्रविदः कृतरक्षकाः
प्रविदधत्यति ये किल मन्त्रिणः ।
प्रवरदेव्यवतारविधिक्रमं
भुवि त एव मुदं प्रवहन्त्यलम् ॥१७॥

इति श्रीश्वेताम्बरचक्रचूडामणिश्रीयशोभद्रोपाध्याय-
शिष्यचन्द्रप्रकाशितेऽद्भुतपद्मावतीकल्पे
पात्रविधिलक्षणं पञ्चमम् ॥ ५ ॥

## दोषलक्षणं षष्ठं प्रकरणम् ॥६॥

हूँकारं प्रणवद्वयेन पुटितं तन्नामगर्भं बहि-
वेष्ट्यं षोडशभिः कलाभिरभितो भिन्नं च वज्राष्टभिः ।
तत्प्रान्तः क्षह भाममान्तरशषाल्लूयूं युतास्तत्पुर-
श्चेत्येतत् सकलं त्रिमुष्टिकुशतः कांस्ये न्यसेच्चन्दनैः ॥ १ ॥

ॐ ह्रीं श्रीं वदने नमस्तु निधने ! मध्ये तथाऽर्हत्कलि-
कुण्डस्वामिन एष मन्त्र उदितो जप्त्वा शतं कौसुमम् ।
भूतप्रेतपिशाचशाकिनिपरिच्छेदः प्रसूतिः स्त्रियः
स्याद् दृष्टे कलिकुण्डदण्डपटले शान्त्यादि कार्यं पुनः ॥ २ ॥

मान्तं पिण्डमधः खकुक्षिषु गतं नाम्नः कलावेष्टितं
ह्रींक्रौंमाद्यवसानरेखि लिखितं भूर्ये त्रिधा वेष्टनात् ।
दोषालं शिलयाथ पीतकुसुमैरों ग्लौं ठ एवं शतं
जप्त्वैतत् शिलया सिहारिकभयप्रध्वंसि खे भारितम् ॥ ३ ॥

ररररररराग्नेः सत्पुरान्तःस्थ हूँ क्षूँ
त्रिकटनिधनवर्णे भित्तिन्यस्ते समस्ते ।
शुभसुरभिभिरर्चाभाजिते यत्र तत्र
न भवति भयमुच्चैः सिद्धहार्यास्तदादि ॥ ४ ॥

रेखासप्तविपाटितान्तररवे रेखाष्टभिर्भेदितं
दुष्टं टान्तयुगं बहिः सुविधिना तेजोऽष्टधा प्रान्तरे ।
तन्मूर्ध्न्यग्निरसानभोजलमरुन्मान्तत्रिठः पञ्च हुं
फट् स्वाहाक्रमतो हिमादिखटिकाभूर्जस्थयन्त्रं कुरु ॥ ५ ॥

धवलसुरभिपुष्पैर्ध्यानयुक्तोऽपि यस्तु
द्विनवकरससङ्ख्यैरर्चयेद् यत्र तत्र ।
भवति हि परमुद्राच्छेद आश्वेव तस्य
यदि नहि पचिमेदः शान्तये स्यात् तदा तत् ॥ ६ ॥

ॐ क्षिहा प स्वाहा यः यः यः ठः ठः ठः स्फ्राँ स्फ्रीं स्फ्रुँ स्फ्रौँ स्फ्रौं स्फ्रः हुं फडित्याम्नायः ।

अन्यत्रैवमियं विद्या गतिगर्भादिकीलने ।
गन्धदीपप्रसूनादिपूजिता सन्नियोजयेत् ॥ ७ ॥

ऊर्ध्वाधो रयुतं जकारसहितं ह्लं (क्ष्लं) कारबीजं लिखे-
द्दों ह्रीं ग्रामथ हूँ फडग्निपुटके नाम्ना युतं तद्बहिः ।
संन्यस्तं वसुवायुमण्डलगतं कुण्डेऽथवा पट्टके
पश्यन्तं नरमश्वगन्धयवकैर्मन्त्रेण चात्रोटयेत् ॥ ८ ॥

मन्त्रः—

ॐ ह्रूँ सः वं क्षः क्ष्म्ल्व्र्यूँ ह्रौं ह्राँ ग्राँ हुँ फट् ॐ स्वों झ्राँ झ्रौं
शाकिनीनां निग्रहं कुरु कुरु हुं फट् ॥ ९ ॥

सत्येवं प्रलयं यान्ति शाकिनीभूतराक्षसाः ।
भूर्जस्थयन्त्रं रक्षेयं हन्ति तां कुङ्कुमादिभिः ॥ १० ॥

पुष्पाणि गुग्गुलं वापि क्रममन्त्रेण मन्त्रिणा ।
दोषस्य पुरतः पूर्वं वह्निना सम्प्रदर्श्यते ॥ ११ ॥

तत्परिमलमाघ्राय शाकिन्याद्यास्त्रसन्त्यलम् ।
मुक्त्वा तदेव पात्रं च यान्ति ते दोषसङ्कराः ॥ १२ ॥

क्ष्ल्वींफट् लींफट् श्रींफट् क्लींफट् झ्रूँफट् हूँफट् क्ष्रूँफट्
स्वाहा । पुष्पमन्त्रः ॥ १३ ॥

ॐ त्राँ त्राँ त्राँ त्राँ त्राँ झ्राँ झ्राँ झ्रीं झ्रीं झ्रीं हं हं ह्रँ ह्रँ ह्रँ
रौ रौ रौ सः सः गुग्गुलमन्त्रः ॥ १४ ॥

निखिलमथ विधानं पूर्ववद् दोषपात्रे
त्वरुणकुसुममालाक्षेप एव प्रभेदः ।
तदनु वधनभेदाद्यत्र कार्यं हि कार्यं
निजकनिजकमन्त्राश्चेति सर्वं तथेति ॥ १५ ॥

झ्रूँ झ्रूँ झ्रूँ झ्रूँ झ्रूँ झ्रूँ झ्रूँ झ्रूँ झ्रूँ । शस्त्रिकाघातः ।

बापुलाजाल चलसि महिकाल पति गल तोडि, दहि सुहि गांठि बोडि, थां गां था तोडि, जेण समुद्र पगारिआ अगुरु किलकिलाइ उक्खिल्लि हनुमन्त ! प्रचण्ड दांडीक पाणि ! नास्ति दोसु नास्ति दश य दिशि बांधि बांधि आपणा पायतलि घालि हनुमन्त ! प्रचंड दांडीकपाणि ! बांधि बांधि जः जः जः आँ अघोराय नमः रौं फट् स्वाहा । इति बन्धमन्त्रः ।

ॐ ह्रीं छिन्दि छिन्दि भिन्दि भिन्दि माणिभद्र ! चेटकमाकर्षय आकर्षय मारय मारय चूरय चूरय हूँ फट् स्वाहा । दोषपात्रावतार-परविद्याच्छेदनमन्त्रः ।

ॐनमो भगवते पार्श्वनाथाय पद्मावतीसहिताय धरणोरगेन्द्रनमस्कृताय सर्वोपद्रवविनाशनाय परविद्याच्छेदनाय परमन्त्रप्रणाशनाय सर्वदोषनिर्दलनाय आकाशान् बन्ध बन्ध, पातालान् बन्ध बन्ध, देवान् बन्ध बन्ध, दैत्यान् बन्ध बन्ध, गणान् बन्ध

बन्ध, कल्मलग्रहान् बन्ध बन्ध, उच्छिष्टग्रहान् बन्ध बन्ध, चण्डालग्रहान् बन्ध बन्ध, भगवन्! क्षेत्रपाल! ग्रामं बन्ध बन्ध, यक्षान् बन्ध बन्ध, राक्षसान् बन्ध बन्ध, शाकिनीं बन्ध बन्ध, डाकिनीं बन्ध बन्ध, लाकिनीं बन्ध बन्ध, जाकिनीं बन्ध बन्ध, गृहीतमुक्तकां बन्ध बन्ध, दिव्ययोगिनीं बन्ध बन्ध, वज्रयोगिनीं बन्ध बन्ध, खेचरीं बन्ध बन्ध, भूचरीं बन्ध बन्ध, नागान् बन्ध बन्ध, वर्णराक्षसान् बन्ध बन्ध, झोटिंगान् बन्ध बन्ध, मुद्गरग्रहान् बन्ध बन्ध, व्यन्तरग्रहान् बन्ध बन्ध, आकाशदेवीं बन्ध बन्ध, जलदेवीं बन्ध बन्ध, स्थलदेवीं बन्ध, बन्ध, गोत्रदेवीं बन्ध बन्ध, एकाहिक-द्वयाहिक-त्र्याहिक-चातुर्थिक-नित्यज्वर-रात्रिज्वर-सर्वज्वर-मध्याह्नज्वर-वेलाज्वर-वातिक-पैत्तिक-श्लेष्मिक-सान्निपातिक-सर्वदोष-देवकृत-मानवकृत-यन्त्रकृत-कार्मणकृत उच्छेदय उच्छेदय, विस्फोटय विस्फोटय, सर्वदोषान् सर्वभूतान् हन हन, दह दह, पच पच, भस्मी कुरु कुरु। ॥ मालामन्त्रः ॥

अथवा—

ॐनमो भगवते हनुमन्ताय कपिललोचनवज्राङ्गमुष्टे! उदधिलङ्घन-लङ्कापुरीदहन-दीपन-मथन! सुग्रीवसैन्यभूषण! अञ्जनासुत! सर्वोपकारिन्! बालब्रह्मचारिन्! आकाशान् बन्ध बन्ध, इत्यादि पूर्ववदयं मालामन्त्रः। यथोक्तश्च।

तथा मालामभिमन्त्र्य दोषपात्रे क्षेपकश्चेति।

ॐनमो भगवते पार्श्वनाथाय दुष्टान्तकमठकरिकुम्भनिशुम्भनोत्तालकलकण्ठीरवाय गरीष्ठदुष्टाष्टकर्मकाष्ठनिष्ठापनहुताशनवरिष्ठाय असारसंसारपारावारोत्तारणतरण्डाय चतुस्त्रिंशदतिशयालंकृतगात्राय तच्चरणसरोजाश्रयविशारदे! देवि! विदलिताशेषशत्रुसमुदये! पद्मवदने! पद्मे! सपद्मे हंसपृष्ठाधिरूढे! फलवरदपाशाङ्कुशचतुर्भुजे! देवि! भैरवे! भैरवरूपावतारे! तारे! तारावतारे! देवि! रौद्रे! रौद्रलोचनावतारे! कालव्यालवेतालकरालकङ्कालभूतप्रेतपिशाचयक्षराक्षसगणगन्धर्वकिन्नरोरगेन्द्रग्रहनिग्रहैकोद्यतभुजे! भीमे! भीमाट्टहासभीषितानन्तबलद्विपञ्चाशत्क्षेत्रपालचण्डचतुरशीतिचेटकोत्कटविकटसार्द्धद्विकोटिभूतावलिमानमुद्रे भद्रे! भद्रावतारे! भद्रमूर्ते! निर्दलिताशेषतन्द्रे! जय जय जयोद्यते! देवि! विकटहुंकारविपाटितसप्तपातालच्छदने! खण्डितचतुःषष्टियोगिनीसुदृढमुद्रातिवर्गे! नवनागकुण्डअमृतपानोत्साहोच्छेकप्रकम्पिताशेषब्रह्माण्डोदरे! तत्कालोच्छलितज्वलज्ज्वलित-कलकलितनिखिलसलिलनिधिचलचपलमकरमत्स्यकच्छपप्रभृतिव्याकुलानन्तसत्त्वघोरारवस्फुटद्गगनाभोगभागे! स्फारफुत्कारदारुणत्रिफणाहिविषमविषज्वालानिर्दग्धहिंस्राहङ्कारे! देवि! गुणवति! पद्मावति! दुःखसागरोत्तारणि! सर्वदुरितापहारिणि! यमजिह्वाकरालरूपधारिणि! चिन्तितचिन्तामणे! अरुणे! अमरे! अमरावतारे! अकले! सकले! निष्कले! निर्मले! देवि! अजिते! अपराजिते! ए ऐंकारमूर्ते! स्वर्ग-मर्त्य-पातालविवरवर्तिनो दुष्टातिदुष्टान् पुंस्त्रीविभेदान् दोषान्

वच्छुकारशब्देन देवि! पात्रेऽवतारय अवतारय भारसहस्रश्रृङ्खलाबन्धेनात्मपादतले क्षेपय क्षेपय लोलय लोलय घूर्मय घूर्मय चालय चालय क्षोभय क्षोभय आँ क्रौं ह्रीं-काररूपे! देवि! श्रीमति! पद्मावति! ऐंक्लैंकारसबले! घोलय घोलय दोलय दोलय उच्छालय उच्छालय लोटय लोटय वज्रमयसूच्या नेत्राणि स्फोटय स्फोटय अङ्कुशेनान्त-राले सहस्रधा त्रोटय त्रोटय नागपाशेन सर्वाङ्गं मोटय मोटय भञ्जय भञ्जय ॐ ज्वाला-जिह्वाकराले! रररर्र मूर्ते! सर्वाङ्गं दह दह सर्वधातून् क्षोभतां नय नय परमुद्रां त्रोटय त्रोटय आत्ममुद्रां देहि देहि ह्स्रौंकारेण देवि! मनोवाञ्छितं कार्यं कुरु कुरु, डा-किनीजाकिनीकन्दकुद्दालिनि! राकिनी-लाकिनी-मानमर्दनि! हाकिनीजाकिनीकुलोच्छे-दिनि! ह्रीं जय जय ॥ यथोक्तमन्त्रः।

ह्रिकचान्तरातहादिमह्लाद्यदिशिरकहहकूटयुताः।
ॐ अःयुक्ताः क्रमशः स्थाप्या दिग्वर्गयन्त्रेऽथ ॥
तत्परितो वह्निपुरं ह्रींक्रोमाद्यन्तरेखया वेष्टयम्।
एतत्सकटिकनिहितं दोषच्छेदाय हुतये मन्त्रान् ॥

मन्त्रः—

ॐ नमो रुद्राय वानरराजाय हन हन दह दह मथ मथ बन्ध बन्ध भूतल भूतल ह्रीं हूँ हूँ हूँ हे हे हे ह ह काटय काटय मद मद मोचय मोचय अबन्धग्रहे चक्रे! चाटुवास्वले वाहर वाहर स्वाहा। मन्त्रितमालाया दोषाकृष्टिः।

अथवा—

सुदर्शनतो मन्त्राद् विदधातु चित्तमनुकृत्यम्।
येन स्मरणविधिना कृत्याकृत्यं हि हस्तगतम् ॥

हीहोरीलणरीसो अदमदपुरिसो डगमगचरितो। उठी दक्षिणदिशाइं महादिव किलिकिलिशब्दं झंकाररूपि अहमदचक्रि छिन्नि मदासणि छिन्नि अहमदसामिणि छिन्नि छिन्नि, कावाडंकी छिन्नि छिन्नि होही होरी सणसो विसनासण हरि च्छिन्नि सुदरिसण ॥

त्रिसन्ध्यमाराध्य सुरक्तपुष्पैः
सप्तैव सप्तैव दिने दिने (?) यावद्
दिनानि भवन्ति भवन्ति सप्त
सिद्धो भवेत् सर्वकार्यकरस्तथायम् ॥

इति श्रीश्वेताम्बरचक्रचूडामणिश्रीयशोभद्रो-
पाध्यायशिष्यचन्द्रप्रकाशितेऽद्भुतपद्मा-
वतीकल्पे षष्ठं दोषलक्षणं
समाप्तम् ॥ ६ ॥

# परिशिष्ट २

श्रीइन्द्रनन्दिविरचितं

# श्रीपद्मावतीपूजनम् ।

ॐ नमो भगवते पार्श्वनाथाय ह्रींपद्मावतीसहिताय धरणोरगेन्द्रसहिताय सर्वोपसर्गविनाशकाय परविद्योच्छेदकाय परमन्त्रविनाशनाय परदोषनिर्दलनाय आकाशान् बन्ध बन्ध, राक्षसान् बन्ध बन्ध, पातालान् बन्ध बन्ध, देवान् बन्ध बन्ध, दैत्यान् बन्ध बन्ध, गणान् बन्ध बन्ध, उच्चिष्टान् बन्ध बन्ध, कमलान् बन्ध बन्ध, चण्डालसहान् बन्ध बन्ध, क्षेत्रपालान् बन्ध बन्ध, ग्रहान् बन्ध बन्ध, यक्षान् बन्ध बन्ध, राक्षसान् बन्ध बन्ध, शाकिनीः बन्ध बन्ध, याकिनीः बन्ध बन्ध, डाकिनीः बन्ध बन्ध, ग्रहभुक्तकान् बन्ध बन्ध, दिव्ययोगिनीः बन्ध बन्ध, खेचरीः बन्ध बन्ध, भूचरीः बन्ध बन्ध, नाथान् बन्ध बन्ध, वर्णराक्षासान् बन्ध बन्ध, कोटिकान्तान् बन्ध बन्ध, पुद्गलग्रहान् बन्ध बन्ध, आकाशदेवीः बन्ध बन्ध, जलदेवीः बन्ध बन्ध, स्थलदेवीः बन्ध बन्ध, गोत्रदेवीः बन्ध बन्ध, एकाह्निकं बन्ध बन्ध, द्व्याह्निकं बन्ध बन्ध, नित्यज्वरं बन्ध बन्ध, तृतीयज्वरं बन्ध बन्ध, सर्वज्वरं, वेलाज्वरं, मध्याह्नज्वरं, वात-पैत्तिक-श्लेष्मिक-सान्निपातिक-सर्वदेवकृत-मानवकृत-मन्त्रकृतं कार्मणं उच्छेदय, विस्फोटकान् सर्वदोषान् सर्वभूतान् हन हन, दह दह, पच पच, भस्मीकुरु कुरु स्वाहा । एतन्मालामन्त्रः ॥

अथ गुरुपादुकाकारपर्यन्तः पूजाक्रमः ।

प्रथमं भूमिशुद्धिः—

अथ मन्त्रस्थापनपूर्वकं आत्मनः सकलीकरणं कार्यम् ।

ॐ अमृते ! अमृतोद्भवे ! अमृतवर्षिणी अमृतं स्रावय स्रावय स्वाहा। वार १०८ दिक्कलशमन्त्रः ।

ॐ अरजे ! विरजे ! अशुद्धविशोधिनी मां शोधय शोधय स्वाहा । वार १०८ विदिशि दिक्कलशमन्त्रः ।

मायाबीजेन तिलकं कार्यम् । निजदेहे पञ्च तत्त्वबीजानि न्यसेत् ।

क्षिप ॐ स्वाहा अनुलोम विलोम वार ३ तत्त्वस्थापनम् ।

ॐ आँ हृदयाय नमः, ॐ क्रौँ शिरसे स्वाहा. ॐ ह्राँ शिखायै वौषट्, ॐ आँ कवचाय हुं ॐ क्रौँ नेत्राय वषट्, ॐ ह्रीं अस्त्राय फट्, करे अस्त्रं ध्रियते ॐ ह्रीं अस्त्राय फट् इति अङ्गन्यासः ।

ॐ आँ अङ्गुष्ठाय नमः, ॐ क्रौँ तर्जन्यै स्वाहा, ॐ ह्राँ मध्यमायै वौषट्, ॐ आँ अनामिकायै हुं, ॐ क्रौँ कनिष्ठिकायै वषट्, ॐ ह्रीं करतले, पृष्ठे फट् स्वाहा ।

इति करन्यासः ।

अस्त्रमन्त्रेण अर्घपात्रपूजा, द्रव्यप्रोक्षणं च । स्वाङ्गपूजा मूलमन्त्रेण । ॐ ह्रीं परेभ्यो गुरुपादुकाभ्यो नमः, अपरापरेभ्यो गुरुपादुकाभ्यो नमः ।

इति गुरुपङ्क्तिपूजा ।

ॐ आँ ह्राँ क्रौँ नित्ये ! नमः, ॐ आँ क्रौँ ह्राँ क्लिन्ने ! नमः , ॐ आँ क्रौँ ह्राँ मदे ! नमः, ॐ आँ क्रौँ ह्राँ उन्मादे ! नमः, ॐ आँ क्रौँ ह्राँ द्रवे ! नमः । ॐ आँ क्रौँ ह्रां द्रावे ! नमः, ॐ आँ क्रौँ ह्रां मातुलिङ्गाय नमः, ॐ आँ क्रौँ ह्राँ वरदाय नमः, ॐ आँ क्रौँ ह्राँ ह्राँ ह्रीं क्लीं ब्लूँ सः पञ्चबाणाय नमः । ॐ आँ क्रौँ ह्राँ अङ्कुशाय नमः, ॐ आँ क्रौँ ह्रीं धनुषाय नमः । इति भोगागलमागादिस्थापना ।

श्रीपूर्णगिरिपीठं श्रीकुमारदेउपीठ, श्रीकुमारदेउ सन्मुख इति पीठस्थापना ।

ॐ क्षाँप नमः वार ३ पठित्वा पुष्पं मुच्यते ।

अथाह्वानबीजम्—

ॐनमो भगवति ! देवि ! पद्मे अत्र सन्निहिता भव, अत्र तिष्ठ तिष्ठ, पूजां गृण्ह गृण्ह स्वाहा ।

ॐ पद्मगन्धायै आगच्छ आगच्छ पूजां गृण्ह गृण्ह स्वाहा ।
ॐ पद्मवक्त्रायै आगच्छ आगच्छ पूजां गृण्ह गृण्ह स्वाहा ।
ॐ ह्रीं पद्मकमलायै आगच्छ आगच्छ पूजां गृण्ह गृण्ह स्वाहा ।
ॐ ह्रीं मदनोन्मादिनी आगच्छ आगच्छ पूजां गृण्ह गृण्ह स्वाहा ।
ॐ ह्रीं कामोद्दीपनी आगच्छ आगच्छ पूजां गृण्ह गृण्ह स्वाहा ।
ॐ ह्रीं पद्मवर्णायै आगच्छ आगच्छ पूजां गृण्ह गृण्ह स्वाहा ।
ॐ ह्रीं त्रैलोक्यमोहिनी आगच्छ आगच्छ पूजां गृण्ह गृण्ह स्वाहा ।

इति दूतिकाष्टकस्थापना ।

योगिनी ६४ स्थापना । पूजासिद्ध ८४ स्थापना । पद्मस्याधोभागे ॐ ह्रीं ८४ चेटका आगच्छ आगच्छ पूजां गृण्ह गृण्ह स्वाहा ।

चेटकपूजा ।

पद्मस्योत्तरपार्श्वे ॐ ह्रीं सिद्धचामुण्डा तथा सिद्धविनायक ! आगच्छ आगच्छ पूजां गृह्ण गृह्ण स्वाहा ।

पद्मस्य दक्षिणभागे ॐ ह्रीं आँ क्रोँ ह्रीं क्षां क्षीं क्षूँ क्षैँ क्षः क्षेत्रपालाः सपरिकराः आगच्छन्तु आगच्छन्तु पूजां गृह्णन्तु गृह्णन्तु स्वाहा ।

पद्मस्यैशानीं समाश्रित्य ॐ आँ क्रोँ ह्रीं अष्टाविंशतिनक्षत्राणि अधिपसहितानि सपरिकराणि आगच्छन्तु आगच्छन्तु पूजां गृह्णन्तु गृह्णन्तु स्वाहा । नक्षत्रपूजा ।

पद्मस्याग्नेयीं दिशमाश्रित्य ॐ आँ क्रोँ ह्रीं आदित्यादिनवग्रहाः सपरिच्छदाः आगच्छन्तु आगच्छन्तु पूजां गृह्णन्तु गृह्णन्तु स्वाहा ।

पद्मस्य नैर्ऋतकोणे देवीगोत्रसमुद्भवा ॐ आँ क्रोँ ह्रीं क्षेत्रपाला आगच्छत आगच्छत पूजां गृह्णत गृह्णत स्वाहा ।

ॐ ह्रीं लं इन्द्राय, आगच्छ आगच्छ पूजां गृह्ण गृह्ण स्वाहा ।

ॐ ह्रीं णं आग्नेयाय आगच्छ आगच्छ पूजां गृह्ण गृह्ण स्वाहा ।

ॐ ह्रीं यं यमाय आगच्छ आगच्छ पूजां गृह्ण गृह्ण स्वाहा ।

ॐ ह्रीं नैर्ऋताय आगच्छ आगच्छ पूजां गृह्ण गृह्ण स्वाहा ।

ॐ ह्रीं वं वरुणाय । ॐ ह्रीं वायव्याय आगच्छ आगच्छ पूजां गृह्ण गृह्ण स्वाहा ।

ॐ ह्रीं लं कुबेराय आगच्छ आगच्छ पूजां गृण्ह गृण्ह स्वाहा ।

ॐ ह्रीं ह्रौं ईशानाय । ॐ ह्रीं ऊर्ध्वच्छदनाय । ॐ ह्रीं अधश्छदनाय । आगच्छ आगच्छ पूजां गृह्ण गृह्ण स्वाहा । इति दिक्पालपूजा ।

ॐ ह्रीं अजितायै पूर्वद्वारे प्रतिहारि आगच्छ आगच्छ पूजां गृह्ण गृह्ण स्वाहा । ॐ ह्रीं अपराजितायै आगच्छ आगच्छ । ॐ ह्रीं जयायै पश्चिमद्वारे प्रतिहारि ! आगच्छ आगच्छ । ॐ ह्रीं विजयायै उत्तरद्वारे प्रतिहारि ! आगच्छ आगच्छ पूजां गृह्ण गृह्णस्वाहा । इति प्रतिहारीपूजा ।

प्राकार आग्नेयकोष्ठाधिष्ठायिनी ॐ ह्रीं जंभा आगच्छ आगच्छ, नैर्ऋतकोष्ठाधिष्ठायिनी जंभा आगच्छ आगच्छ, वायव्यकोष्ठाधिष्ठायिनी ॐ ह्रीं थंभा आगच्छ आगच्छ, पद्मस्याधः पूर्वभागे ॐ आँ क्रोँ ह्रीं मन्त्राधिष्ठायक ! आगच्छ आगच्छ । द्वितीयभागे ॐ आँ क्रोँ ह्रीं यं यन्त्राधिष्ठायक ! आगच्छ आगच्छ निर्बीजयोनिमुद्रा १ सुरभिमुद्रा २ परमेष्ठिमुद्रा ३ करसम्पुटमुद्रा ४ अञ्जलिमुद्रा ५ मुद्रापञ्चकं दर्शयित्वा पुनर्देवी, पुनरङ्गे न्यासः, तर्पणम् , अर्थदानं, संपूजाक्रमः । देवीमन्त्रमुच्चार्य देव्या अङ्गपूजा तदक्षराणि संस्थाप्य ताः पूजनीयाः । सन्निहिता पञ्चबाणपूजा सबीजमुद्रापञ्चकं दर्शयित्वा आशिखाशिरसि विधाय क्षमयेत् । 'आज्ञाहीनं०' ॐ नमो भगवति ! पद्मावति ! स्वस्थानं गच्छ गच्छ ह्रीं फट् । विसर्जनं वामकरेण संहारमुद्रया । अर्चनपुष्प आशिषं समुद्धृत्य स्वहृदि स्थापयेत् ।

## परिशिष्ट ३

# रक्तपद्मावतीकल्पः ।

ॐ ह्रीं क्लीं पद्मे! पद्मावति! महापद्मे । पद्महस्ते! पौरान् क्षोभय क्षोभय, राज्ञः क्षोभय क्षोभय, प्रजाः क्षोभय क्षोभय, स्त्रीः क्षोभय क्षोभय, ह्रीं पद्मावति! पायाः, पादुकापूजायां नमः ।

दिन ६३ त्रिषष्टि यावत् रक्तपुष्प ६३ जापः । गुग्गुलगोली ६३ होमः, रक्ताञ्जनमय्यां कुङ्कुमलिखितायां वा पद्मावतीमूर्तौ बृहस्पतिवारेवारे घृत-दुग्ध-शर्करा-द्राक्षा-अक्षताः पञ्चाहुतयो देयाः ।

रक्तपद्मावतीपूजनविधिः—

पूग ४०, पत्र ४००, नालिकेर ४०, लाडु ४००, सितपत्र नवग्रहापात्री फूल १००, खाजा ४००, सुहाली ३५०, पञ्चधारलापसी माणा ५, द्राक्षा शेर १०, खारेक सेर ५, अखोड सेर १०, वारसोल ४००, साकरलिंगा ६४, टोपरां ६४, खांड सेर ५, केशर टांक ८, कर्पूर ग. २, कस्तूरी ग. १ गोरोचन ग. ३, सुखड सेर १०, रक्तकृष्ण सेलां २, आम्बादन पद्मावतीनी मूर्ति सुवर्णमय, जिनमुद्रा, दक्षिणा ६४, भाजन १ सुवर्णमय, फूल ९, शलाका रूप्यमय १, नव नैवेद्यानि पक्वान्नमयानि.

खाजां २१, खाजलां २१, लाडु २१, दहिथरा २१, सांकुली २१, मांडी २१, मरुकी २१, घूघरा २१, वांकुची २१,

नांदुलिया माणा २, नैवेद्यानि, पीचु माणा २, बाकुला सेर २१, कूर सेर २१, घूजा सेर २१, पूउली सेर २१, घेबर २१, वटक २१, करंबउ इति ।

कूपोदक घट १, उभयतटनी वेलू, दर्भ समूलु, कोरीबली—

चउला सेर १, चोखा सेर १, झाला सेर १, चणा सेर १, जव सेर १, तिल सेर १, जुगंधरी सेर १, मुद्ग सेर १, सप्त धान्यानि ।

अथ फलानि—

बीजोरु १, नालियर ४, केलां २१, दाडिम ३, आंबा २१, सेलडी २१, पञ्चामृत इत्यादि ॥

षट्कोणं मण्डलं चादौ षट्कोणषट्प्राकारान्वितं तद्बाह्ये द्विकर्णकस्योपरि अष्टदलं पद्ममालिख्य मायाबीजेन त्रिधा वेष्टयेत्। तद्बाह्यचतुःकोणप्राकार ईशानकोणे श्रीपार्श्वनाथस्य प्रतिमा, आग्नेयकोणे पद्मावती चतुर्भुजा, नैर्ऋत्यकोणे ॐ अत्रस्थक्षेत्रपालाय नमः, वायव्यकोणे पादुकायुग्मं विलिख्य ॐ ह्रीं गुरुपादुकेभ्यो नमः इति प्राकारान्तर्मण्डलबाह्यपूजाविधिः। ॐ आँ क्रौँ ह्रीं नित्ये नमः पश्चिमकोणे १, ॐ आँ क्रौँ ह्रीं मदे! नमः! ईशानकोणे २, ॐ आँ क्रौँ ह्रीं द्रावे नमः अग्निकोणे ३, ॐ आँ क्रौँ ह्रीं क्लिन्ने नमः वायव्यकोणे ४, ॐ आँ क्रौँ ह्रीं उन्मादे नमः पूर्वकोणे ५, ॐ आँ क्रौँ ह्रीं द्रवे नमः नैर्ऋत्यकोणे ६, इतिषट्कोणपूजा।

ॐ ह्रीं मातुलिङ्गाय नमः दक्षिणे १, ह्रीं ह्स्क्लीं द्रां द्रां क्लीं ब्लूँ बाणेभ्यो नमः ईशाने २, ॐ ह्रीं आपसाय नमः पश्चिमे ३, ॐ ह्रीं वरदाय नमः उत्तरे ३, ॐ ह्रीं क्रौँ अङ्कुशाय नमः आग्नेय्याम् ५, ॐ ह्रीं धनुषे नमः नैर्ऋते ६, इति षट्कोणान्तरालकर्णिकामध्यभूमिपूजा।

ॐ ह्रीं जये स्वाहा १ पूर्वे, ॐ ह्रीं जम्भे स्वाहा २ आग्नेये, ॐ ह्रीं विजये स्वाहा ३ दक्षिणे, ॐ ह्रीं स्तम्भे स्वाहा नैर्ऋते ४, ॐ ह्रीं अजिते स्वाहा पश्चिमे ५, ॐ ह्रीं स्तम्भिनि स्वाहा वायव्ये ६, ॐ ह्रीं अपराजिते स्वाहा उत्तरे ७ ॐ ह्रीं मोहे स्वाहा ईशाने ८ इति पद्माष्टपत्रपूजा।

ह्राँ ह्रीं ह्रूँ ह्रौँ ह्रः वार ३ सकलीकरणम्।

ॐ नमो भगवति! देवि! पद्मावति! ह्रीं धूपं भज भज स्वाहा।

ॐ नमो भगवति! देवि! पद्मावति! ह्रीं गन्धादीन् प्रतीच्छ प्रतीच्छ स्वाहा।

ऐं क्लीं ह्सौँ पद्मावति! मम सर्वं जगद् वश्यं कुरु कुरु ह्रीं सं वौषट्, रक्तकणवीरपुष्पजापः सहस्र १० ततः सिद्ध्यति, वरदा भवति।

इति पद्मावतीदेव्या द्वितीयचक्रविधानम्।

ॐ ह्रीं पद्मावति! पद्मनेत्रे! मम शान्तिं कुरु कुरु स्वाहा। लक्ष १ जापः। सम्भवे कमलपूजा। लक्षजापादनन्तरं दशांशेन होमः क्षैरेयी-खण्डसर्पिषा। ॐ नमो भगवते पार्श्वचन्द्राय त्रैलोक्यविजयालंकृताय सुवर्णवर्णधरणेन्द्रनमस्कृताय नीलवर्णाय कर्मकान्तारोन्मूलनमत्तमतङ्गजाय संसारोत्तीर्णाय प्राप्तपरमानन्दाय तत्पादारविन्दसेवाहेवाकचञ्चरीकोपमे! मानवदेवदानवविनम्रमौलिमुकुटमण्डलीमयूखमञ्जरीरञ्जिताङ्घ्रिपीठे!

सेवकजनवाञ्छितार्थपूरणाधरीकृतचिन्तामणिकामधेनुकल्पलते! विकसज्जपाकुसुमोदितार्क-पद्मरागारुणदेहप्रभाभासुरीकृतसमस्ताकाशदिक्चक्रवाले! लीलानिर्दलितरौद्रदारिद्र्योपद्रवे! शरणागतत्राणकारिणि! दैत्योपसर्गनिवारिणि! भूतप्रेतपिशाचयक्षराक्षसाकाश-जलस्थलदेवतादोषनिर्नाशिनि! मातृमुद्गलचेटकोग्रग्रहणशाकिनीयोगिनीवृन्दवेतालरेवती-पीडाप्रमर्दितपरविद्यामन्त्रयन्त्रोच्छेदिनि! परसैन्यविध्वंसिनि! स्थावरजङ्गमविषसंहारिणि! सिंहशार्दूलव्याघ्रोरगप्रमुखदुष्टसत्त्वभयापहारिणि! कासश्वासज्वरभगन्दरश्लेष्मवातपित्त-कण्डूकामलक्षयोदुम्बरप्रसूतिप्रमुखरोगविध्वंसिनि! चोरानलजलराजग्रहावच्छेदिनि! एकाहिक-द्व्याहिक-त्र्याहिक-चातुर्थिक-भौतिक-वातिक-सान्निपातिक-पैत्तिकज्वरोच्चाटिनि! त्रिभुवनजनमोहिनि! भगवति! श्रीपद्मावति! एहि एहि आगच्छ आगच्छ प्रसादं कुरु कुरु। सर्वकर्मकरः श्रीपद्मावती-आह्वानस्तवोऽयम्।

ॐ ऐं क्लीं ह्स्क्लीं ह्रीं ह्सौं देवि! पद्मावति! नमः। ग्रहणदिने भूर्ये सुगन्धद्रव्यै रक्षा कार्या। अगर्भाया गर्भो भवति। पूजाकाले नमः, होमकाले स्वाहा, शान्तौ स्वधा, अमुकं वश्यं कुरु कुरु वषट्, अमुकं आकर्षय आकर्षय संवौषट्, अमुकं विद्विष्टं कुरु कुरु हुं, अमुकं उच्चाटय उच्चाटय हुं फट्, अमुकं ज्वरेण गृह्ण गृह्ण घे घे।

इति षट्कर्मकरं यन्त्रं पद्मावत्याः सर्वकाले पूजनीयम् ॥

परिशिष्ट ४

# श्रीपद्मावतीव्रतोद्यापनम्

नमः श्रीपार्श्वनाथाय मोक्षलक्ष्मीनिवासिने ।
वक्ष्ये पद्मावतीपूजां चतुर्विंशतिअङ्ग्या(संख्यया) ॥१॥
मण्डलं कारयेत् सूरिश्चतुर्विंशतिकोष्ठकम् ।
पञ्चवर्णं महारम्यं रत्नप्रभासमन्वितम् ॥२॥
आदौ गन्धपुटीपूजा पश्चात् स्वगुरुपूजनम् ।
देवतापूजनं कुर्याद् धर्मकामार्थसाधनम् ॥३॥
कुर्वन् बुद्ध्या इमां पूजां तस्य विघ्नोपहारिणीम् ।
वाञ्छितार्थाऽखिलं दद्यात् पद्मिनी सुखदायिनी ॥४॥

ये लोकाः पूजयन्ति भगवति महति देवि पद्माङ्घ्रि भक्त्या
दंष्ट्रादाढाकराला जिनपदनिवशि उग्रतेजातिमानी (?) ।
तेषां सा पापहन्त्री निरुपमसुखदा पुत्रदारादिकल्पा-
दायी स्वर्गापवर्गा(न्) धरणिधरपतिदेवनाथादिसेव्या ॥५॥

ये पूजयन्ति मनकायमानी तेषां जनानां सुखदायकानि ।
पद्मावतीनाम परं पवित्रं सद्यः फलादान ददाति पूजा ॥६॥

इति प्रथमं निरुपमपुष्पाञ्जलिः ।

---

## अथ श्रीपार्श्वनाथस्तवनम् ।

ह्रीं देवं पार्श्वनाथं धरणिपतिनुतं देवदेवेन्द्रवन्द्यं
ह्रींकारं बीजमन्त्रं जगदकलिमलं सर्वोपद्रव्यहारी ।
ॐ ह्रां ह्रीं हूँकारनाद अघहरति महाभक्तिरूपं जनानाम् ।
व्यालीढं पादपीठं कमठशठमतिं माहयं पार्श्वनाथम् ॥१०॥

ॐ ह्रीं अर्हं श्रीपार्श्वनाथाय अत्रावतरावतर संवौषट् स्वाहा। आह्वाननम् ।
ॐ ह्रीं अर्हं श्रीपार्श्वनाथाय अत्र तिष्ठ तिष्ठ ठः ठः स्वाहा। स्थापनमन्त्रः ।
ॐ ह्रीं श्रीपार्श्वनाथाय अत्र मम सन्निहितो भव भव वषट् स्वाहा ।
सन्निधापनम् ।

## अथाष्टकम् ।

ह्रींह्रींकारबीजं भूरिरूपतेजं गुणाधिकराज्यं सुराधिपपूज्यम् ।
क्षीराब्धिसुवारिभिः काश्मीरयुक्तैर्भवकल्मषहारैर्जिनमर्चयामि ॥
ॐ ह्रीं सकलमन्त्रबीजाय ह्रींकाराय विश्वविघ्नहरणाय जलम् ॥ १ ॥
हुं ह्रेंकारनाम्नी परं स्फोटयापं जनानां सुखदायकं विघ्नहारम् ।
देवरण्यश्रीखण्डकुङ्कुमयुक्तैर्घृष्टैस्तापहारैर्जिनं पूजयामि ॥ गन्धम् ॥ २ ॥
ॐ ह्रीं देवमन्त्रं वामादेवीसुतं अखण्डं पदं निर्मितं पार्श्वनाथम् ।
क्षीराब्धिप्रफेनैः समं तण्डुलौघैरखण्डैरक्षतैर्गतहेमपात्रैः ॥
अक्षतम् ॥ ३ ॥
क्ष्मूं ह्रूं रक्ष रक्ष भैरवातिभीमां ह्रां ह्रूं ह्रः वहननस्फुटबन्धबन्धम् ।
जपाजातिमोगरचम्पकपुष्पैः रणद्गन्धलुब्धैर्भ्रमद्भ्रमरवृन्दैः ॥ पुष्पम् ॥ ४ ॥
वमं हंसबाधं सुधाबीजमन्त्रं क्षुधावेदनिवारितं पार्श्वनाथम् ।
वटाखज्जकैर्मोदकैः शालिभक्तैः गतैर्हेमपात्रे बहुअन्नपाकैः ॥
नैवेद्यम् ॥ ५ ॥
क्ष्मां क्ष्मां बीजसारहरिद्देहवर्णं हरन्मोहध्वान्तं जिनाधिपपूज्यम् ।
ज्वलद्दीपघृतादिकर्पूरयुक्तैः शिखापिङ्गवर्णैर्यथावग्रनेत्रैः ॥
दीपम् ॥ ६ ॥
भ्रं भ्रं भ्रः प्रसूतं हतं शाकिनीनां महत्क्रूरकर्म दहन् दग्धरूपम् ।
लसद्धूपधूम्रैः कृष्णागुरुधूपैः सुगन्धीकृताङ्घ्रिं जिनं पूजयामि ॥
धूपम् ॥ ७ ॥
स्फ्रीं स्फ्रीं वसनादं जगत्पूज्यवादं हृतादुष्टदुःखं गताभीष्टरूपम् ।
फलैर्दाडिमैर्द्राक्षकैर्मातुलिङ्गैः जिनं पूजितं श्रीफलैर्भावयुक्तैः ॥
फलम् ॥ ८ ॥
आपैर्गन्धैरक्षतैः पुष्पश्चारुदीपधूपैः फलैरर्घैः ।
काञ्चनपात्रैर्मङ्गलदानैर्दद्यादर्घं श्रीजिननाथम् ॥
इत्थं मन्त्रं नित्यं ध्यायन् तस्मिन् सिद्धिं च प्रदेयम् ।
वामासुतं पद्मासेव्यं भक्तिभावमर्चितं च ॥

## अथ स्तोत्रम् ।

श्रीमद्देवेन्द्रवृन्दामलमणिमुकुटं ज्योतिषां चक्रवाले-
व्यालीढं पादपीठं शठकमठकृतोपद्रवाबाधितस्य ।
लोकालोकावभासी स्फुरदुरुविमलज्ञानसद्दीपकं च
प्रध्वस्तध्वान्तजालः स वितरतु सुखं संस्तुवे पार्श्वनाथम् ॥ १ ॥
ह्रां ह्रीं ह्रूं ह्रौं विभास्वन्मरकतमणिकाकान्तमूर्ते ! ह्रिमं च
हं सं तं वीजमन्त्रैः कृतसकलजगत्क्षेमरक्षोरुवक्षः ।
क्षां क्षीं क्षां क्षें समस्तक्षितितलमहिता ज्योतिरुद्द्योतितार्थम्
क्षैं क्षां क्षैं क्षः क्षितवीजो गुरुशुभभरैः संस्तुवे पार्श्वनाथम् ॥ २ ॥
ह्रींकारे रेफयुक्तं ररररररं देवसंसं प्रयुक्तं
ॐ ह्रीं क्लीं क्लं(ह्रां ह्रीं) समेतं विपदमदकलाकच्चकोद्भासि हुं हुं ।
धुं धुं धुं धूम्रवर्णैरखिलमहिजगन्मोहिदेह्यानुकृष्टं
वैपर्ययंत्रं पतन्तं त्रिजगदधिपते ! संस्तुवे पार्श्वनाथम् ॥ ३ ॥
आं क्रौं ह्रीं सर्ववश्यं कुरु कुरु सरसं कामणं तिष्ठ तिष्ठ
क्ष्रूँ हूं हूं रक्ष रक्ष प्रबलतरमहाभैरवारातिभीमैः ।
ह्रां ह्रीं ह्रूं द्रावयेति द्रव हन हन फट् फट् वषट् बन्ध बन्ध
स्वाहामन्त्रं पठन्तं त्रिजगदधिपते संस्तुवे पार्श्वनाथम् ॥ ४ ॥
हं सं झ्वीं क्ष्वीं सहंसः कुवलयकलितैरर्चिताङ्गः प्रसूनै-
र्झ्वीं भः हः घक्षहंसं हरहरहहहं पक्षिपः पाक्षिकोपम् ।
पंवं हंसः पवंमं सरसर सरसत् सत्सुधावीजमन्त्रैः
स्नायस्थाने परत्नैः प्रबलति विमुखं संस्तुवे पार्श्वनाथम् ॥५॥
क्ष्मां क्ष्मां क्ष्मूं क्ष्मौं क्षः रेते...ह्यपति विनुतं रत्नदीपैः प्रदीपैः
हाहाकारोग्रनादैर्ज्वलदहनशिखाकल्पदीर्घोर्ध्वकेशैः ।
पिङ्गाक्षैर्लेलिजिह्वैर्विषमविषधरालङ्कृतैस्तीक्ष्णदंष्ट्रै-
र्भूतैः प्रेतैः पिशाचैरनघकृतमहोपद्रवाद्रक्षितारम् ॥६॥
झ्रां झ्री झ्रः शाकिनीनां सपदि हरपदं त्रिविशुद्धैर्विबुद्धैः
ग्लौं क्ष्मं डं दिव्यजिह्वागतिमतिकुपितं स्तम्भनं संविधेहि ।
फट् फट् सर्पादिरोगं ग्रहमरणभयोच्चाटनं चैव पार्श्वं
त्रायस्वाशेषदोषादमरनरवरैः संस्तुवे पार्श्वनाथम् ॥७॥
स्फ्रां स्फ्रीं स्फ्रूँ स्फ्रौं स्फ्रः प्रबलसुफलदं मन्त्रबीजं जिनेन्द्रम्
रां रें रैं रूं रः प्रमह...महितं पार्श्वदेवाधिदेवम् ।

क्रां क्रीं क्रूं क्रैं क्रः जजजजजजरा जर्जरीकृत्य देहं
धूं धूं धूं धूं धुं धुं धुं ससमदुरितहं संस्तुवे पार्श्वनाथम् ॥ ८ ॥
इत्थं मन्त्राक्षरोत्थं वचनमनुपमं पार्श्वनाथं सनित्यं
विद्वेषोच्चाटनादिस्तभनजयवशं पापरोगापनोदि
प्रोत्सर्पज्जङ्गमादिस्थविरविषमुखध्वंसनं स्वायुदीर्घै-
रारोग्यैश्वर्ययुक्तो भवति यशःसुखं स्तौति तस्येप्सिद्धिः ॥ ९ ॥

## अथ जयमाला ।

वन्दे तं जिनपार्श्वनाथमनघं! रत्नत्रयालङ्कृतं
ह्रीं बीजं मतिदुःखदावशमनं घोरोपसर्गापहम् ।
देवेन्द्राधिपतिं खगाधिपनतं वन्ध्यापिनारीसुतं
पद्मिनीसतिशासनं भयहरं नागेन्द्रसेवान्वितम् ॥१॥
अमरनाथगणाधिपवन्द्यं मुनिजनआर्यासेवितपादम् ।
भक्तिनम्रभवसागरपोतं वाक्यामृतरसपोषितभूतम् ॥२॥
कृतोपसर्गं कमठैर्गरिष्ठं जितवारातिभवान्तरश्रेष्ठम् ।
कुण्डलकुण्डलिनीकृतछत्रं वारितमेघाडम्बरशस्त्रम् ॥३॥
कर्मपर्वतहतासमवज्रं भयतमवारणसूर्यसुसज्जम् ।
केवलज्ञानविलोकनदक्षं बोधितलोकालोकविपक्षम् ॥४॥
राजितसमवसरणसुनिधानं चामरछत्रसिंहासनमानम् ।
सुरासुरखेचरतिष्ठति सौख्यं द्वादशभासाहितसन्मुख्यम् ॥५॥
धर्मप्रकाशितलक्षणसहितं मूलदयानिश्रितापविरहितम् ।
जन्तूत्तारणसमरथसूरं भव्यकमलवाक्यामृतपूरम् ॥६॥
देवी पद्मावति वामे विशालं रक्षतु शासनमुखद्रुमजालम् ।
दक्षिणदिशि सोहइ फणिराजं विघ्ननिवारणदेवविराजम् ॥७॥
ईदृग्विधि पार्श्वजिनं प्रणम्यं अनन्तचतुष्टयगम्यागम्यम् ।
ये नरनारि त्रिकाल पूजंति ते मन वंछित सफल लहंति ॥८॥
नाग नागिणी अतिशय धारी उधर्या दंपती जनसुखकारी ।
क्रूरघोरघनदुःखनिधारी वंछितफल अतिदायक भारी ॥९॥

घत्ता ( मालिनी ! )

आपद्विविधहारी संपदासौख्यकारी
त्रिभुवनपदधारी सिद्धिलोकाग्रसूरी ।
जलबहुविधपूरैर्गन्धमाल्यादिसारै-
र्जिनवरमुखबिम्बं पूजितं भावभक्त्या ॥१॥ ॐ ह्रीं क्रौं महार्घं ॥

## अथ धरणेन्द्रपूजा ।

धरणयक्षविलक्षविसङ्गासे (?) क्षितिधरोन्न(त)कच्छपवाहने !
त्रिदशवन्दितपार्श्वजिनक्रमं प्रणतमौलिमणिं सदलं श्रिया ॥१॥
ॐ ह्रीं क्रौँ धरणेन्द्राय अत्रावतरावतर सं वौषट् स्वाहा । आह्वाननम् ।
॥ अत्र तिष्ठ तिष्ठ ठः ठः स्थापनम् ।
॥ अत्र मम सन्निहितो भव भव वषट् सन्निधापनम् ।

### अथाष्टकम् ।

अम्भोभृङ्गारस्वर्णाभा सौगन्धिभिर्मधुव्रतैः ।
फणीन्द्रं पूजितं भक्त्या सर्वविघ्नापहारिणम् ॥ ॐ ह्रीं क्रौँ धरणेन्द्राय जलं० १
चन्दनैः कुसुमैः सारैर्भृङ्गार्द्रीकृतगन्धिभिः ।
फणीन्द्रं पूजितं भक्त्या सर्वविघ्नापहारिणम् ॥ ,, गन्धं० २
तन्दुलैः पाण्डुलाखण्डैः कुन्दगौरसमप्रभैः ।
फणीन्द्रं पूजितं भक्त्या सर्वविघ्नापहारिणम् ॥ ,, अक्षतं० ३
मन्दाराचम्पकं जातिपुष्पवाहहृताक्षमैः ।
फणीन्द्रं पूजितं भक्त्या सर्वविघ्नापहारिणम् ॥ ,, पुष्पम् ॥४॥
मण्डकैर्मोदकैर्भक्तैर्हेमभाजनसंस्थितैः ।
फणीन्द्रं पूजितं भक्त्या सर्वविघ्नापहारिणम् ॥ ,, नैवेद्यम् ॥
कर्पूरनिर्धूमवर्तैस्तिमिराहृतदीपकैः । फणीन्द्रं० सर्ववि० दीपम् ॥
पनसैः श्रीफलैर्द्राक्षैरभीष्टफलदायकैः ,, ,, फलम् ॥
कृष्णागुरुधूपधूम्रैर्घातिकर्मसुदाहकैः । ,, ,, धूपम् ॥
जलं गङ्गाक्षतैरर्घैर्धरणेन्द्रार्चितं मुदा । ,, ,, अर्घम् ॥
श्रीपार्श्वनाथपदपङ्कजसेव्यमानं पद्मावती भजति वाङ्मनवामभागम् ।
घोरोपसर्गहननं निजमानदक्षं तं देवशुद्धमतिगं प्रभजामि नित्यम् ॥

ॐ पुष्पाञ्जलि० ॥

परिशिष्ट. ५

# श्रीपद्मावतीस्तोत्रम् ।

श्रीमद्गीर्वाणचक्रस्फुटमुकुटतटीदिव्यमाणिक्यमाला-
ज्योतिर्ज्वालाकरालास्फुरितमुकुरिकाघृष्टपादारविन्दे !
व्याघोरोल्कासहस्रस्फुरज्ज्वलनशिखालोलपाशाङ्कुशाढ्ये
ॐ आँ क्रौं ह्रीं मन्त्ररूपे ! क्षपितकलिमले ! रक्ष मां देवि ! पद्मे ॥१॥

भित्त्वा पातालमूलं चलचलचलिते ! व्याललीलाकरालै-
र्विद्युद्दण्डप्रचण्डप्रहरणसहितैस्तद्भुजैस्तर्जयन्ती ।
दैत्येन्द्रक्रूरदंष्ट्राकटकटघटिते ! स्पष्टभीमाट्टहासे !
मायाजीमूतमालाकुहरितगगने ! रक्ष मां देवि ! पद्मे ! ॥२॥

कूजत्कोदण्डकाण्डोड्डमरविधुरिते ! क्रूरघोरोपसर्गं
दिव्यं वज्रातपत्रं प्रगुणमणिरणत्किङ्किणीक्वाणरम्यम् ।
भास्वद्वैडूर्यदण्डं मदनविजयिनो बिभ्रती पार्श्वभर्तुः
सा देवी पद्महस्ता विघटयतु महाडामरं मामकीनम् ॥३॥
भृङ्गी काली कराली परिजनसहिते ! चण्डि चामुण्डि नित्ये !
क्षां क्षीं क्षूं क्षः क्षणार्धे क्षतरिपुनिवहे ! ह्रीं महामन्त्ररूपे ! ।
भ्रां भ्रीं भ्रूं भृङ्गसङ्गभ्रुकुटिपुटतटत्रासितोद्दामदैत्ये !
झ्वां झ्वीं झ्वूं झ्वः प्रचण्डे ! स्तुतिशतमुखरे ! रक्ष मां देवि ! पद्मे ! ॥४॥

चञ्चत्काञ्चीकलापे ! स्तनतटविलुठत्तारहारावलीके !
प्रोत्फुल्लत्पारिजातद्रुमकुसुममहामञ्जरीपूज्यपादे ! ।
ह्रां ह्रीं क्लीं ब्लूं समेते भुवनवशकरे ! क्षोभिणी द्राविणी त्वं
आं ईं ऊं पद्महस्ते ! कुरु कुरु घटने रक्ष मां देवि ! पद्मे ! ॥५॥

लीलाव्यालोलनीलोत्पलदलनयने ! प्रज्वलद्वाडवाग्नि-
प्रोद्यज्ज्वालास्फुलिङ्गस्फुरदरुणकरोदग्रवज्राग्रहस्ते ! ।
ह्राँ ह्रीँ ह्रूँ ह्रः हरन्ती हरहरहरहुंकारभीमैकनादे !
पद्मे ! पद्मासनस्थे व्यपनय दुरितं देवि ! देवेन्द्रवन्द्ये ! ॥६॥
कोपं वं झं सहंसः कुवलयकलितोद्दामलीलाप्रबन्धे !
ज्रां ज्रीं ज्रूं ज्रः पवित्रे शशिकरधवले प्रक्षरत्क्षीरगौरे ! ।
व्यालव्याबद्धजूटे प्रबलबलमहाकालकूटं हरन्ती
हा हा हुंकारनादे ! कृतकरकमले ! रक्ष मां देवि ! पद्मे ! ॥७॥
प्रातर्बालार्करश्मिच्छुरितघनमहासान्द्रसिन्दूरधूली-
सन्ध्यारागारुणाङ्गि त्रिदशवरवधूवन्द्यपादारविन्दे ! ।
चञ्चच्चन्द्रासिधाराप्रहतरिपुकुले कुण्डलोद्घृष्टगल्ले !
श्रां श्रीं श्रूं श्रः स्मरन्ती मदगजगमने ! रक्ष मां देवि ! पद्मे ! ॥७॥
विस्तीर्णे पद्मपीठे कमलदलनिवासोचिते कामगुप्ते
लांतांगीश्रीसमेते प्रहसितवदने दिव्यहस्ते ! प्रसन्ने ! ।
रक्ते रक्तोत्पलाङ्गि प्रतिवहसि सदा वाग्भवं कामराजं
हंसारूढे ! त्रिनेत्रे ! भगवति ! वरदे ! रक्ष मां देवि ! पद्मे ! ॥९॥
षट्कोणे चक्रमध्ये प्रणतवरयुते वाग्भवे कामराजे
हंसारूढे सबिन्दौ विकसितकमले कर्णिकाग्रे निधाय ।
नित्ये क्लिन्ने मदद्रैर्द्रव इति सहितं साङ्कुशे पाशहस्ते !
ध्यानात् संक्षोभकारित्रिभुवनवशकृद् रक्ष मां देवि ! पद्मे ! ॥१०॥
आं क्रों ह्रीं पञ्चबाणैर्लिखितषट्दले चक्रमध्ये सहंसः
ह्स्क्लीं श्रीं पत्रान्तराले स्वरपरिकलिते वायुना वेष्टिताङ्गी ।
ह्रीं वेष्टे रक्तपुष्पैर्जपति मणिमतां क्षोभिणी वीक्ष्यमाणा
चन्द्रार्कं चालयन्ती सपदि जनहिते रक्ष मां देवि ! पद्मे ! ॥११॥
गर्जन्नीरदगर्भनिर्गततडिज्ज्वालासहस्रस्फुरत्-
सद्वज्राङ्कुशपाशपङ्कजधरा भक्त्यामरैरर्चिता ।
सद्यः पुष्पितपारिजातरुचिरं दिव्यं वपुर्बिभ्रती
सा मां पातु सदा प्रसन्नवदना पद्मावती देवता ॥१२॥
जिह्वाग्रे नासिकान्ते हृदि मनसि दृशोः कर्णयोर्नाभिपद्मे
स्कन्धे कण्ठे ललाटे शिरसि च भुजयोः पृष्ठिपार्श्वप्रदेशे ।
सर्वाङ्गोपाङ्गशुद्ध्यान्यतिशयभवनं दिव्यरूपं स्वरूपं
ध्यायामः सर्वकालं प्रणयलयगतं पार्श्वनाथेतिशब्दम् ॥१३॥

ब्रह्माणी कालरात्री भगवति वरदे ! चण्डि चामुण्डि नित्ये
मातङ्गी गौरिधारी धृतिमतिविजये कीर्तिह्रींस्तुत्यपद्मे ! ।
संग्रामे शत्रुमध्ये जलज्वलनजले वेष्टिते तैः स्वरास्त्रैः
क्षां क्षीं क्षूं क्षः क्षणार्धे क्षतरिपुनिवहे ! रक्ष मां देवि ! पद्मे ! ॥१४॥
भूविश्वेक्षणचन्द्रचन्द्रपृथिवीयुग्मैकसंख्याक्रमा-
च्चन्द्राम्भोनिधिबाणषण्मुखवशं दिक्खेचराशादिषु ।
ऐश्वर्ये रिपुमारविश्वभयकृत् क्षोभान्तराया विषाः
लक्ष्मीलक्षणभारतीगुरुमुखान्मन्त्रानिमा देवते ! ॥१५॥
खड्गैः कोदण्डकाण्डैर्मुशलहलकिणैर्वज्रनाराचचक्रैः
शक्त्या शल्यैस्त्रिशूलैर्वरफरशफरैर्मुद्गरैर्मुष्टिदण्डैः ।
पाशैः पाषाणवृक्षैर्वरगिरिसहितैर्दिव्यशस्त्रैरमानै-
र्दुष्टान् संहारयन्ती वरभुजललिते ! रक्ष मां देवि ! पद्मे ! ॥१६॥
यस्या देवर्नरेन्द्रैरमरपतिगणैः किन्नरैर्दानवेन्द्रैः
सिद्धैर्नागेन्द्रयक्षैर्नरमुकुटतटैर्घृष्टपादारविन्दे ! ।
सौम्ये सौभाग्यलक्ष्मीदलितकलिमले ! पद्मकल्याणमाले !
अम्बे ! काले समाधिं प्रकटय परमं रक्ष मां देवि ! पद्मे ! ॥१७॥
धूपैश्चन्दनतण्डुलैः शुभमहागन्धैः समन्त्रालिकै-
र्नानावर्णफलैर्विचित्रसरसैर्दिव्यैर्मनोहारिभिः ।
पुष्पैर्नैवेद्यवस्त्रैर्मनभुवनकरा भक्तियुक्तैः प्रदाता
राज्ये हेत्वं गृहाणे भगवति वरदे ! रक्ष मां देवि ! पद्मे ! ॥१८॥
क्षुद्रोपद्रवरोगशोकहरणी दारिद्र्यविद्रावणी
व्यालव्याघ्रहरा फणत्रयधरा देहप्रभाभास्वरा ।
पातालाधिपतिप्रिया प्रणयिनी चिन्तामणिः प्राणिनां
श्रीमत्पार्श्वजिनेशशासनसुरी पद्मावती देवता ॥१९॥
तारा त्वं सुगतागमे भगवती गौरीति शैवागमे
वज्रा कौलिकशासने जिनमते पद्मावती विश्रुता ।
गायत्री श्रुतशालिनां प्रकृतिरित्युक्तासि साङ्ख्यागमे
मातर्भारति ! किं प्रभूतभणितैर्व्याप्तं समस्तं त्वया ॥२०॥
पाताले कृशता विषं विषधरा घूर्मन्ति ब्रह्माण्डजाः
स्वर्भूमीपतिदेवदानवगणाः सूर्येन्दवो यद्गुणाः ।
कल्पेन्द्राः स्तुतिपादपङ्कजनता मुक्तामणिं चुम्बिता
सा त्रैलोक्यनता मता त्रिभुवने स्तुत्या स्तुता सर्वदा ॥२१॥

सञ्जाता कणवीररक्तकुसुमैः पुष्पैः समं सञ्चितैः
सन्मिश्रैर्घृतगुग्गुलौघमधुभिः कुण्डे त्रिकोणे कृते ।
होमार्थं कृतषोडशाङ्गुलशता वह्नौ दशांशैर्जपेत्
तं वाचं वचसीह देवि! सहसा पद्मावती देवता ॥२२॥
ह्रींकारैश्चन्द्रमध्ये पुनरपि वलयं षोडशावर्णपूर्णे-
र्बाह्या कण्ठैरवेष्ट्यं कमलदलयुतं मूलमन्त्रप्रयुक्तम् ।
साक्षात् त्रैलोक्यवश्यं पुरुषवशकृतं मन्त्रराजेन्द्रराजं
...एतत्स्वरूपं परमपदमिदं पातु मां पार्श्वनाथः ॥२३॥

प्रोत्फुल्लत्कुन्दनादे कमलकुवलये मालतीमाल्यपूज्ये
पादस्थे भूधराणां कृतरणक्वणिते रम्यझंकाररावे ।
गुञ्जत्काञ्चीकलापे पृथुलकटितटे तुच्छमध्यप्रदेशे
हा हा हुंकारनादे! कृतकरकमले! रक्ष मां देवि! पद्मे! ॥२४॥

दिव्ये पद्मे सुलग्ने स्तनतटमुपरि स्फारहारावलीके
केयूरैः कङ्कणाद्यैर्बहुविधरचितैर्बाहुदण्डप्रचण्डैः ।
भाभाले वृद्धतेजःस्फुरन्मणिशतैः कुण्डलोद्घृष्टगण्डे
स्रां स्रीं स्रूं स्रः स्मरन्ती गजपतिगमने! रक्ष मां देवि! पद्मे! ॥२५॥

या मन्त्रागमवृद्धिमानवितनोल्लासप्रसादार्पणां
या दुष्टाशयकल्मषकार्मणगणप्रध्वंसदक्षाङ्कुशा ।
आयुर्वृद्धिकरां ज्वरामयहरां सर्वार्थसिद्धिप्रदां
सद्यः प्रत्ययकारिणीं भगवतीं पद्मावतीं संस्तुवे ॥२६॥
पद्मासना पद्मदलायताक्षी पद्मानना पद्मकराङ्घ्रिपद्मा ।
पद्मप्रभा पार्श्वजिनेन्द्रशक्ता पद्मावती पातु फणीन्द्रपत्नी ॥२७॥
मातः! पद्मिनि! पद्मरागरुचिरे! पद्मप्रसूनानने!
पद्मे! पद्मवनस्थिते! परिलसत्पद्माक्षि! पद्मानने! ।
पद्मामोदिनि! पद्मकान्तिवरदे! पद्मप्रसूनार्चिते!
पद्मोल्लासिनि! पद्मनाभिनिलये! पद्मावती पाहि माम् ॥२८॥
या देवी त्रिपुरा पुरत्रयगता शीघ्रासि शीघ्रप्रदा
या देवी समया समस्तभुवने सङ्गीयते कामदा ।
तारा मानविमर्दिनी भगवती देवी च पद्मावती
तास्ताः सर्वगतास्त्वमेव नियतं मायेति तुभ्यं नमः ॥२९॥
त्रुट्यत्शृङ्खलबन्धनं बहुविधैः पाशैश्च यन्मोचनं

स्तम्भे शत्रुजलाग्निदारुणमहीनागारिनाशे भयम् ।
दारिद्र्याग्रहरोगशोकशमनं सौभाग्यलक्ष्मीप्रदं
ये भक्त्या भुवि संस्मरन्ति मनुजास्ते देवि ! नामग्रहम् ॥३०॥

भक्तानां देहि सिद्धिं मम सकलमघं देवि ! दूरीकुरु त्वं
सर्वेषां धार्मिकाणां सततनियततं वाञ्छितं पूरयस्व ।
संसाराब्धौ निमग्नं प्रगुणगणयुतं जीवराशिं च त्राहि
श्रीमज्जैनेन्द्रधर्मं प्रकटय विमलं देवि ! पद्मावति ! त्वम् ॥३१॥

दिव्यं स्तोत्रं पवित्रं पटुतरपठतां भक्तिपूर्वं त्रिसन्ध्यं
लक्ष्मीसौभाग्यरूपं दलितकलिमलं मङ्गलं मङ्गलानाम् ।
पूज्यं कल्याणमाद्यं जनयति सततं पार्श्वनाथप्रसादाद्
देवी पद्मावती नः प्रहसितवदना या स्तुता दानवेन्द्रैः ॥३२॥

पठितं भणितं गुणितं जयविजयरमानिबन्धनं परमम् ।
सर्वाधिव्याधिहरं जपतां पद्मावती स्तोत्रम् ॥३३॥

आद्यं चोपद्रवं हन्ति द्वितीयं भूतनाशनम् ।
तृतीये चामरीं हन्ति चतुर्थे रिपुनाशनम् ॥३४॥

पञ्च पञ्चजनानां च वशीकारं भवेद् ध्रुवम् ।
षष्ठे चोच्चाटनं हन्ति सप्तमे रिपुनाशनम् ॥३५॥

अत्योद्वेगा चाष्टमे च नवमे सर्वकार्यकृत् ।
इष्टा भवन्ति तेषां च त्रिकालपठनार्थिनाम् ॥३६॥

आह्वानं नैव जानामि न जानामि विसर्जनम् ।
पूजार्चं नैव जानामि त्वं गतिः परमेश्वरि ! ॥३७॥

## अथाह्वाननम् ।

श्रीपार्श्वनाथ ! जिननायक ! रत्नचूडा-
पाशाङ्कुशोरगफलाङ्कितदोश्चतुष्का ।
पद्मावती त्रिनयना त्रिफणावतंसं
पद्मावती जयति शासनपुण्यलक्ष्मीः ॥

ॐ आँ क्रौँ अरुणवर्णसर्वलक्षणसम्पूर्णः स्वायुधवाहनबन्धुचिह्नसपरिवारान् नमोऽस्तुते हे पद्मावति ! देवि ! अत्रागच्छागच्छ तिष्ठ तिष्ठ ठः ठः मम सन्निहिता भव भव वषट् स्वाहा ।

## अथाष्टकम्

ॐ ह्रीं श्रीं मन्त्ररूपे ! विबुधजननुते ! देवदेवेन्द्रवन्द्ये !
चञ्चच्चन्द्रावदाते ! क्षपितकलिमले ! हारनीहारगौरे ! ।
भीमे ! भीमाट्टहासे भवभयहरणे ! भैरवे ! भीमरूपे
ह्रां ह्रीं हूँकारनादे ! विशदजलभरैस्त्वां यजे देवि ! पद्मे ! ॥१॥
ॐ ह्रीं श्रां श्रीं पद्मावत्यै जलं० १

ह्रा पक्षी(क्षि)बीजगर्भे सुरवररमणीचर्चितेऽनेकरूपे !
कोपं वं झं विधेयं धरितनवधरे योगिनी योगमार्गे ।
हं हंसः स्वर्गजैश्च प्रतिदिननमिते ! प्रस्तुतापापपट्टे
दैत्येन्द्रैर्ध्यायमाने ! विमलसलिलजैस्त्वां यजे देवि ! पद्मे ! ॥२॥

गन्धं० २

दैत्यैर्दैत्यारिनाथैर्नमितपदयुगे ! भक्तिपूर्वं त्रिसन्ध्यं
यक्षैः सिद्धैश्च नम्रैरहमहमिकया देहकान्त्याश्च कान्त्यै ।
आं ह्रं उं तं अ आ आ गृढ गृढ मृडने सः स्वरे न्यस्वरे नैः
तेवप्राहीयमाने क्षतधवलभरैस्त्वां यजे देवि ! पद्मे ! ॥३॥

अक्षतम् ।

क्षां क्षीं क्षूं क्षः स्वरूपे ! हन विषमविषं स्थावरं जङ्गमं वा
संसारे संसृतानां तव चरणयुगे सर्वकालान्तराले ।
अव्यक्तव्यक्तरूपे ! प्रणतनरवरे ! ब्रह्मरूपे ! स्वरूपे !
पंक्तियोगीन्द्रगम्ये सुरभिशुभकमे ! त्वां यजे देवि ! पद्म ! ॥४॥

पुष्पम् ॥

पूर्णं विज्ञानशोभाशशधरधवले दास्यबिम्बं प्रसन्नैः
रम्ये स्वच्छे स्वकान्त्ये द्विजकरनिकरे चन्द्रिकाकारभासे ।
आस्मिंकिन्नाभवर्ज्यां दिनमनुसततं कल्मषं क्षालयन्ती
श्रां श्रीं श्रूं मन्त्ररूपे ! विमलचरुवरैस्त्वां यजे देवि ! पद्मे ! ॥५॥

नैवेद्यम् !

भास्वत्पद्मासनस्थे ! जिनपदनिरते ! पद्महस्ते ! प्रशस्ते !
प्रां प्रीं प्रूं प्रः पवित्रे ! हर हर दुरितं दुष्टजं दुष्टचेष्टे ! ।
वाचाला भावभक्त्या त्रिदशयुवतिभिः प्रत्यहं पूज्यपादे !
चन्द्रे चन्द्रीकराले मुनिगृहमणिभिस्त्वां यजे देवि पद्मे ! ॥६॥

दीपम् ॥

नम्रीभूतक्षितीशप्रवरमणितटोद्घृष्टपादारविन्दे !
पद्माक्षे ! पद्मनेत्रे ! गजपतिगमने ! हंसशुभ्रे विमाने ।
कीर्तिश्रीवृद्धिचक्रे ! शुभजयविजये ! गौरिगान्धारियुक्ते !
देप देप शरण्ये गुरुसुरभिभरैस्त्वां यजे देवि ! पद्मे ! ॥७॥

धूपम् ॥

विद्युज्ज्वालाप्रदीप्ते प्रवरमणिमयामक्षमालां कराले
रम्ये वृत्तां धरन्ती दिनमनुसततं मंककं सारदं च ।
नागेन्द्रैरिन्द्रचन्द्रैर्दिविपमनुजनैः संस्तुता देवदेवि !
पद्मर्चे ! त्वां फलौघैर्दिशतु मम सदा निर्मलशर्मसिद्धिः ॥८॥

फलम् ॥

श्रीमन्महाचीनदुकूलनेत्रे सत्क्षौमकौशेयकचीनवस्त्रैः ।
शुभ्रांशुके श्यनमनिप्रभांगी(?) यजामहे पन्नगराजदेवि ! ॥९॥

शुभ्रवस्त्रम् ।

काञ्चीसूत्रविनूतरसनिचितैः केयूरसत्कुण्डलै-
र्मञ्जीराङ्गदमुद्रिकादिमुकुटप्रालम्बिकावासकैः ।
अञ्चच्चाटिकपट्टिकादिविलगद्ग्रैवेयकैर्भूषणैः
सिन्दूराङ्गसुकान्तिवर्षसुभगैः सम्पूजयामो वयम् ॥१०॥

षोडशाभरणम् ॥

वारिभिर्गन्धैरक्षतपुष्पैश्चरुवरदीपैर्धूपफलाद्यैः ।
क्रौं ह्रीं श्रीं क्षां सुबीजपूरमन्त्रे ह्वीं प्रां धं हुं हुं यन्त्रशुभमर्चे ॥११॥

अर्घम् ॥

अम्भोभिर्दिव्यगन्धैरलिकुलकलितैर्गन्धशाल्यक्षतौघैः
कुन्दाद्यैर्दिव्यवह्निरतुलशुचिवरैर्दीपकैः काम्यधूपैः ।
सुस्वादैर्नालिकेरैर्विलसितविमलैर्षप्रचक्रैरणाद्यैः
कल्याणानाङ्गभाजां विमलगुणवती पूजयामीष्टसिद्ध्यै ॥१२॥

पूर्णार्घम् ॥

## अथ प्रत्येकपूजा ।

श्रीसव्यपाणिगततीक्ष्णमस्त्रं वज्रायुधं नाम जगत्प्रसिद्धम् ।
त्रैलोक्यव्याप्तं भयनाशनं च पद्मावति ! त्वत्पदमर्चयामि ॥१॥

ॐ आं क्रौं ह्रीं सव्यहस्तवज्रधारणे जलं १

भित्त्वा सुपातालमूलं च शस्त्रं कृत्वा विनाशं कलिघोरदुःखम् ।
सुवामभागे करमङ्कुशं च अर्चामि शस्त्रं जनशर्मकारि ॥२॥

कमलकरसुसंस्थं भीमरूपं च देवीं
अखिलमघनिवारं सव्यभोगा च नाम्नी।
जिनचरणसुसेव्यं पद्मिनीनामसारं
खचरभुचरवन्द्यं वारिगन्धादिपूज्यम् ॥३॥
ॐ आँ क्रौँ ह्रीं तृतीयसव्यकरकमलधारिणे जलं० ॥

परमतमदहारिन्! चक्रवामाङ्गधारिन्!
भवभ्रमखलुवारि भूतप्रेतादिहारि।
निखिलभुवनचालि भव्यजीवकृपालि।
धरणिधरसुपत्नीं पद्मिनीं पूजयामि ॥४॥
ॐ आँ क्रौँ ह्रीं तुर्यवामकरचक्रबलिने जलं० ४ ॥

रिपुगणहतिदक्षं दैत्यदेवेन्द्रपक्षं महितलघनसाक्षं मुनिध्यानादिदक्षम्।
स्वबलदक्षिणपाणिच्छत्रदैत्यारिहानि समर्कितगुणखानि पूजितं पद्मिनाम्नी॥
ॐ आँ क्रौं ह्रीं पञ्चमदक्षिणकरच्छत्ररक्षिते जलं० ॥५॥

डमरुककरधारिं गर्जितं लोकनाहं अरिकुलमुलछेदी स्वर्गपातालभेदी।
भवजनितवदुःखं भेदितं वर्तुलाग्रं सुखकरडमरूकं चर्चितं पद्मदेवि! ॥
ॐ आँ क्रौँ ह्रीं डमरुपष्ठोत्तरधारिणि जलं० ॥६॥

कपालपाणिविच्छिलक्षणवामभागं देवेन्द्रपूजित सह सह व्यन्तरीभिः।
श्रीपार्श्वनाथपदपङ्कजसेवमानां तं पूजयामि मनिभीप्सितमग्रसिद्ध्यै ॥७॥
ॐ आँ क्रौँ ह्रीं कपालपाणीगृहीते जलं० ॥७॥

पद्मावत्यायुधपरिकरः तेजःपुञ्जं रसालकालभयत्रासनसव्यपाणी।
पिङ्गोग्रतेजवलबालदिवाकरेऽस्मिंस्तमायुधं गणितमष्टम पूजयामि ॥८॥
ॐ आँ क्रौँ ह्रीं नवमवामकरखड्गधारिणे जलं० ॥८॥

रक्तप्रभा रक्तमुनेत्रधारि धनुपवामा प्रतापकारी।
टङ्कारनादं वलिताचलं वा कोदण्ड पद्मावति पूजयामि ॥९॥
ॐ आँ क्रौँ ह्रीं पुङ्खसर्पिते जलं० ॥९॥

मुशलमायुधचिह्नकरस्थितं धृतसुरागसुमुष्टिदृढान्वितम्।
विघनवारणदैत्यगणाधिपं भजतु पार्श्वजिनाङ्घ्रिजलादिकम् ॥१०॥
ॐ आँ क्रौँ ह्रीं मूशलभयत्रासिने जलं० ॥१०॥

लाङ्गूलशस्त्रभयङ्करसर्पगं भजतु पाणिसुसव्यविराजितम्!
सकलप्राणिदयापरयोजितं पूजितपादसुपद्मिनि देवताम् ॥११॥

ॐ आँ क्रौं ह्रीं सव्यहस्तहलधारिणे जलं० ॥११॥

वह्निकुमारं वामकरसंस्थं ज्वलिततेजः कलुषविदग्धम् ।
निर्धूमपावकशिखापवित्रं तं पदमर्चितमष्टसुद्रव्यैः ॥१२॥

ॐ आँ क्रौं ह्रीं वामपावकज्वालिने जलं० ॥१२॥

दक्षिणदेशे धृतलम्बमाला त्रासितशत्रु तुपलप्रयुक्तम् ।
व्यन्तरभूतपिशाचविबद्धां स्रग्वलयाङ्कितपूजितपादम् ॥१३॥

ॐ आँ क्रौं ह्रीं दक्षिणदोर्भिण्डमालाचालिने जलं० ॥१३॥

तारामण्डलमाकयं निजकरे वामाङ्गमायुधकं
तारास्थं गगने विचुम्बितपरं वश्यं कृतं कल्पजम् ।
यद्येवं वहनं यथागतवरं तथा च कामार्थगं
तां देवीं मम पूजयामि सलिलैः रक्षेति रक्ष मम ॥१४॥

ॐ आँ क्रौं ह्रीं वामकरतारामण्डलभूषिते जलं० ॥१४॥

त्रिशूलतीक्ष्णवरदक्षिणपाणिराजं त्रिलोकसङ्कटविदारणदेवमानम् ।
भस्माङ्गभूतिपरिलेपनपद्मरङ्गं तमर्चयामि विधिपूर्वकसौख्यकारी ॥१५॥

ॐ आँ क्रौं ह्रीं सव्यहस्तत्रिशूलघातिने जलं० ॥१५॥

फरसशस्त्रमहामतिकोमलं अरिजष्टदशविमुनिभेदकम् ।
परशुवामकरं वरचन्द्रिकां यजतु देवगणं वरपद्मकाम् ॥१६॥

ॐ आँ क्रौं ह्रीं वामकरसारिभेदिने जलं० ॥१६॥

विषधरैः खलु सेवितदक्षिणे प्रबललक्ष्मिकृतारिपुनाशिने ।
उरगकेतुमहाभयनाशिने परमखेचरकिन्नरपूजिते ! ॥१७॥

ॐ आँ क्रौं ह्रीं दक्षिणफणिधारिणे जलं० ॥१७॥

मुद्गरनाशनरिपुजनघोरं वामकरे स्थितसबलसुसूरम् ।
भक्तिजनाः सुख ददतु प्रचुरं पूज्यरचनचरद्रव्यसुपूरम् ॥१८॥

ॐ आँ क्रौं ह्रीं वामरमुद्गररक्षिणे जलं० ॥१८॥

दण्डान्वितं दण्डखलस्य मूर्ध्नि संव्यासपाणी दृढमुष्टिधारी ।
शक्त्यायुधं दण्डसुमिश्रकान्ति जलादिपूजाविधिना च भक्त्या ॥१९॥

ॐ आँ क्रौं ह्रीं सव्यहस्तदण्डधारिणे जलं० ॥१९॥

सन्नागपाशवरशोभितवामहस्ते शत्रून् विबद्धफणिपाशसमग्रलोके ।
पद्मावतीद्विदशयुग्मकराङ्किते सात् तं पूजयामि भवतारक पुत्रदायिन् ! ॥२०॥

ॐ आँ क्रौं ह्रीं वामकरफणिपाशप्रसारिणे जलं० ॥२०॥

उपलनामपरिभूधरसदृशानां दक्षिणहस्तधृतमास्थलवर्तुलाग्रम् ।
हंसारूढं गमनकुर्कटसर्पग्राहिं पाषाणयुद्धभयभञ्जनमन्त्रशास्त्रम् ॥२१॥
ॐ आँ क्रौं ह्रीं दक्षिणहस्तपाषाणयुद्धधारिणे जलं० ॥२१॥
वृक्षप्रचण्डकरसंस्थितवामभागे जम्बूद्वीपावसमकल्पितजम्बुवृक्षम् ।
शत्रून् विदारणसमस्तदिगन्तरालं पद्मावतीधरणसंस्थित पूजयामि ॥२२॥
ॐ आँ क्रौं ह्रीं वामकरधृतप्रचण्डवृक्षाय जलं० ॥२२॥
खड्गं कोदण्डकाण्डौ मुशलहलफणिवह्निनाराचचक्रं
शक्त्या शाल्यात् त्रिशूलं खपरडमरुकं नागपाशं च दण्डम् ।
पाषाणं मुद्गरं च फरसकमलसुअङ्कुशं चाम्रछत्रं
वज्रं वृक्षं चायुधं दुरितदुरिहरं पूजनं स्वेष्टसिद्धयै ॥२३॥
पूर्णार्घम् ॥

## अथ जापः कथ्यते—

ॐ ह्राँ ह्रीं ह्रूं ह्रें ह्रैं ह्रौं ह्रौं ह्रः दातारस्य मम शान्तिं कुरु कुरु पद्मावत्यै नमः स्वाहा । वार १०८ तथा १२०००

## अथ जयमाला ।

पद्माकारदलं विशुद्धनयनं सत्तेजसा भास्करं
ह्रींबीजं जिनशासनीं भगवतीं भूजाचतुर्विंशतिः ।
त्रैलोक्यं भुवि चालयन्ति वपुषा दैत्यं निहन्त्यं सदा
हे देवि ! मम दुःखनाशनपरा तुभ्यं नमः स्तान् मुदा ॥१॥
श्रीपार्श्वनाथवरसेवितचरणं पद्मावतीजनभवभयहरणम् ।
फणिपतिरक्षणदक्षिणसहितं भवजलतारण परभयरहितम् ॥२॥
वामभागविष्टपगणरक्षं दैत्यदानवभयनाशनदक्षम् ।
हंसारूढकुर्कटपाणिवाहं गमनं दुर्धर जनत्रयमोहम् ॥३॥
चतुर्विंशतिबाहुविराजं तेषामायुधविविधसुप्राजम् ।
दक्षिणकर वज्रायुधसोहे वाम भाग अंकुश मन मोहे ॥४॥
कमलचक्रछत्रांकितसारं डमरुकशोभा वामकरतारम् ।
चाम्रकपालखड्गधनुषकांसं बाणमुशलहलअरिशिरत्रासम् ॥५॥
शक्तिवह्निज्वालागणधरणं भिण्डमालावरशत्रुकशरणम् ।
तारामण्डलगगनविशालं दक्षिणकरशोभितत्रिशूलम् ॥६॥
फरसनागमुद्गरप्रचण्डं सव्यहस्तधृतवर्तनदण्डम् ।

नागपाशपाषाणविशालं अंह्निपसणकल्पद्रुमजालम् ॥७॥

एवं आयुधग्रहणगरिष्ठं दुर्जनजंबलनाशनदुष्टम् ।
कामिजनामनफलमभीष्टं पूजित पद्मावति देवी इष्टम् ॥८॥

षोडशाभरणालङ्कृतगात्रं कमलाकरवरशोभितनेत्रम् ।
चन्द्राननमुखममृततेजः रक्ताम्बरसुदयारसभाजम् ॥९॥

पद्मावती देवी चरणपवित्रं अष्टविधार्चनहेमसुपात्रम् ।
भावसहित पूजित नर नारी तेषां धणकणसंपत्ति भारी ॥१०॥

घत्ता— विविधदुःखविनाशी दुष्टदारिद्रयपाशी
कलिमलभवक्षाली भव्यजीवकृपाली ।
असुरमदनिवारी देवनागेन्द्रनारी
जिनमुनिपदसेव्यं ब्रह्मपुण्याब्धिपूज्यम् ॥११॥

ॐ आँ क्रौं ह्रीं मन्त्ररूपायै विश्वविघ्नहरणायै सकलजनहितकारिकायै श्री पद्मावत्यै जयमालार्थं निर्वपामीति स्वाहा ।

लक्ष्मीसौभाग्यकरा जगत्सुखकरा बन्ध्यापि पुत्रार्पिता
नानारोगविनाशिनी अघहरा(त्रि)कृपाजने रक्षिका ।
रङ्कानां धनदायिका सुफलदा वाञ्छार्थिचिन्तामणिः
त्रैलोक्याधिपतिर्भवार्णवत्राता पद्मावती पातु वः ॥१२॥

इत्याशीर्वादः

स्वस्तिकल्याणभद्रस्तु क्षेमकल्याणमस्तु वः ।
यावच्चन्द्रदिवानाथौ तावत् पद्मावतीपूजा ॥१३॥

ये जनाः पूजन्ति पूजां पद्मावती जिनान्विता ।
ते जनाः सुखमायान्ति यावन्मेरुर्जिनालयः ॥१४॥

ॐ नमो भगवति ! त्रिभुवनवशंकरी सर्वाभरणभूषिते पद्मनयने ! पद्मिनी पद्मप्रभे ! पद्मकोशिनि ! पद्मवासिनि ! पद्महस्ते ! ह्रीं ह्रीं कुरु कुरु मम हृदयकार्यं कुरु कुरु, मम सर्वशान्तिं कुरु कुरु, मम सर्वराज्यवश्यं कुरु कुरु, सर्वलोकवश्यं कुरु कुरु, मम सर्वस्त्रीवश्यं कुरु कुरु, मम सर्वभूतपिशाचप्रेतरोषं हर हर, सर्वरोगान् छिन्द छिन्द, सर्वविघ्नान् भिन्द भिन्द, सर्वविषं छिन्द छिन्द, सर्वकुरुमृगं छिन्द छिन्द, सर्वशाकिनी छिन्द छिन्द, श्रीपार्श्वजिनपदाम्भोजभृङ्गि नमो दत्ताय देवी नमः । ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः स्वाहा । सर्वजनराज्यस्त्रीपुरुषवश्यं सर्वं २ ॐ आँ क्रौं ह्रीं ऐं क्लीं ह्रीं देवि ! पद्मावति !

त्रिपुरकामसाधिनी दुर्जनमतिविनाशिनी त्रैलोक्यक्षोभिनी श्रीपार्श्वनाथोपसर्गहारिणी क्लीं ब्लूं मम दुष्टान् हन हन, मम सर्वकार्याणि साधय साधय हुं फट् स्वाहा।

आँ क्रोँ ह्रीं क्लीं ह्सौँ पद्मे ! देवि! मम सर्वजगद्वश्यं कुरु कुरु सर्वविघ्नान् नाशय नाशय पुरक्षोभं कुरु कुरु, ह्रीं संवौषट् स्वाहा।

ॐ आँ क्रोँ ह्रौं द्रॉं द्रीं क्लीं ब्लूं सः ह्म्ल्व्र्यूं पद्मावती सर्वपुरजनान् क्षोभय क्षोभय मम पादयोः पातय पातय, आकर्षणी ह्रीं नमः।

ॐ ह्रीं क्रोँ अर्हं मम पापं फट् दह दह हन हन पच पच पाचय पाचय हं भं भ्मां क्ष्वीं हंस भं वंह्य यहः क्षां क्षीं क्षूं क्षें क्षैं क्षों क्षं क्षः क्षि ह्रां ह्रीं हं हे ह्रौं ह्रौं हं हः ह्रिः ह्रिं द्रां द्रिं द्रावय द्रावय नमोऽर्हते भगवते श्रीमते ठः ठः मम श्रीरस्तु, पुष्टिरस्तु, कल्याणमस्तु स्वाहा ॥

इति श्रीपद्मावतीदण्डकसम्पूर्णम् ॥

## श्रीपद्मावतीपटलम्।

श्रीमन्माणिक्यरश्मिफणगणमुकुटे ! पद्मपत्रायताक्षि !<br>
ह्रॉं ह्रीं ह्रींकारनादे हहहहहसिते ! हन्महाटट्टहासे !।<br>
ह्रॉं ह्रीं ह्रौं ह्रः वहत्संवरवरवरणे धारिणे वज्रहस्ते !<br>
पद्मे ! पद्मासनस्थे ! प्रहसितवदने ! देवि ! मां रक्ष पद्मे ! ॥१॥<br>
क्षॉं क्षीं क्षूं क्षें क्षैं क्षः क्षमलवरयुते ! पिण्डबीजत्रिनेत्रे !<br>
क्षॉं क्षीं क्षीं क्षिप्रक्षिप्रे ! तुरतुरगमने ! नागिनीनाशपाशे !।<br>
क्षॉं क्षीं क्षूं क्षें क्षः दिक्षु क्षुभितदशदिशाबन्धनं वज्रहस्ते !<br>
रौद्रे त्रैलोक्यनाथे ! प्रहसितवदने ! देवि ! मां रक्ष पद्मे ! ॥२॥<br>
घ्रॉं घ्रीं घ्रौं घोररूपे घिणिघिणिघिणिते घण्टहोङ्कारनादे !<br>
क्लीं क्लीं ग्लीं ग्लौं घुटीना घुलुघुलुघुलते ! घर्जघर्जप्रमत्ते !।<br>
घं घं घं जृम्भयन्ती दह दह पच मे कर्म निर्मूलयन्ती<br>
दुष्टे दुष्टप्रहारे ! कहकहवदने देवि ! मां रक्ष पद्मे ! ॥३॥<br>
क्ष्मं ढं ग्लौं मन्त्रमूर्ते ! फणिगणनिलये ! डाकिनीस्तम्भकारी<br>
भ्रॉं भ्रीं भ्रूं भ्रः भ्रमन्ते ! भुवि रविभुविते भूरिभूम्येकपादे !।<br>
किं किं बिम्बं प्रचण्डे ! स्थिरवससससस कामिनीमोहपाशे !।<br>
ॐकारे मन्त्रमूर्ते ! सुसुमगणयुते ! देवि ! मां रक्ष पद्मे ! ॥४॥<br>
घ्रॉं घ्रीं घ्रॉं पद्महस्ते ! ग्रहकुलमथने ! डाकिनीसिंहनादे !<br>
हं हं हं वायुवेगे हहहहहसिते ! हन्महाटट्टहासे !।

क्लँी ब्लँी ग्लँी ब्लँी प्रचण्डे ! चलिचलिचलिते ! चालिनी वज्रहस्ते !
यं यं रं वं कराले ! मनु मनु मनुते देवि ! मां रक्ष पद्मे ! ॥५॥
भ्राँ भ्रीँ भ्रूँ मर्दमर्दे ! प्रहरणचपले ! स्तम्भिनी कामरूपे !
छ्राँ छ्रीँ छ्रौँ वज्रहस्ते ! मणिमुकुटमये ! द्योतिदंष्ट्राकराले ! ।
ब्लाँ ब्लँी ब्लूँ ब्रह्मसूत्रे ! जजजजजजये ! कालिनी कालमुद्रे !
दिव्ये ! दिव्यावतारे । कुरु कुरु वदने ! देवि ! मां रक्ष पद्मे ! ॥६॥
म्लाँ म्लँी म्लौँ दिव्यरूपे ! चुरुचुरु चुरुते चारुणी चारुनेत्रे !
श्रीँ ह्रीं क्लँीकारपिण्डे ! लललललवने ! पद्मिनी लम्बजिह्वे ! ।
पादं बाहुं सहस्रे ! कलकलरहसे ! मात्रमाकाशगामि ! ।
जां जां ज नागकन्ये ! त्रिभुवनविजये ! देवि ! मां रक्ष पद्मे ! ॥७॥
ॐ क्ल्व्यूँ भ्राँ वज्रहस्ते ! गमगमगमने ! कामिनीमन्तरीक्षे !
पद्मे पद्मप्रवासि ! सुरगणनमिते ! पद्मपत्राच्छनेत्रे !
क्लँी ब्लौँ ग्लँी घ्लँी रभश्चेत् कुरु कुरु वदने ! तन्महाटट्टहासे !
वं हं सं शान्तिबीजं प्रहसितवदने ! देवि ! मां रक्ष पद्मे ! ॥८॥
ॐ हं सं पङ्कजास्ये ! लललसहिते ! रक्तपद्माभवर्णे !
जूँ भें ह्रीं मोहनीये ! हिलिहिलिरमणे ! मर्द मर्द प्रमर्दे ।
दुष्टनीकान्धकारे दह दह दहने ह्रौँ ललाटायताक्षि !
ह्राँ ह्रीं ह्रौँ हं प्रसन्ने ! प्रहसितवदने ! देवि ! मां रक्ष पद्मे ! ॥९॥

## परिशिष्ट. ६

## द्विपञ्चाशदक्षरगर्भिता सप्रभावा

# श्री पद्मावतीस्तुतिः

ॐ ॐ ॐकारबीजं त्रिभुवनजयदा शक्तिरूपा प्रचण्डं
नानानानामनन्तं निजनिजनिजिटां निर्भया निर्मलाङ्गी ।
मं मं मं मोक्षरूपं सकलजयकरं सर्वलीलाप्रसिद्धं
प्रं प्रं प्रं पद्मदेवि! प्रकटघटमयं वन्दितं नाथ! तत्त्वे ॥१॥
सं सं सं सिद्धिदाता हर हर हरती सर्वपापं हरन्ती
अं अं अं अङ्गअङ्गे अमलदलयुतं अङ्गरूपार्थयन्ती ।
आं आं आं अन्तरिक्षे अगमगमकरं अर्चितं आदिशक्तिः
प्रं प्रं प्रं पद्मदेवि! प्रकटघटमयं वन्दितं नाथतत्त्वे ॥२॥
ईं ईं ईं ईशपारं परमसिद्धिमयं आदिमाता कुमारी
ॐ ॐ ॐ ऊर्ध्वरूपं अकलकलिनितं आदिब्रह्माण्डमण्डे ! ।
रं रं रं राजलीला रमणरितरिते रूपरम्भा रमन्ती
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥३॥
रां रां रां रुद्रराणी रिरिरिरिरवितां रक्तवेषं धरन्ती
लं लं लं लोललोलं ललिललिललितां लोकलीलाललामं ।
लं लं लं लब्धिदाता दलिदलिदलिता दुर्गतिं घोरदुष्टं
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥४॥
ऐं ऐं ऐश्वर्यमाया त्रिभुवनरचिता निर्गुणानन्तशक्तिः
ॐ ॐ ॐकारयुक्तं सकलसिद्धिकरं देवदेवेन्द्रवन्द्ये ! ।
अं अं अं आदिमाता अमरतरवरं आदिब्रह्मादिमर्त्यैः ।
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥५॥

कं कं कं कालहंते ! कलिमलरहिते ! कामनाकर्मसिद्धिः
खं खं खं खड्गहस्ते ! खलबलहतयो खण्डिता खप्रपूरं ।
गं गं गं गौरवर्णे गजनतगमनं गर्जितां घोषशब्दे !
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥६॥
घं घं घं घायदैत्ये घघघघघटिकं घर्घरं घोररूपे !
ङं ङं ङं ङंभरूपे ङङिङङिङङितां दीनचेन्द्रो ङङन्ती ।
चं चं चं चक्रहस्ते ! चुरिचुरिचुरितां कष्टकं चूर्णयन्ती
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥७॥
छं छं छं छत्रमण्डे ! शिरमुकुटधरं शोभितं चन्द्रबिम्बं
जं जं जं जोगमाया जय जय जयतां युग्मरूपे ! भवानी ।
झं झं झं झुम्बरूम्ले ! झमझमझडितां झोठझूठे रुडंती
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥८॥
ञं ञं ञं नादविन्दे नडिनडिनडितां दुष्टकष्टा नडन्ती
टं टं टं टोपपूरे ! त्रिभुवनतरसे त्रासटङ्कारबाणम् ।
ठं ठं ठं ठोरठोरे ठहठहठहकं घोरघोरें घुघंती
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥९॥
डं डं डं डाकडोरे ! डहडहडहकं द्रोटद्रोटाः करन्ती
ढं ढं ढं दुङ्कमण्डे ढढढढढढितो दुंढडा ढाढयन्ती ।
णं णं णं णार्यघाढे रणरणरणिता दुष्टपापं दुरन्ती
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥१०॥
तं तं तं तत्त्वमाया त्रिगुणगुणमयी ताडता भूतचक्रं
थं थं थं थूललोके थुणथुणथुणितां सर्वदेवा स्थुणन्ती ।
दं दं दं दीर्घरूपं दुरिदुरिदुरितां दुष्टपापं दुरन्ती
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥११॥
धं धं धं धर्मदीपे धरधरधरणीं धारिते धर्मवृद्धि
नं नं नं नर्कहंती निर्मलपटधरं मोक्षमण्डाणतत्त्वम् ।
प्रं प्रं प्रं पद्मधारी पृथुलदलमयं पद्मपद्मासनस्थे ! ।
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥१२॥
फं फं फं फोजमध्ये जयजयजयदा शक्तिसामर्थ्यदाता
बं बं बं बालरूपे ! बहबहबहके बाललीलाः करन्ती ।
भं भं भं भ्रूहमध्ये भजभजभजतां शोभि सिन्दूरबिन्दे
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथ तत्त्वे ॥१३॥

मं मं मं माल्यपुष्पैः मृगमदरचितां मौक्तिकैः शोभ्यमानं
यं यं यं ज्योतिरंगे झगिझगिझगितां ज्योतिकं दर्परूपे ! ।
रां रां रां रक्तवर्णे रचिरचिरचितां रक्तरङ्गारुणन्ती
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथतत्त्वे ॥१४॥
लं लं लं लोकमाता त्रिभुवनजननी ब्रह्मविष्णुर्जनन्ती
वं वं वं वेदशक्तिर्विमलवरवरं वज्रवज्रांकुशीनाम् ।
शं शं शं शम्भुरूपी शिखरगिरिमयं शङ्करी शं करन्ती
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथतत्त्वे ॥१५॥
षं षं षं षेलमण्डे षटदलरचितां दर्शनं खड्गपालं
सं सं सं सिद्धशक्तिः शुकलपदभवे ! सिद्धियोगं भजन्ती ।
हौं हौं हौंकारनादे हरिहरि शिव मे सर्वपूज्ये प्रपूज्यं
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथतत्त्वे ॥१६॥
क्षं क्षं क्षं क्षोभक्षोभं षटमतजयदा दुष्टदण्डे ! प्रचण्डे !
क्रौं क्रौं क्रौं कालपन्थे ! किलिकिलिकिलिके किल्कमन्त्रैः समन्त्रैः ।
प्रां प्रां प्रां पट्ककोणे षटदलजपते क्रूरतापे दयन्ती
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथतत्त्वे ॥१७॥
ग्रं ग्रं ग्रं गोलचक्रं गुरुगुरुगुरुते गर्जगर्जेति गर्जे
ज्रं ज्रं ज्रं ज्वालमाला ज्वलज्वलज्वलितां ज्योतिज्वालास्वरूपं ।
त्रं त्रं त्रं ताडिताडि तडतडतडितां तारिता मन्त्रतन्त्रैः
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथतत्त्वे ! ॥१८॥
द्रं द्रं द्रं द्रावयन्ती सकलभयभयान् भूर्यपद्मा भजन्ती
प्रं प्रं प्रं पारिजातैः परमसुखविधे ! पूज्यते पद्मदेवि ! ।
भ्रं भ्र भ्रं भूतमाता भ्रमणभवहते ! ज्ञानदे ! गौरमङ्गं
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथतत्त्वे ॥१९॥
म्रं म्रं म्रं मन्त्रमूर्तिर्मुगतपदमयं अर्चितं योगपन्थैः
य्रां य्रां य्रां ज्योतिमूर्ति घटवरकमले ! चक्रपात्रे ! स्वरूपा ।
श्रं श्रं श्रं सिद्धियोगे कनकघटपटे पार्श्वनाथ प्रतापात्
प्रं प्रं प्रं पद्मदेवि ! प्रकटवटमयं वन्दितं नाथतत्त्वे ॥२०॥
ह्राँ ह्राँ ह्राँ ह्रीं य बीजं श्रियश्रियश्रिपदं श्रींकक्षौंकारजाप्यं
ॐ ह्राँ श्रीं क्लीँ कमलस्थितिकरे सर्वजाप्यं जपन्ती ।
ॐकारे सर्ववीजे समरनितनिते बावन्नामक्षरीणं
प्रं प्रं प्रं पद्मदेवि ! प्रकटघटमयं वन्दितं नाथतत्त्वे ॥२१॥

आद्येशो चिदब्रह्मनन्तगुण भगवती भग्वंतज्योतिर्मयं
आनन्दे युतभक्तिवन्तकमलायुक्तः स्वरूपोन्नतम् ।
कृष्णचन्द्रविभूषणं गुणवतं त्रैल्योक्यमाता सती
ज्ञानादि मुनिचन्द्रनाथ भजतीते मर्चिता लीलामयम् ॥२२॥
रुद्राणी जगरूपरम्भरमती त्रैलोक्यदेवेश्वरी
ब्रह्मा विष्णुमहेशजन्महरणी युग्मेव योगेश्वरी ।
मातङ्गी त्रिगुणादिनन्त विमला वाक्यंतवाघेश्वरी
भग्वंती मुनिचन्द्रमात् मधुमती मानन्द आदेश्वरी ॥२३॥
जगदम्बा युगयोगिणी जयवतं मुक्तामणीभूषणं
खड्गखप्रत्रिशूलचक्रमृगपतिमारूढरक्ताम्बरी ।
दैत्येन्द्रहतरक्तबीजमथनी देव्येन्द्रदाता सुखं
आनन्दीं मुनिचन्द्रनाथनितजप्यं मुक्तेः पदं दायिनी ॥२४॥
विविधनीतियुतं जगवल्लभं
भगवती कीर्ति बहुतपते जयम् ।
दुरितपापहरं अमरापदं
मुनिभिश्चन्द्रकलाकमलायुतम् ।
सर्वपापहरं नित्यं सिद्धिर्भवति निश्चितम् ।
प्रातरुत्थाय यः पठेत् अमरपदमाश्रितम् ॥२५॥÷

---

÷ नास्ति स्तोत्रमिदं शुद्धसंस्कृतं छन्दोदोषविमुक्तं च, तथापि शब्दचित्रत्वात् संगृहीतमिह विदुषां मनोविनोदाय।

परिशिष्ट ७

# पद्मावतीमन्त्राम्नायविधिः ।

ॐ ह्रीं श्रीं अर्हं नमिऊण पास विसहर वसहजिण फुलिंग श्रीं ह्रीं (अर्हं) नमः । ॐ ॥

अस्य श्रीपार्श्वचिन्तामणिमन्त्रस्य पार्श्व ऋषिः, गायत्री छन्दः, श्रीधरणेन्द्रपद्मावती देवता, माया बीजं, श्रीः शक्तिः, अर्हं कीलकम्, मम सकलसिद्धिप्राप्त्यर्थं जपे विनियोगः ।

ॐ अर्हं श्रीं ह्रीं अङ्गुष्ठाभ्यां नमः ।
नमिऊण पासविसहर तर्जनीभ्यां नमः ।
वसहजिण मध्यमाभ्यां नमः ।
फुलिंग अनामिकाभ्यां नमः ।
ह्रीं श्रीं कनिष्ठिकाभ्यां नमः ।
अर्हं नमः करतलपृष्ठाभ्यां नमः । ॥ इति करन्यासः ॥

अथाङ्गन्यासः—

ॐ अर्हं श्रीं ह्रीं हृदयाय नमः ।
नमिऊण पास विसहर शिरसे स्वाहा ।
वसहजिण शिखायै वषट् ।
फुलिंग कवचाय ।
ह्रीं श्रीं नेत्रत्रयाय वौषट् ।
अर्हं नमः अस्त्राय फट् ।

अथ ध्यानम्—

कमठे धरणेन्द्रे च स्वोचितं कर्म कुर्वति ।
प्रभुस्तुल्यमनोवृत्तिः पार्श्वनाथः श्रियेऽस्तु वः ।

ॐ अर्हं श्रीं ह्रीं नमिऊण पास विसहर वसहजिण फुलिंग ह्रीं श्रीं अर्हं नमः।
॥ श्रीरस्तु ॥

ॐ अमृते अमृतोद्भवे इत्यादि पूर्वमेव लिखितम्।
अनेन जलमभिमन्त्र्य वार ७ वाम हस्तेन आत्मशरीरं स्पर्शयेत्

जलाभिमन्त्रणमन्त्रः ॥१॥

ॐ नमो भगवते श्रीपार्श्वेन्द्राय ह्रीं स्वाहा।
अनेन मन्त्रेण श्रीपार्श्वनाथं पूजयेत्। ॥ पूजामन्त्रः ॥२॥
ॐ ह्रीं गुरुपादुकाभ्यो नमः। गुरुपादुकामन्त्रः ॥ ३ ॥
ॐ ह्रीं अत्र स्वक्षेत्रपालाय नमः ॥ क्षेत्रपालमन्त्रः ॥ ४ ॥

क्षिप ॐ स्वाहा हा स्वा ॐ पक्षि। ॐ ह्राँ ह्रीं ह्रूँ ह्रौं ह्रौं ह्रः दक्षिणकर्णे। ॐ ह्रूँ शिरःपश्चिमभागे।

ॐ ह्रः मस्तकोपरि। ॐ क्ष्मों नेत्रयोः। ॐ क्ष्मीं मुखे। ॐ क्ष्मूँ कण्ठे। ॐ क्ष्मौं हृदये। ॐ क्ष्मः बाह्वोः। ॐ क्रौं उदरे। ॐ ह्रीं कट्याम्।

ॐ ह्रँ जङ्घयोः। ॐ क्ष्मे पादयोः। ॐ क्षः हस्तयोः। पृष्ठे मणिभद्रो रक्षतु ॥ अङ्गन्यासमन्त्रः ॥

ॐ ह्रीं अस्त्राय फट् फट् अस्त्रायनमः। करच्छोटिकामन्त्रः। अस्त्रः।

ॐ नमो भगवति पद्मावति एहि एहि ह्रीं स्वाहा। आह्वानमन्त्रः। ॐ नमो भगवति! देवि! पद्मे! अत्र सन्निहिता भव। स्थापनमन्त्रः।

ॐ नमो भगवति! देवि! पद्मावति! ह्रीं गन्धादीन् गृह्ण गृह्ण। अनेन मन्त्रेण पूजयेत्। अर्चनमन्त्रः।

चतुर्भुजां ध्यायेद्देवीं अभयवरदपाशाङ्कुशाहिमुद्राः।

ॐ आँ क्रौं ह्रीं ऐं क्लीं ह्सौं देवि! पद्मे! मम सर्वं जगद् वश्यं कुरु कुरु, सर्वविघ्नान् नाशय नाशय, परक्षोभं कुरु कुरु, ह्रीं संवौषट्। मुद्रा बद्ध्वा पूजानन्तरं परिजाप्य मूलमन्त्रः नैवेद्ये। अग्निकार्ये तु स्वाहान्तम्। विद्वेषे ह्रूँकारान्तम्। शान्तिके वौषट्, पौष्टिके संवौषट्। वशीकरणे वषट्। पूजायां जापे च रक्तकणवीरपुष्पैः द्वादश सहस्र १२००० पूजा। त्रिसन्ध्यं जपेत्। सिद्धिर्भवेत् वेला ७ ध्यायेत् ध्यानकाले त्रिसन्ध्यम्। मूलमन्त्रः।

ॐ नमो भगवति! देवि! पद्मावति! स्वस्थानं गच्छ गच्छ फट्। विसर्जनमन्त्रः।

ॐ आँ क्रौं देवि! पद्मे! ॐ ह्रीं हस्क्लह्रीं द्राँ द्रीं क्लीं ब्लू सः।

एभिर्बाणैः अमुकं वशमानय आनय ह्रीं वषट्। इमां देवीं पद्मावतीं रात्रौ ताम्बूलभृताननः स्वाङ्गे विन्यस्य यादृग्विधा देवी तादृग्विधमात्मानं परिकल्पयेत्। मन्त्रं यस्यो-

परि जापः क्रियते सा स्त्री पादलग्ना ध्यानाद् वशीभवति। आकृष्टा च आयाति ॥

ॐ विद्युज्जिह्वे० इत्यादि पूर्वेतनपत्रे लिखितोऽस्ति, एकविंशतिवारान् जप्तेन पुरक्षोभो भवति । पुरक्षोभविद्या ।

पद्मावतीपूजाध्यानविधिः समाप्तः ॥

तृतीयविधानं लिख्यते—

ॐ नमो भगवति ! देवि ! पद्मावति ! एहि एहि ह्रीं स्वाहा ॥ आह्वानमन्त्रः ॥
ॐ नमो भगवति ! देवि ! पद्मे ! ह्रीं अत्र सन्निहिता भव भव ॥ स्थापनमन्त्रः ॥
ॐ नमो भगवति ! देवि ! पद्मावति ! ह्रीं गन्धादीन् गृह्ण गृह्ण ॥ अर्चनमन्त्रः ॥
ॐ नमो भगवति ! देवि ! पद्मावति ! स्वस्थानं गच्छ गच्छ फट् फट् ॥ विसर्जनमन्त्रः ॥
ऐं क्लीं ह्सौँ पद्मावति मम सर्वं जगद् वशं कुरु कुरु ह्रीं संवौषट् ।

पूजायां जापे च रक्तकणवीरपुष्पैः द्वादश सहस्र १२००० पूजा त्रिसन्ध्यं सिद्धिर्भवति ॥

इति तृतीयविधिः ।

ॐ अर्हं नमः सिद्धं । ॐ ह्रीं पद्मावत्यै नमः । ॐ आँ ऐं क्रौं ब्लूँ कामरूपे ! सर्वेवश्ये ! श्री हंसपद्मावत्यै ह्रीं नमः ।

ऐं क्ली ह्सौँ पद्मावती मम जगद् वश्यं कुरु कुरु ह्रीं संवौषट् स्वाहा । क्षिप ॐ स्वाहा ह्रों स्वाहा ॐ पक्षि ॐ ह्राँ ह्रीं ह्रूँ ह्रौं ह्रः आत्मसकलीकरणमन्त्रः ।

ॐ आँ क्रौं ह्रीं ऐं क्लीं ह्सौँ देवि ! पद्मे ! नमः ! इत्यादि न्यासः ।

ॐ ह्रीं अस्त्राय फट् फट् अस्त्राय नमः। करमध्यात् छोटिका अस्त्रम् ।

ॐ नमो भगवति ! एहि यहि ह्रीं स्वाहा । आह्वानमन्त्रः ।

ॐ नमो भगवति ! देवि ! पद्मे ! ह्रीं अत्र सन्निहिता भव भव स्थापनमन्त्रः ॥

ॐ नमो भगवति ! देवि ! पद्मावति ! ह्रीं गन्धादीन् गृह्ण गृह्ण अर्चनमन्त्रः ॥मुद्राः॥

ॐ नमो भगवति ! देवि ! पद्मावति ! स्वस्थानं गच्छ गच्छ फट् ।

विसर्जनमन्त्रः ।

ऐं क्लीं ह्सौँ पद्मावति ! मम सर्वजगद्वशं कुरु कुरु ह्रीं संवौषट् मन्त्रोऽयं नैवेद्ये, अग्निकार्ये तु स्वाहान्तं । विद्वेषे हुंकारान्तम् । शान्तिके वौषट् ।

ॐ आँ क्रौं ह्रीं ऐं क्लीं ह्सौँ ॐ द्रां द्रीं पद्मे! पद्मकटिनी अमुकस्य बन्दिमोक्षं कुरु कुरु स्वाहा । जातिपुष्पजापे बद्धो मुच्यते ।

ॐ आँ क्रौं ह्रीं ऐं क्लीं ह्सौँ देवि ! पद्मे । सर्वजगद्वशं कुरु कुरु, सर्वविघ्नान् नाशय नाशय, पुरक्षोभं कुरु कुरु, ह्रीं संवौषट् स्वाहा । प्रत्यहं स्मरणात् शुभं भवति ॥

पौष्टिके संवौषट्, वशीकरणे वषट्, पूजायां जापे च रक्तकणवीरकुसुमैः द्वादश सहस्र १२००० पूजा त्रिसन्ध्यम् । सिद्धिर्भवति ।

ॐ विद्युज्जिह्वे ज्वालामुखी ज्वालिनी ज्वल ज्वल, प्रज्वल प्रज्वल, धग धग, धूमान्धकारिणी देवी पुरक्षोभं कुरु कुरु, मनश्चिन्तितं कारय २ ऐं ह्रीं हः क्लीँ क्षोभिणी नमः।

एकविंशतिवारान् परिजप्तेन पुरक्षोभो भवति। सम्प्रति पद्मावतीमहादेव्याः कल्पो लिख्यते, स चायम्—

ॐ अमृते ! अमृतोद्भवे ! अमृतवर्षिणि ! अमृतवाहिनि ! अमृतं स्रावय स्रावय स्वाहा॥ जलाभिमन्त्रणम्॥

ॐ ह्रीं नमः। मूलसिद्धिः। स्वाहा स्नानमन्त्रः॥

॥ इति श्रीपद्मावतीमन्त्राक्षराणि सम्पूर्णानि ॥



## परिशिष्ट ८

# श्रीपद्मावतीसहस्रनामस्तोत्रम्

प्रणम्य परया भक्त्या देव्याः पादाम्बुजं त्रिधा ।
नामान्यष्टसहस्राणि वक्ष्ये तद्भक्तिहेतवे ॥१॥
श्रीपार्श्वनाथचरणाम्बुजचञ्चरीका भव्यान्धनेत्रविमलीकरणे शलाका ।
नागेन्द्रप्राणधरणीधरधारणाभूत् मां पातु सा भगवती नितरामघेभ्यः ॥२॥
पद्मावती पद्मवर्णा पद्महस्तापि पद्मिनी ।
पद्मासना पद्मकर्णा पद्मास्या पद्मलोचना ॥३॥
पद्मा पद्मदलाक्षी च पद्मी पद्मवनस्थिता ।
पद्मालया पद्मगन्धा पद्मरागोपरागिका ॥४॥
पद्मप्रिया पद्मनाभिः पद्माङ्गा पद्मशायिनी ।
पद्मवर्णवर्ता पूता पवित्रा पापनाशिनी ॥५॥
पद्मावती प्रसिद्धा च पार्वती पुरवासिनी ।
प्रज्ञा प्रह्लादिनी प्रीतिः पीताभा परमेश्वरी ॥६॥
पातालवासिनी पूर्णा पद्मयोनिः प्रियंवदा ।
प्रदीप्ता पाशहस्ता च परा पारा परंपरा ॥७॥
पिङ्गला परमा पूरा पिङ्गा प्राची प्रतीचिका ।
परकार्यकरा पृथ्वी पार्थिवी पृथिवी पवी ॥८॥
पल्लवा पानदा पात्रा पवित्राङ्गी च पूतना ।
प्रभा पताकिनी पीता पन्नगाधिपशेखरा ॥९॥
पताका पद्मकटिनी पतिमान्यपराक्रमा ।
पदाम्बुजधरा पुष्टिः परमागमबोधिनी ॥१०॥
परमात्मा परानन्दा परमा पात्रपोषिणी ।

पञ्चबाणगतिः पौत्री पाषण्डघ्नी पितामही ॥११॥
प्रहेलिकापि प्रत्यञ्चा पृथुपापौघनाशिनी।
पूर्णचन्द्रमुखी पुण्या पुलोमा पूर्णिमा तथा ॥१२॥
पावनी परमानन्दा पण्डिता पण्डितेडिता !
प्रांशुलभ्या प्रमेया च प्रभा प्राकारवर्तिनी ॥१३॥
प्रधाना प्रार्थिता प्रार्थ्या पद्दा पङ्क्तिवर्जिनी।
पातालस्येश्वरप्राणप्रेयसी प्रणमामि ताम् ॥१४॥

## इति पद्मावतीशतम्।

महाज्योतिर्मती माता महामाया महासती।
महादीप्तिमती मित्रा महाचण्डी च मङ्गला ॥१॥
महिषी मानुषी मेघा महालक्ष्मीर्मनोहरा।
महाप्रहारनिम्नाङ्गा मानिनी मानशालिनी॥२॥
मार्गदात्री मुहूर्ता च माध्वी मधुमती मही।
महेश्वरी महेज्या च मुक्ताहारविभूषणा ॥३॥
महामुद्रा मनोज्ञा च महाश्वेतातिमोहिनी।
मधुप्रिया मतिर्माया मोहघ्नी च मनस्विनी ॥४॥
माहिष्मती महावेगा मानदा मानहारिणी।
महाप्रभा च मदना मन्त्रवश्या मुनिप्रिया ॥५॥
मन्त्ररूपा च मन्त्रज्ञा मन्त्रदा मन्त्रसागरा।
मधुप्रिया महाकाया महाशीला महाभुजा ॥६॥
महासना महारम्या मनोभेदा महासमा।
महाकान्तिधरा मुक्तिर्महाव्रतसहायिनी ॥७॥
मधुश्रवा मूर्छना च मृगाक्षी च मृगावती।
मृणालिनी मनःपुष्टिर्महाशक्तिर्महार्थदा ॥८॥
मूलाधारा मृडानी च मत्तमातङ्गगामिनी।
मन्दाकिनी महाविद्या मर्यादा मेघमालिनी ॥९॥
मातामही मन्दगतिः महाकेशी महीधरा।
महोत्साहा महादेवी महिला मानवर्द्धिनी ॥१०॥
महाग्रहहरा मारी मोक्षमार्गप्रकाशिनी।
मान्या मानवती मानी मणिनूपुरशेखरा (०शोभिनी) ॥११॥
मणिकाञ्चीधरा माना महामतिप्रकाशिनी।
ईडेश्वरी दिज्येच्छेखे खेन्द्राणी कालरूपिणी ॥१२॥

## इति महाज्योतिर्मतीशतम् ॥

जिनमाता जिनेन्द्रा च जयन्ती जगदीश्वरी ।
जया जयवती जाया जननी जनपालिनी ॥१॥
जगन्माता जगन्माया जगज्जैत्री जगज्जिता ।
जगरा जर्जरा जैत्री यमुनाजलभासिनी ॥२॥
योगिनी योगमूला च जगद्धात्री जलन्धरा ।
योगपट्टधरा ज्वाला ज्योतीरूपा च जालिनी ॥३॥
ज्वालामुखी ज्वालमाला ज्वलिनी च जगद्धिता ।
जैनेश्वरी जिनाधारा जीवनी यशपालिनी ॥४॥
यशोदा ज्यायसी जीर्णा जर्जरा ज्वरनाशिनी ।
ज्वररूपा जरा जीर्णा जाङ्गुलाऽऽमयतर्जिनी ॥५॥
युगभारा जगन्मित्रा यन्त्रिणी जन्मभूषिणी ।
योगेश्वरी च योगाङ्गा योगयुक्ता युगादिजा ॥६॥
यथार्थवादिनी जाम्बूनदकान्तिधरा जया ।
नारायणी नर्मदा च निमेषा नर्त्तिनी नरी ॥७॥
नीलानन्ता निराकारा निराधारा निराश्रया ।
नृपवश्या निरामान्या निःसङ्गा नृपनन्दिनी ॥८॥
नृपधर्ममयी नीतिः तोतला नरपालिनी ।
नन्दा नन्दिवती निष्ठा नीरदा नागवल्लभा ॥९॥
नृत्यप्रिया नन्दिनी च नित्या नेका निरामिषा ।
नागपाशधरा नौका निःकलङ्का निरागसा ॥१०॥
नागवल्ली नागकन्या नागिनी नागकुण्डली ।
निद्रा च नागदमनी नेत्रा नाराचवर्षिणी ॥११॥
निर्विकारा च निर्वैरा नागनाथेशवल्लभा ।
निर्लोभा च नमस्तुभ्यं नित्यानन्दविधायिनी ॥१२॥

## इति जिनमाताशतम् ॥

वज्रहस्ता च वरदा वज्रशीला वरूथिनी ।
वज्रा वज्रायुधा वाणी विजया विश्वव्यापिनी ॥१॥
वसुदा बलदा वीरा विषया विषवर्द्धिनी ।
वसुन्धरा वरा विश्वा वर्णिनी वायुगामिनी ॥२॥

बहुवर्णा बीजवती विद्या बुद्धिमती विभा ।
वेद्या वामवती वामा विनिद्रा वंशभूषणा ॥३॥
वरारोहा विशोका च वेदरूपा विभूषणा ।
विशाला वारुणीकल्पा बालिका बालकप्रिया ॥४॥
वर्तिनी विपहा वाला विविक्ता वनवासिनी ।
वन्द्या विधिसुता वाला विश्वयोनिर्बुधप्रिया ॥५॥
बलदा वीरमाता च वस्तुदा वीरनन्दिनी ।
वरायुधधरा वेषी वारिदा बलशालिनी ॥६॥
बुधमाता वैद्यमाता बन्धुरा बन्धुरूपिणी ।
विद्यावती विशालाक्षी वेदमाता विभास्वरी ॥७॥
वात्याली विषमा वेषा वेदवेदाङ्गधारिणी ।
वेदमार्गरता व्यक्ता विलोमा वेदशालिनी ॥८॥
विश्वमाता विकम्पा च वंशजा विश्वदीपिका ।
वसन्तरूपिणी वर्षा विमला विविधायुधा ॥९॥
विज्ञानिनी पवित्रा च विपञ्चो बन्धमोक्षिणी ।
विपरूपवती वर्द्धा विनीता विशिखा विभा ॥१०॥
व्यालिनी व्याललीला च व्याप्ता व्याधिविनाशिनी ।
विमोहा बाणसन्दोहा वर्द्धिनी वर्द्धमानका ॥११॥
ईशानी तोतरा भिद्रा वरदायी नमोऽस्तु ते ।
व्यालेश्वरी प्रियप्राणा प्रेयसी वसुदायिनी ॥१२॥

## इति वज्रहस्ताशतम् ॥

कामदा कमला काम्या कामाङ्गा कामसाधिनी ।
कलावती कलापूर्णा कलाधारा कनीयसी ॥१॥
कामिनी कमनीयाङ्गा क्वणत्काञ्चनसन्निभा ।
कात्यायनी कान्तिदा च कमला कामरूपिणी ॥२॥
कामिनी कमलामोदा कम्रा कान्तिकरी प्रिया ।
कायस्था कालिका काली कुमारी कालरूपिणी ॥३॥
कालाकारा कामधेनुः काशी कमललोचना ।
कुन्तला कनकाभा च काश्मीरा कुङ्कुमप्रिया ॥४॥
कृपावती कुण्डलिनी कुण्डलाकारशायिनी ।
कर्कशा कोमला काली कौलिकी कुलबालिका ॥५॥

कालचक्रधरा कल्पा कालिका काव्यकारिका ।
कविप्रिया च कौशाम्बी कारिणी कोशवर्द्धिनी ॥६॥
कुशावती किरालाभा कोशस्था कान्तिवर्द्धिनी ।
कादम्बरी कठोरस्था कौशाम्बा कोशवासिनी ॥७॥
कालघ्नी कालहननी कुमारजननी कृतिः ।
कैवल्यदायिनी केका कर्महा कालवर्जिनी ॥८॥
कलङ्करहिता कन्या करुणालयवासिनी ।
कर्पूरामोदिनिःश्वासा कामबीजवती करा ॥९॥
कुलीना कुन्दपुष्पाभा कुर्कुटोरगवाहिनी ।
कलिप्रिया कामबाणा कमठोपरिशायिनी ॥१०॥
कठोरा कठिना क्रूरा कन्दला कदलीप्रिया ।
क्रोधिनी क्रोधरूपा च चक्रहुंकारवर्तिनी ॥११॥
कम्बोजिनी काण्डरूपा कोदण्डकरधारिणी ।
कुहू क्रीडवती क्रीडा कुमारानन्ददायिनी ॥१२॥
कमलासना केतकी च केतुरूपा कुतूहला ।
कोपिनी कोपरूपा च कुसुमावासवासिनी ॥१३॥

## इति कामदाशतम् ॥

सरस्वती शरण्या च सहस्राक्षी सरोजगा ।
शिवा सती सुधारूपा शिवमाया सुता शुभा ॥१॥
सुमेधा सुमुखी शान्ता सावित्री सायगामिनी ।
सुरोत्तमा सुवर्णा च श्रीरूपा शास्त्रशालिनी ॥२॥
शान्ता सुलोचना साध्वी सिद्धा साध्या सुधात्मिका ।
सारदा सरला सारा सुवेषा जशवर्द्धिनो ॥३॥
शङ्करी शमिता शुद्धा शक्रमान्या शुभङ्करी ।
शुद्धाहाररता श्यामा शीमा शीलवती शरा ॥४॥
शीतला सुभगा सर्वा सुकेशी शैलवासिनी ।
शालिनी साक्षिणी सीता सुभिक्षा शिवप्रेयसी ॥५॥
सुवर्णा शोणवर्णा च सुन्दरी सुरसुन्दरी ।
शक्तिस्तुग सारिका च सेव्या श्रीः सुजनार्चिता ॥६॥
शिवदूती श्वेतवर्णा शुभ्राभा शुभनाशिकी ।
सिंहिका सकला शोभा स्वामिनी शिवपोषिणी ॥७॥

श्रेयस्करी श्रेयसी च शौरिः सौदामनी शुचिः ।
सौभागिनी शोषणी च सुगन्धा सुमनःप्रिया ॥८॥
सौरमेयी सुसुरभी श्वेतातपत्रधारिणी ।
शृङ्गारिणी सत्यवक्ता सिद्धार्था शीलभूषणा ॥९॥
सत्यार्थिनी च सन्ध्याभा शची संक्रान्तिसिद्धिदा ।
संहारकारिणी सिंही सप्तार्चिः सफलार्थदा ॥१०॥
सत्या सिन्दूरवर्णाभा सिन्दूरतिलकप्रिया ।
सारङ्गा सुतरा तुभ्यं ते नमोऽस्तु सुयोगिनी ॥११॥

## इति श्रीसरस्वतीशतम् ।

भवनेश्वरी भूषणा च भुवना भूमिपप्रिया ।
भूमिगर्भा भूपवन्द्या भुजङ्गेशप्रिया भगा ॥१॥
भुजङ्गभूषणाभोगा भुजङ्गाकारशायिनी ।
भवभीतिहरा भीमा भूमिर्भीमाट्टहासिनी ॥२॥
भारती भवती भोगा भगिनी भोगमन्दिरा ।
भद्रिका भद्ररूपा च भूतात्मा भूतभञ्जिनी ॥३॥
भवानी भैरवी भीमा भामिनी भ्रमनाशिनी ।
भुजङ्गिनी भुसुण्डी च मेदिनी भूमिभूषणा ॥४॥
भिन्ना भाग्यवती भासा भोगिनी भोगवल्लभा ।
भुक्तिदा भक्तिग्राह्या च भवसागरतारणी ॥५॥
भास्वती भास्वरा भूतिर्भूतिदा भूतिवर्द्धिनी ।
भाग्यदा भोग्यदा भोग्या भाविनी भवनाशिनी ॥६॥
भीक्ष्णा भट्टारका भीरुर्भ्रामरी भ्रमरी भवा ।
भट्टिनी भाण्डदा भाण्डा भल्लाकी भूरिभञ्जिनी ॥७॥
भूमिगा भूमिदा भाषा भक्षिणी भृगुभञ्जिनी ।
भाराक्रान्ताभिनन्दा च भजिनी भूमिपालिनी ॥८॥
भद्रा भगवती भर्गा वत्सला भगशालिनी ।
खेचरी खड्गहस्ता च खण्डिनी खलमर्दिनी ॥९॥
खट्वाङ्गधारिणी खड्वा खड्गा खगवाहिनी ।
षट्चक्रभेदविख्याता खगपूज्या खगेश्वरी ॥१०॥
लाङ्गली ललना लेखा लेखिनी ललना लता ।
लक्ष्मीर्लक्ष्मवती लक्ष्या लाभदा लोभवर्जिता ॥११॥

## इति भवनेश्वरीशतम्।

लीलावती ललामाभा लोहमुद्रा लिपिप्रिया।
लोकेश्वरी च लोकाङ्गा लब्धिर्लोकान्तपालिनी ॥१॥
लीला लीलाङ्गदा लोला लावण्या ललितार्थिनी।
लोभहा लम्बनिर्लेङ्का लक्षणा लक्ष्यवर्जिता ॥२॥
उमोर्वसी उदीची च उद्योतोद्द्योतकारिणी।
उद्धारण्या धरोदक्यो दिव्योदकनिवासिनी ॥३॥
उदाहारोत्तमातंसा औषध्युदधितारणी।
उत्तरोत्तरवादिभ्यो धराधरनिवासिनी ॥४॥
उत्कीलिन्युत्कीलिनी च उत्कीर्णौंकाररूपिणी।
ॐकाराकाररूपा च अम्बिकाऽम्बरचारिणी ॥५॥
आमोघा सा पुरी चान्ताऽणिमादिगुणसंयुता।
अनादिनिधनाऽनन्ता चातुलाटाऽट्टहासिनी ॥६॥
अपर्णार्धविन्दुधरा लोकालल्यालिवाङ्गना।
आनन्दानन्ददा लोका राष्ट्रसिद्धिप्रदानका ॥७॥
अव्यक्ताक्षमयी मूर्त्तिरजीर्णा जीर्णहारिणी।
अहिकृत्य रजाजारा हुङ्काररातिरन्तिदा ॥८॥
अनुरूपाथ मूर्तिघ्नी क्रीडा कैरवपालिनी।
अनोकहाशुगा भेद्या छेद्या चाकाशगामिनी ॥९॥
अनन्तरा साधिकारा त्वाङ्गा अन्तरनाशिनी।
अलका यवना लङ्घ्या सीता शिखरधारिणी ॥१०॥
अहिनाथप्रियप्राणा नमस्तुभ्यं महेश्वरी।
आकर्षण्याधरा रागा मन्दा मोदावधारिणी ॥११॥

## इति लीलावतीशतम् ॥

त्रिनेत्रा त्र्यम्बिका तन्त्री त्रिपुरा त्रिपुरभैरवी।
त्रिपुष्टा त्रिफणा तारा तोतला त्वरिता तुला ॥१॥
तपप्रिया तापसी च तपोनिष्ठा तपस्विनी।
त्रैलोक्यदीपका त्रेधा त्रिसन्ध्या त्रिपदाश्रया ॥२॥
त्रिरूपा त्रिपदा त्राणा तारा त्रिपुरसुन्दरी।
त्रिलोचना त्रिपथगा तारा मानविमर्दिनी ॥३॥

धर्मप्रिया धर्मदा च धर्मिणी धर्मपालिनी ।
धाराधरधराधारा धात्री धर्माङ्गपालिनी ॥४॥
धौता धृतिधुरा धीरा धुनुनी च धनुर्धरा ।
ब्रह्माणी ब्रह्मगोत्रा च ब्राह्मणी ब्रह्मपालिनी ॥५॥
गङ्गा गोदावरी गौगा गायत्री गणपालिनी ।
गोचरी गोमती गुर्वाऽगाधा गान्धारिणी गुहा ॥६॥
ब्राह्मी विद्युत्प्रभा वीरा वीणावासवपूजिता ।
गीतप्रिया गर्भधरा गायिनी गजगामिनी ॥७॥
गरीयसी गुणोपेता गरिष्ठा गरमर्दिनी ।
गम्भीरा गुरुरूपा च गीता गर्वापहारिणी ॥८॥
ग्रहिणी ग्राहिणी गौरी गन्धारी गन्धवासना ।
गारुडी ग्रसिनी गूढा गौहनी गुणहायनी ॥९॥
चक्रमध्या चक्रधरा चित्रणी चित्ररूपिणी ।
चर्चरी चतुरा चित्रा चित्रमाया चतुर्भुजा ॥१०॥
चन्द्राभा चन्द्रवर्णा च चक्रिणी चक्रधारिणी ।
चक्रायुधा करधरा चण्डी चण्डपराक्रमा ॥११॥

## इति त्रिनेत्राशतम् ॥

चक्रेश्वरी चमूश्चिन्ता चापिनी चञ्चलात्मिका ।
चन्द्रलेखा चन्द्रभागा चन्द्रिका चन्द्रमण्डला ॥१॥
चन्द्रकान्तिश्चन्द्रमश्रीश्चन्द्रमण्डलवर्तिनी ।
चतुःसमुद्रपारान्ता चतुराश्रमवासिनी ॥२॥
चतुर्मुखी चन्द्रमुखी चतुर्वर्णफलप्रदा ।
चित्स्वरूपा चिदानन्दा चिराश्चिन्तामणिः पिता ॥३॥
चन्द्रहासा च चामुण्डा चिन्तना चौरवर्जिनी ।
चैत्यप्रिया चैत्यलीला चिन्तितार्थफलप्रदा ॥४॥
ह्रींरूपा हंसगमनी हाकिनी हिङ्गुलाहिना ।
हालाहलधरा हारा हंसवर्णा च हर्षदा ॥५॥
हिमानी हरिता हीरा हर्षिणी हरिमर्दिनी ।
गोपिनी गौरगीता च दुर्गा दुर्ललिता धरा ॥६॥
दामिनी दीर्घिका दुग्धा दुर्गमा दुर्लभोदया ।
द्वारिका दक्षिणा दीक्षा दक्षा दक्षातिपूजिता ॥७॥

दमयन्ती दानवती द्युतिर्दीप्ता दिवागतिः ।
दरिद्रहा वैरिदूरा दारा दुर्गतिनाशिनी ॥८॥
दर्पहा दैत्यदासा च दर्शिनी दर्शनप्रिया ।
वृषप्रिया च वृषभा वृषारूढा प्रबोधिनी ॥९॥
सूक्ष्मा सूक्ष्मगतिः श्लक्ष्णा घनमाला घनद्युतिः ।
छाया छात्रच्छविच्छिरक्षीरदा क्षेत्ररक्षिणी ॥१०॥
अमरी रतिरात्रिश्च रङ्गिनी रतिदा रुषा ।
स्थूला स्थूलतरा स्थूला स्थण्डिलाशयवासिनी ॥११॥
स्थिरा स्थानवती देवी घनघोरनिनादिनी ।
क्षेमङ्करी क्षेमवती क्षेमदा क्षेमवर्द्धिनी ॥१२॥
शैलूषरूपिणी शिष्टा संसारार्णवतारिणी ।
सदा सहायिनी तुभ्यं नमस्तुभ्यं महेश्वरी ॥१३॥

## इति चक्रेश्वरीशतम् ॥

नित्यं पुमान् पठति यो नितरां त्रिशुद्ध्या शौचं विधाय विमलं फणिशेखरायाः ।
स्तोत्रं शुनाथ उदिते सुसहस्रनाम चाष्टोत्तरं भवति सो भुवनाधिराजः ॥१॥
तत्कालजातवरगोमयलिप्तभूमौ कुर्याद् दृढासनमतीन्द्रियपद्मकाख्यम् ।
धूपं विधाय वरगुग्गुलुमाज्ययुक्तं रक्ताम्बरं वपुषि भूष्य मनः प्रशस्तः ॥२॥
न तस्य रात्रौ भयमस्ति किञ्चिन्न शोकरोगोद्भवदुःखजालम् ।
न राजपीडा न च दुर्जनस्य पद्मावतीस्तोत्र निशम्यतां वै ॥३॥
न बन्धनं तस्य न वह्निजातं भयं न चारेर्नृपतोऽपि किञ्चित् ।
न मत्तनागस्य न केशरीभयं यो नित्यपाठी स्तवनस्य पद्मे ! ॥४॥
न सङ्करे शस्त्रचयाभिघातः न व्याघ्रभीतिर्भुवि भीतिभीतिः ।
पिशाचिनीनां न च डाकिनीनां स्तोत्रं रमायाः पठतीति यो वै ॥५॥
न राक्षसानां न च शाकिनीनां न चापदा नैव दरिद्रता च ।
न चास्य मृत्योर्भयमस्ति किञ्चित् पद्मावतीस्तोत्र निशम्यतां वै ॥६॥
स्नानं विधाय विधिवद् भुवि पार्श्वभर्तुः पूजां करोति शुचिद्रव्यचयैर्विधिज्ञः ।
पद्मावती फलति तस्य मनोऽभिलाषं नानाविधं भवभवं सुखसारभूतम् ॥७॥
सुपूर्वाह्णमध्याह्नसन्ध्यासु पाठं तथैवावकाशं भवेदेकचित्तः ।
भवेत्तस्य लाभार्थं आदित्यवारे करोतीह भक्तिं सदा पार्श्वभर्तुः ॥८॥
शुभापत्यलक्ष्मीर्नु वाजीन्द्रयूथा गृहे तस्य नित्यं सदा सञ्चरन्ति ।
नवीनाङ्गनानां गणास्तस्य नित्यं शिवायाः सुनामावलिर्यस्य चित्ते ॥९॥

[1]ममाल्पबुद्ध्या स्तवनं विधाय करोमि भक्तिं फणिशेखरायाः ।
यदर्थमन्त्राक्षरव्यञ्जनच्युतं, विशोधनीयं कृपया हि सद्भिः ॥१०॥
भो देवि ! भो मात ! ममापराधं, संक्षम्यतां तत्स्तवनाभिधाने ।
माता यथापत्यकृतापराधं संक्षम्यति प्रीत्यपलायनैक्यम् ॥११॥

(१) ॐ ह्रीं श्रीं क्लीं ब्लैं कलिकुण्डस्वामिन् ! सिद्धिश्रियं जगद् वश्यमानय आनय स्वाहा ॥ १०८

(२) ॐ ह्रीं ऐं श्रीं श्रीगौतमगणराजाय स्वाहा ॥ लक्ष १।

(३) ॐ नमो चालिदेवि ! पद्मावति ! आकृष्टिकरणि ! कामचारि, मोहचारि, अबोलु बोलावि, अदयनुं दिवारि, आणि पासि घालि दासु ॐ फट् स्वाहा ॥
जाप २४ सहस्रं । प्रत्यहं १०८ जपनीयम् । वश्यम् ॥

(४) ॐ आँ ऐं क्रों ह्रीं हंसरूपे ! सर्ववश्ये ! श्रीं सोहं पद्मावत्यै ह्रीं नमः प० । जापोऽयं दीपोत्सवे । घृतदीपोऽखण्डः रक्षणीयः । दिन ३ जाप २५ सहस्र कीजे । त० १२ सहस्र कीजे । पंचामृत होम । सर्वार्थसिद्धि । नित्यपाठ २१

॥ शुभं भवतु ॥

---

१ ममाल्पबुद्धेः

## परिशिष्ट ९

# श्रीपद्मावतीस्तोत्रम् ।

जय जय जगदानन्ददायिनि ! जय जय धरणेन्द्रवल्लभे ! सुभगे ! ।
देवि ! फणत्रयधारिणि ! त्वं जय पद्मानने ! पद्मे ! ॥१॥
विजया जयाऽजिता त्वं अपराजिता शिवा गौरी ।
रम्भा त्वं वैरोट्या प्रज्ञप्तिर्भद्रकाली च ॥२॥
काली च महाकाली शिवङ्करी शङ्करी पद्मनेत्रा ।
हिमवत्तनया लक्ष्मीर्धृतिमतिभुवनेश्वरी देवी ॥३॥
त्वं बुद्धि-सिद्धि-वृद्धिस्त्वं ज्वालामालिनीश्वरी बाला ।
कामाक्षा जगदम्बा अम्बा जगदीश्वरी तारा ॥४॥
त्वमम्बिकाऽन्नपूर्णा श्रीविद्यात्रिपुरसुन्दरीजननी ।
त्वं भगवती भवानी मातङ्गी राजमातङ्गी ॥५॥
त्वं भैरवी त्रिनेत्री शक्तिस्त्वं हिङ्गुलाज-हीङ्गोली ।
त्वं वाग्वादिनीशारदा सरस्वती सत्यदेवी च ॥६॥
ज्वालामुखि भो बाला पीठा शाकम्भरी च त्यमनन्ता ।
शीतला तोतला भद्रा वज्रा कूष्माण्डी चक्रधरा ॥७॥
चामुण्डी महामाया गायत्री सर्वविश्वविख्याता ।
श्रुतदेवी जिनवाणी त्वं विद्या वर्द्धमानस्य ॥८॥
नागकुमारकुमारी देवी कात्यायनी मधुमती च ।
कुण्डलिनी ह्रींकारी आई माई च दुर्गामा ॥९॥
भोगी चानन्दकरी त्वं वरदानन्ददायिनी नित्या ।
ब्रह्माणी बाहुबली सिंहमराले समारूढा ॥१०॥
त्वं चैकाक्षरनामा अक्षरी त्र्यक्षरी षडक्षरी माता ।
पञ्चदशाक्षरगर्भिता त्वं भुवनत्रयस्य सौख्यकरी ॥११॥
त्रिजगन्नातशरीरा जनजाड्यविभञ्जना रविकराभा ।
सेवकवाञ्छितफलदा पद्मदला भास्वरी सेव्या ॥१२॥
श्रीपार्श्वनाथपदपङ्कजभक्तिलीना पद्मासना प्रवरकुर्कुटसर्पयाना ।
दारिद्र्यदुःखरिपुवर्गविनाशनोत्का पद्मावती भवतु मे खलु सा प्रसन्ना ॥१३॥

परिशिष्ट १०

श्रीजिनप्रभसूरिविरचिता

# पद्मावतीचतुष्पदिका।

जिनसासन अवधारि करेवि झायहुं सिरिपउमावइ देवी ।
भवियलोयआणंद करेउ दुलहउ सावयजम्म लहेउ ॥१॥
मनरि मिच्छसूर अणुसरह ॥आंचली॥
पासनाहपयपंकयभसलि ! संघविघननिन्नासणकुसलि ! ।
ससिकरनिम्मलगुणगणपुण्ण ! पउमएवि ! मह होउ पसण्ण ! ॥२॥
तारतरल तुह लोयण तिण्णि दुहदलणा भूयदुगण दुण्णि ।
पियसी पम्नरुहपविहत्थे वारण दीसे तुह हत्थी ॥३॥
फूलफालफणिमणिकरजाल दसदिसि पसरइ तुज्झ कराल ।
जिणि दीठइं पडिबोहिय सहइ विग्घ तिमिर जिणि जग अवहरइ ॥४॥
कुंडलमंडलमंडियगल्ल अरिखंडणभुयदंडपयंड ।
घणथणघोलिरनिम्मलहार पउमावइ नंदउ जगि सार ॥५॥
नेउरझुणिबहिरियदिसिचक्क खग्गदंडखंडियरिउचक्क ।
मणिकंचणचंचुइअपउट्ट पउमि होहि भवियह संतुट्ठ ॥६॥
मेहलमुहलियसोणिपएसि अलिकुलकोमलदीहरकेसि ।
जलधरणीदहउत्तमरमणि पउमएवि भू मयगलगमणि ॥७॥
पासंकुसवरपहरणपाणि तंबचूडविसहरवरझाणि ।
पउमपत्तसमवण्णसरीर ! पउमएवि मा मे अवहीर ॥८॥
भत्तिनमंतसुरासुररमणि मणिकिरीडकररंजियचलणि ।
किं भमई नरमित्त वराय आराहह्लु सुरवर तुह पाय ॥९॥
तालु पें च झंखर ललिय वीयउ ससिदल लहयलकीलउ ।

तुह बीयक्खर जो समरेइ मनवंछितफल सो पामेइ ॥१०॥
भणइहि जोगी मज्झिम नीय धरि चित्तद्क्खर सिरिगुरुरीय ।
जोडवि ससहर ईसर उड्ढ तव कल जाणइ कोवि वियड्ढ ॥११॥
भूअंतिल सुचच्छिम सहिय चिंतवि अंतिम पय परिगहिय ।
अड्ढवि उड्ढवि बिंदु धरेयवि धण्ण झु झायइ पउमिणि देवि ॥१२॥
सुण्ण जलण तुरियस्सरजुत्त अमियकिरणकलगयण पवित्त ।
गुरुउवएसिइं जवइ जु लक्ख पउमएवि तसु [1]पूरइ पक्ख ॥१३॥
दिसिकालायण पल्लववण्ण गुह्य जाणिवि जो कयपुण्ण ।
एह विज्जाचूडामणि सरइ कम्मछक्क ते लीलइ तरइ ॥१४॥
संति पुट्ठि विद्देसण मोह मारण वसि उच्चाडणरोह ।
एउ वि इत्तिय लोयपयास कवण कवण न हु पूरइ आस ॥१५॥
पढम पणव माया सम्भारि नमणउ अंतिए वण्ण वियारि ।
जो समरइ अणुदिण वरभावि सव्वसिद्धि तसु परिणइ आवि ॥१६॥
भूयपेयडाइणिगण डरइ सयलह दुज्जण मण परहरइ ।
एह विज्जु समरंतइ लोइं भम्मदा य पुहवी सिर होइ ॥१७॥
विज्जा एसा लोकपहाण चिंतामणि कप्पद्दुसमाण ।
एहु जिणदत्तसूरि उवएसि थंभइ परबल अद्धनिवेसिं ॥१८॥
हंसगमणि नीलुप्पलनयणि कुंदद्दसणि पुण्णिमससिवयणि ।
बहुखयर्णी मुणसहरणि नवकिसलयकोमलवरचरणि ॥१९॥
पीणसिहिणभारोण्णयअङ्गि हावभावसिंगारसुचंगि ।
एकक्खरि जे नर समरंति ताहं तियसकामिणि वय हुंति ॥२०॥
देउ पाप पउमिणि धरणिंदु बारस परजुयहरिकलबिंदु ।
पउम पउमकडिनी नम अन्त सयलकाम तुह पूरइ मन्त ॥२१॥
जंभ थंभ मोहे भ्रमयंति जय अपराजिय विजय जयन्ती ।
चण्डी भइरव तोतल ताल सहइ इक्कच्चिय विविहपयार ॥२२॥
खित्तवाल जोइणि चउसट्ठि भूयपेयडाइणिगहदिट्ठि ।
अवरवि दुद्धर विग्घ जि केवि नामगहणिं नासइ तुह देवि ! ॥२३॥
जे धण्णंतरि विज्झ असज्झ ते उवादि एहु सामि सुसज्ज ।
नीर जलण थंभइ तुह आण समरंगिणि वारइ अरिबाण ॥२४॥
पइसट्टी जंति च्चिइ भुवणि भइवइ सम्मतु लंभिय सवणि ।
कंपइ धरणीयल धणई लडफडंति दस दिसि माइ ॥२५॥

[1] फुरइ पचक्ख

कुलपव्वय सत्तवि टलटलइ अनु सत्तवि जलनिहि उच्छलइ ।
किडि किडिंत उक्कड किडि दाढ भज्जइ फणिवइ फण अइगाढ ॥२६॥
दढ गढ गिरिवर खडहडि पडइ सुरनर जीविय संसइं चडइ ।
हल्लोहल्लिइं जलहरपूर घुम्मइ तारायण ससिसूर ॥२७॥
पइं तुट्ठि जापिच्चरइ भूयणि पउमिणि समरइ तनी सवणि ।
भक्खइ भुजु अट्ठारसमेउ भुंजिज्जइ पिज्जइ वरपेउ ॥२८॥
पहिरिज्जइ कप्पडे वरसार कंचण कुंडल मोतीहार ।
सम्माणिज्जइ वर तंबोल सम्मइ वंदीयण हलबोल ॥२९॥
चंदणमयणाहिघुसिणघणसार किज्जइ सुरहि विलेवणसार ।
घरि बज्झइ तुरियहं थट्टि दीसइ मयभंभलदोघट्टि ॥३०॥
रहवरकरिजंगमसुर जाण उलग्गइ...इक्कपहाण ।
अणुसलिसइं चामरत्त भाणिज्जइ माणिणि अणुरत्त ॥३१॥
ससहरकल बारससरजुत्त थावरजंगमविसहरतत्त ।
हंसहारहरससहरकंति नाम गहणि तुह दयफल हुंति ॥३२॥
वंझनारि तुह पय झायंति सुरकुमरोवम पुत्त लहंति ।
निंदू नंदण जणइ चिराउ दूहव पावइ वल्लह राउ ॥३३॥
चिंतियफल चिंतामणि मंति तुज्झ पसायिं फलइ नियंतु ।
तुह अणुग्गह नर पिक्खेवि सिज्झइ सोलह विज्जापवि ॥३४॥
रूपकंतिसोहग्गनिहाण निव पूइयपय अमिलियमाण ।
कविवाईसर हुंति ते धण्ण जाहं पउमि ! तु होहि पसण्ण ॥३५॥
तुह गुण अंत न केणवि मुणिय तहवि तुज्झ मइं गुणलव थुणिय ।
आण जु पालइ जिणसिंघ सूरि तार्य संघमणवंछियपूरि ॥३६॥
पउमावई चउपई पढंत होइ पुरिस तिहुयणसिरिकंत ।
रम्म भणइ नियजसकप्पूरि सूरदीय भवण जिणप्पहसूरि ॥३७॥

## परिशिष्ट ११

अर्हम् ।

### श्रीमल्लिषेणाचार्यविरचितः

# सरस्वतीमन्त्रकल्पः

जगदीशं जिनं देवमभिवन्द्याभिशङ्करम् ।
वक्ष्ये सरस्वतीकल्पं समासायाल्पमेधसाम् ॥१॥
अभयज्ञानमुद्राक्षमालापुस्तकधारिणी ।
त्रिनेत्रा पातु मां वाणी जटाबालेन्दुमण्डिता ॥२॥
लब्धवाणीप्रसादेन मल्लिषेणेन सूरिणा ।
रच्यते भारतीकल्पः स्वल्पजाप्यफलप्रदः ॥३॥
दक्षो जितेन्द्रियो मौनी देवताराधनोद्यमी ।
निर्भयो निर्मदो मन्त्री शास्त्रेऽस्मिन् स प्रशस्यते ॥४॥
पुलिने निम्नगातीरे पर्वतारामसङ्कुले ।
रम्यैकान्तप्रदेशे वा हर्म्ये कोलाहलोज्झिते ॥५॥
तत्र स्थित्वा कृतस्नानः प्रत्यूषे देवतार्चनम् ।
कुर्यात् पर्यङ्कयोगेन सर्वव्यापारवर्जितः ॥६॥
तेजोवदद्वयस्याग्रे लिखेद् वाग्वादिनीपदम् ।
ततश्च पञ्च शून्यानि पञ्चसु स्थानकेष्वपि ॥७॥

ॐ वद वद वाग्वादिनी ह्रां हृदयाय नमः । ॐ वद वद वाग्वादिनी ह्रीं शिरसे नमः । ॐ वद वद वाग्वादिनी ह्रूं शिखायै नमः । ॐ वद वद वाग्वादिनी ह्रौं कवचाय नमः । ॐ वद वद वाग्वादिनी ह्रः अस्त्राय नमः । इति सकलीकरणं विधातव्यम् ।

रेफैर्ज्वलद्भिरात्मानं दग्धमग्निपुरस्थितम् ।
ध्यायेदमृतमन्त्रेण कृतस्नानस्ततः सुधीः ॥८॥

ॐ अमृते! अमृतोद्भवे! अमृतवर्षिणि! अमृतं श्रावय श्रावय सं सं ह्रीं ह्रीं क्लीं क्लीं ब्लूँ ब्लूं द्रां द्रां द्रीं द्रीं द्रूं द्रूं द्रावय द्रावय स्वाहा। स्नानमन्त्रः। विनयमहा।

ॐ ह्रीं पद्मयशसे योगपीठाय नमः। पीठस्थापनमन्त्रः।

पट्टकेऽष्टदलाम्भोजं श्रीखण्डेन सुगन्धिना।
जातिकास्वर्णलेखिन्या दूर्वादर्भेण वा लिखेत् ॥९॥
ॐकारपूर्वाणि नमोऽन्तगानि शरीरविन्यासकृताक्षराणि।
प्रत्येकतोऽष्टौ च यथाक्रमेण देयानि तान्यष्टसु पत्रकेषु ॥१०॥
ब्रह्महोमनमःशब्दं मध्येकर्णिकमालिखेत्।
कं कः प्रभृतिभिर्वर्णैर्वेष्टयेत् तन्निरन्तरम् ॥११॥

कं कः, चं चः, टं टः, तं तः, पं पः, यं यः, रं रः, लं लः, वं वः, शं शः, षं षः, सं सः, हं हः, ळं ळः, क्षं क्षः, खं खः, छं छः, ठं ठः, थं थः, फं फः, गं गः, ज जः, डं डः, दं दः, बं बः, घं घः, झं झः, ढं ढः, धं धः, भं भः ङं ङः, ञं ञः, णं णः, न नः, मं मः, एतानि केसराक्षराणि।

बाह्ये त्रिर्मायया वेष्ट्य कुम्भकेनाम्बुजोपरि।
प्रतिष्ठापनमन्त्रेण स्थापयेत् तां सरस्वतीम् ॥१२॥

ॐ अमले! विमले! सर्वज्ञे! विभावरि! वागीश्वरि! ज्वलद्दीधिति! स्वाहा प्रतिष्ठापनमन्त्रः॥

अर्चयेत् परया भक्त्या गन्धपुष्पाक्षतादिभिः।
विनयादिनमोऽन्तेन मन्त्रेण श्रीसरस्वतीम् ॥१३॥

ॐ सरस्वती नमः।

विनयं मायाहरिवल्लभाक्षरं तत्पुरो वदद्वितयम्।
वाग्वादिनी च होमं वागीशा मूलमन्त्रोऽयम् ॥१४॥

ॐ ह्रीं श्रीं वद वद वाग्वादिनी स्वाहा। मूलमन्त्रः।

यो जपेज्जातिकापुष्पैर्भानुसङ्ख्यसहस्रकैः।
दशांशहोमसंयुक्तं स स्याद् वागीश्वरीसमः ॥१५॥
महिषाक्षगुग्गुलेन प्रतिनिर्मितचणकमानसद्गुटिकाः।
होमस्त्रिमधुरयुक्तैर्वरदाऽत्र सरस्वती भवति ॥१६॥
देहशिरोदृग्नासास्यमुखाननसुकण्ठहृन्नाभि।
पादेषु मूलमन्त्रबीजद्वयवर्जितं ध्यायेत् ॥१७॥
श्वेताम्बरां चतुर्भुजां सरोजविष्टरस्थिताम्।
सरस्वतीं वरप्रदामहर्निशं नमाम्यहम् ॥१८॥
साङ्ख्यभौतिकचार्वाकमीमांसकदिगम्बराः।
सौगतास्तेऽपि देवि! त्वां ध्यायन्ति ज्ञानहेतवे ॥१९॥

भानूदये तिमिरमेति यथा विनाशं
क्ष्वेडं विनश्यति यथा गरुडागमेन ।
तद्वत् समस्तदुरितं चिरसञ्चितं मे
देवि ! त्वदीयमुखदर्पणदर्शनेन ॥२०॥
गमकत्वं कवित्वं च वाग्मित्वं वादिता तथा ।
भारति ! त्वत्प्रसादेन जायते भुवने नृणाम् ॥२१॥

## सरस्वतीस्तवः ।

जपकाले नमःशब्दं मन्त्रस्यान्ते नियोजयेत् ।
होमकाले पुनः स्वाहा मन्त्रस्यायं सदा क्रमः ॥२२॥
सवृन्तकं समादाय प्रसूनं ज्ञानमुद्रया ।
मन्त्रमुच्चार्य सन्मन्त्री श्वासं मुञ्चीत रेचनात् ॥२३॥
वाग्भवं कामराजं च सान्तं पान्तेन संयुतम् ।
विन्द्वोङ्कारयुतं मन्त्रं ग्वे पुरं तन्निगद्यते ॥२४॥
ऐं क्लीं द्रूं ह्सौं नमः ।
श्वेतैः पुष्पैर्भवेद् वाचा शोणितैर्वश्यमोहनम् ।
लक्षजापेन संसिद्धिं याति मन्त्रं सहोमतः ॥२५॥
ऐं क्लीं ह्सौं मन्त्रः ।
उष्माणामादिमं बीजं ब्रह्मबीजसमन्वितम् ।
लान्तं रान्तेन संयुक्तं मायावाग्भवबीजकम् ॥२६॥
स्क्लौं ह्रीं ऐं सरस्वत्यै नमः ।
मन्त्रं जपति यो नित्यं जातिकाकुसुमैर्वरैः ।
रविसङ्ख्यसहस्राणि स स्याद् वाचस्पतेः समः ॥२७॥
सप्त लक्षाणि यो विद्यां मायामेकाक्षरीं जपेत् ।
तस्य सिद्ध्यति वागीशा पुष्पैरिन्दुसमप्रभैः ॥२८॥
ह्रीं क्ष्मं वं ह्वो जलभूबीजैर्नाम यत् तत् स्वरैर्वृतम् ।
बाह्ये द्विषड्दलाम्भोजपत्रेषु सकलं नभः ॥२९॥
सान्तं सम्पुटमालिख्य इवीं हंसैर्वलयीकृतम् ।
अम्भःपुरपुटोपेतं सद्भूर्जे चन्दनादिभिः ॥३०॥
सिक्थकेन समावेष्ट्य जलपूर्णघटे क्षिपेत् ।
दाहस्योपशमं कुर्याद् ग्रहपीडां निवारयेत् ॥३१॥ शान्तिकयन्त्रम् ।
नाम त्रिमूर्त्तिमध्यस्थं क्लीं क्रौं दिक्षु विदिक्षु च ।

बहिर्वह्निपुटं कोष्ठेष्वों जम्भे ! होममालिखेत् ॥३२॥
मोहापि च तथा ग्रान्तब्राह्मब्लूँकारमास्थितम् ।
ॐ ब्लैं धात्रे वषट् वेष्ट्यान्तर्बाह्ये क्षितिमण्डलम् ॥३३॥
फलके भूर्यपत्रे वा लिखित्वा कुङ्कुमादिभिः ।
पूजयेद् यः सदा यन्त्रं सर्वं तस्य वशं जगत् ॥३४॥

वश्ययन्त्रम् ॥

मान्तं नामयुतं द्विरेफसहितं बाह्ये कलावेष्टितं
तद्बाह्येऽग्निमरुत्परं विलिखितं ताम्बूलपत्रोदरे ।
लेखिन्यान्यमृताक्षकणकभुवार्कक्षीरराजीप्लुतं
तप्तं दीपशिखाग्निना त्रिदिवसे रम्भामपीहानयेत् ॥३५॥
रेफद्वयेन सहितं लिख मान्तयुग्मं षष्ठस्वरस्वरचतुर्दशबिन्दुयुक्तम् ।
बाह्ये त्रिवह्निपुरमालिख चैतदन्तः पाशत्रिमूर्त्तिगजवश्यकरैश्च वेष्ट्यम् ॥३६॥
पुरं हिरण्यरेतसो विलिख्य तद्बहिः पुनः ।
करोतु मन्त्रवेष्टनं ततोऽग्निवायुमण्डलम् ॥३७॥

तद्यथा—

ॐ आँ ह्रीं क्रों म्ल्व्यंग्यूं जम्भे ! मोहे ! ररर घे घे सर्वाङ्गं
दह दह देवदत्ताया हृदयं मम वश्यमानय ह्रीं यं वौषट् ॥
तं ताम्बूलरसेन हेमगरलब्रह्मादिभिः संयुजा
प्रेतावासनकर्परैः प्रविलिखेत् ताम्रस्य पत्रेऽथवा ।
अङ्गारैः खदिरोद्भवैः प्रतिदिनं सन्ध्यासु सन्तापयेत्
सप्ताहात् वनितां मनोऽभिलषितां मन्त्री हठादानयेत् ॥३८॥
संलिख्याष्टदलाब्जमध्यगगनं कामाधिपेनावृतं
तत्पत्रेषु तदक्षरं प्रविलिखेद् पत्राग्रतोऽग्न्यक्षरम् ।
ब्लैं पत्रान्तरपूरितं वलयितं मन्त्रेण वामादिना
द्रां द्रीं ब्लूं स्मरवीजहोमसहितैनैतज्जगत्क्षोभणम् ॥३९॥
जाप्यः सहस्रदशकं सुभगायोनावलक्तकं धृत्वा ।
विद्या नवाक्षरीया तयापसव्येन हस्तेन ॥४०॥

ॐ ह्रीं आँ क्रों ह्रीं क्ष्वीं ह्रीं क्लीं ब्लूँ द्रां द्रीं
ॐ कामिनी रञ्जय होममन्त्रं यस्या लिखेच्चात्मकरेऽपसव्ये ।
सन्दर्शयेत् सा स्मरबाणभिन्नाऽद्भुतं भवत्यत्र किमस्ति चित्रम् ॥४१॥
विनयं चले चलचित्ते रतौ मुञ्चयुग्मं होमम् ।
द्रावयत्यबलां बलाल्लक्षेणैकेन जाप्येन ॥४२॥

सिन्दूरसन्निभं पिण्डमैवलक्षरनिर्मितम् ।
ध्यातं सबिन्दुकं योन्यां द्रावयत्यबलां बलात् ॥४३॥
सम्पिप्रोतत्तिकामूलं जलशौचं स्वरेतसा ।
भर्तुर्ददाति या पण्ढं सान्यां प्रतिकरोति तम् ॥४४॥
मर्दयेत् पिप्पलाकामं सूतकेन कुरुण्टिका ।
क्षीरेण मधुना सार्धं लिङ्गलेपोऽबलास्मरः ॥४५॥
मधुकर्पूरसौभाग्यं पिप्पिलीकामसंयुतम् ।
द्रावयत्यङ्गनादर्पं लिङ्गलेपनमात्रतः ॥४६॥
एरण्डतेलं फणिकृत्तियुक्तं सन्मातुलिङ्गस्य च बीजमिश्रम् ।
धूपं च दद्याद्रतिहर्म्यमध्ये स्त्रीमोहनं ज्ञानविदो वदन्ति ॥४७॥
क्लींकाररुद्धं लिख कूटपिण्डं नामान्वितं द्वादशपत्रपद्मम् ।
ब्रह्मादिहोमान्तपदेन युक्ताः पूर्वादिपत्रेषु जयादिदेव्यः ॥४८॥

ॐ जये स्वाहा । ॐ विजये स्वाहा । ॐ अजिते स्वाहा । ॐ अपराजिते स्वाहा ।

जभमहपिण्डसमेता जम्भाद्याः प्रणवपूर्वहोमान्ताः ।
विदिग्दलेषु योज्याः स्मरबीजं शेषपत्रेषु ॥४९॥

ॐज्म्ल्व्र्यूं जम्भे ! स्वाहा ! ॐम्म्ल्व्र्यूं मोहे ! स्वाहा । ॐस्म्ल्व्र्यूं स्तम्भे ! स्वाहा ।
ॐह्म्ल्व्र्यूं स्तम्भिनी स्वाहा । शेषपत्रेषु क्लीं ।

त्रिधा मायया वेष्टितं क्रोंनिरुद्धं लिखेद् रोचनाकुङ्कुमैर्भूर्यपत्रे ।
मधुस्थापितं वेष्टितं रक्तसूत्रैर्वशं याति रम्भापि सप्ताहमध्ये ॥५०॥

क्लींरञ्जिका ॥१॥

यन्त्रं तदेव त्रिलिखेद् वनिताकपाले गोरोचनादिभिरनङ्गपदे त्रिमूर्त्तिम् ।
सन्ध्यासु सप्तदिवसं खदिराग्नितप्तं देवाङ्गनामपि समानयतीह नाकात् ॥५१॥

ह्रींरञ्जिका ॥२॥

स्थाने त्रिमूर्तेर्लिख विश्वबीजं कस्तूरिकाद्यैर्वरभूर्जपत्रे ।
बाह्ये वृतं रूपपतङ्गवेष्ट्यं सीमन्तिनीनां विदधाति मोहम् ॥५२॥

ईंरञ्जिका । ३

विष्णोः पदे समभियोजय रोषबीजं मानुष्यचर्मणि विषेण सलोहितेन ।
कुण्डे प्रपूर्य खदिरज्वलनेन तप्तं शत्रोरकालमरणं कुरुतेऽविकल्पात् ॥५३॥

हूंरञ्जिका । ४

भूर्जेऽरुणेन सविषेण मकारबीजं हूं स्थानके लिख मलीमलमूत्रवेष्ट्यम् ।
मृत्पात्रिकोदरगतं निहितं श्मशाने दुष्टस्य निग्रहमिदं विदधाति यन्त्रम् ॥५४॥

यन्त्रं बिभीतफलके विषलोहिताभ्यां
मः स्थानकेऽग्निमरुतोः प्रविलिख्य बीजम्
संवेष्ट्य वाजिमहिषोद्भवकेशपाशैः
प्रेतालयस्थमचिरेण करोति वैरम् ॥५५॥ यैः ६
अननपवनबीजे वायुबीजं समृष्टिं, चितिजगरलकाकामध्ययुक्तैर्विलिख्यम् ।
गगनगमनपक्षिणोद्यखण्डे ध्वजानां पवनहतमरात्युच्चाटनं तद् विदध्यात् ॥५६॥ यः ७
स्वल्पेन मानुषभुवा नृकपालयुग्मे पूर्वोदिताक्षरपदे विलिखेत् खबीजम् ।
क्ष्वेडारुणेन मृतकालयभस्मपूर्णं प्रोच्चाटयेदरिकुलं निहितं श्मशाने ॥५७॥
हः ८
प्रेताम्बरे व्योमपदे विलेख्यं फडक्षरं निम्बनृपार्कक्षीरैः ।
सिद्धालये तन्निखनेत् क्षपायां बम्भ्रम्यते काक इवारिरुर्व्याम् ॥५८॥
फट् ९
कूटं फडक्षरपदे लिख कुङ्कुमाद्यैर्भूर्जे वषट्पदयुतं मठितं त्रिलोहैः ।
पुंसां स्वबाहुकटिकेशगले धृतानां सौभाग्यकृद् युवतिभूपतिवश्यकारि ॥५९॥
क्ष वषट् । १०
क्षस्थानकेऽथ लिखितं हरितालकाद्यैरिन्द्रं शिलातलपुटे क्षितिमण्डलस्थम् ।
सूत्रेण तत् परिवृतं विधृतं धरायां कुर्यात् प्रसूतिमुखदिव्यगतेर्निरोधम् ॥६०॥
लं ११ रञ्जिका द्वादशयन्त्रोद्धारः ॥
अजपुटे लिखेन्नाम ग्लौं क्षं पूर्णेन्दुवेष्टितम् ।
वज्राष्टकपरिच्छिन्नमग्रान्तब्राह्मणाक्षरम् ॥६१॥
तद्बाह्ये भूपुरं लेख्यं शिलायां तालकादिना ।
कोपादिस्तम्भनं कुर्यात् पीतपुष्पैः सुपूजितम् ॥६२॥
ॐ ग्लौं क्षं ठ लं स्वाहा ।
संलिख्य नामाष्टदलाब्जमध्ये मायावृतं षोडशसत्कलाभिः ।
क्लीं ब्लूं तथा द्रामथ योजयित्वा दिक्स्थेषु पत्रेषु सदा क्रमेण ॥६३॥
होमं लिखेदङ्कुशबीजमुच्चैः किञ्चान्यपत्रेषु बहिस्त्रिमूर्त्तिः ।
भूर्जे हिमाद्यैर्विधृतं स्वकण्ठे सौभाग्यवृद्धिं कुरुतेऽङ्गनानाम् ॥६४॥
सौभाग्यरक्षा ।
क्षजभमहरेफपिण्डैः पाशाङ्कुशबाणरञ्जिकायुक्तैः ।
प्रणवाद्यैः कुरु मन्त्रिन् । षट् कर्माण्युदयमवगम्य ॥६५॥
ॐक्ष्म्ल्व्र्यूं ज्म्ल्व्र्यूं भ्म्ल्व्र्यूं म्म्ल्व्र्यूं हम्ल्व्र्यूं ड्म्ल्व्र्यूं आँ क्रों ह्रीं क्लीं ब्लूं
द्रीं द्रीं संवौषट् त्रिभुवने सारः । सहस्र १२ जपः । दशांशेन होमः ॥

वश्यविद्वेषणोच्चाटे पूर्वमध्यापराह्णके ।
सन्ध्यार्धरात्ररात्र्यन्ते मारणे शान्तिपौष्टिके ॥६६॥
वषड् वश्ये फडुच्चाटे हुं द्वेषे पौष्टिकं स्वधा ।
संवौषडाकर्षणे स्वाहा शान्तिकेऽप्यथ मारणे ॥६७॥
पीतारुणासितैः पुष्पैः स्तम्भनाकृष्टिमारणे ।
शान्तिपौष्टिकयोः श्वेतैर्जपेन्मन्त्रं प्रयत्नतः ॥६८॥
कुर्याद् हस्तेन वामेन वश्याकर्षणमोहनम् ।
शेषकर्माणि होमं च दक्षिणेन विचक्षणः ॥६९॥
उदधीन्द्रमारुतान्तकनैर्ऋतकुबेरदिक्षु कृतवदनः ।
शान्तिकरोधोच्चाटनमारणसम्पुष्टिजनवश्ये ॥७०॥
शान्तिपुष्टौ भवेद्धोमो दूर्वाश्रीखण्डतण्डुलैः ।
महिषाक्षरक्ताम्भोजैः पुरक्षोभो निगद्यते ॥७१॥
करवीरारुणैः पुष्पैरङ्गनाक्षोभमुत्तमम् ।
होमैः क्रमुकपत्राणां राजवश्यं विधीयते ॥७२॥
गृहधूमनिम्बपत्रैर्द्विजपक्षैर्लवणराजिकायुक्तैः ।
हुतैस्त्रिसन्ध्यविहितैर्विद्वेषो भवति मनुजानाम् ॥७३॥
प्रेतालयास्थिखण्डैर्बिभीतकाङ्गारसमधूमयुतैः ।
सप्ताहविहितहोमैररातिमरणं बुधैर्दिष्टम् ॥७४॥
नैवेद्यदीपादिभिरिन्द्रसङ्ख्यैः सुवर्णपादावभिपूज्य देव्याः ।
स्ववामदेशस्थितसव्यहस्तो मन्त्री प्रदद्यात् सहिरण्यमम्भः ॥७५॥
विद्या मयेयं भवते प्रदत्ता त्वया न देयान्यदृशे जनाय ।
तच् श्रावयित्वा गुरुदेवतानामग्रेषु विद्या विधिना प्रदेया ॥७६॥

आज्ञाक्रमः

कृतिना मल्लिषेणेन जिनसेनस्य सूनुना ।
रचितो भारतीकल्पः शिष्टलोकमनोहरः ॥७७॥
सूर्याचन्द्रमसौ यावन्मेदिनीभूधरार्णवाः ।
तावत् सरस्वतीकल्पः स्थेयाच्चेतसि धीमताम् ॥७८॥

श्रीमल्लिषेणसारस्वतविधिरयम्—

प्रथमः कृतस्नानः समौनः प्रातः श्रीभारत्याः पूजां कृत्वा विहितार्कक्षारोदनः ततोऽनन्तरं सन्ध्यासमये पुनः स्नात्वा सर्वव्यापारवर्जितो भूत्वा शुचिः श्वेतं वस्तु ध्यायेत् ।

ॐ ह्र भूरिसी भूतधात्री भूमिशुद्धिं कुरु कुरु स्वाहा ।

भूमिशुद्धिमन्त्रः ।

ॐ ह्रीं वां नमो अरिहंताणं अशुचिः शुचीभवामि स्वाहा।

आत्मशुद्धिमन्त्रः॥

ॐ ह्रीं वद वद वाग्वादिनी ह्रीं हृदयाय नमः। ह्रीं शिरसे नमः।
हूँ शिखायै नमः। ह्रैं कवचाय नमः। ह्रः अस्त्राय नमः।

इति सकलीकरणं विधातव्यम्।

ततोऽमृतमन्त्रेण सरस्वत्याः पूजा क्रियते।

ॐ अमृते! अमृतोद्भवे! अमृतवर्षिणि! अमृतवाहिनि! अमृतं श्रावय श्रावय ऐँ ऐँ क्लीँ क्लीँ ब्लूं [ब्लूं] द्रां द्रीं द्रावय द्रावय स्वाहा।

अथ मण्डलस्थापना विधीयते—

ॐ ह्रीं महापद्मयशसे योगपीठाय नमः पीठस्थापनमन्त्रः॥

ॐ ह्रीं अमले! विमले! सर्वज्ञे! विभावरि! वागीश्वरि! कलम्बपुष्पिणि स्वाहा।

प्रतिष्ठामन्त्रः

ततो मण्डलपूजा विधीयते। ॐ सरस्वत्यै नमः। पूजामन्त्रः।

मण्डलाग्रेऽग्निकुण्डं समचतुरस्रं विधीयते अङ्गुल १६ प्रमाणम्। ततो मूलमन्त्रेण जाप १२००० । ततो दशांशेन होमः। गुग्गुल-मधु-घृत-पुष्पसहितगुटिका चनकप्रमाणा १२००० होमः पिप्पलपलाशशमिसमिधैः। मूलमन्त्रेण करजापलक्ष १००००० । ततः सिद्धिः।

## परिशिष्ट १२

### श्रीबप्पभट्टिसूरिकृतं

# श्रीसरस्वतीकल्पः ।

कन्दात् कुण्डलिनी ! त्वदीयवपुषो निर्गत्य तन्तुत्विषा
किञ्चिच्चुम्बितमम्बुजं शतदलं त्वद्ब्रह्मरन्ध्रादयः ।
यश्चन्द्रद्युति ! चिन्तयत्यविरतं भूयोऽस्य भूमण्डले
तन्मन्ये कविचक्रवर्तिपदवी छत्रच्छलाद् वल्गति ॥१॥
यस्त्वद्वक्त्रमृगाङ्कमण्डलमिलत्कान्तिप्रतानोच्छल-
च्चञ्चच्चन्द्रकचक्रचित्रितककुप्कन्याकुल ! ध्यायति ।
वाणि ! वाणिविलासभङ्गुरपदप्रागल्भ्यशृङ्गारिणी
नृत्यत्युन्मदनर्तकीव सरसं तद्वक्त्ररङ्गाङ्गणे ॥२॥
देवि ! त्वद्धृतचन्द्रकान्तकरकश्च्योतत्सुधानिर्झर-
स्नानानन्दतरङ्गितं पिबति यः पीयूषधाराधरम् ।
तारालंकृतचन्द्रशक्तिकुहरेणाकण्ठमुत्कण्ठितो
वक्त्रेणोद्गिरतीव तं पुनरसौ वाणीविलासच्छलात् ॥३॥
क्षुभ्यत्क्षीरसमुद्रनिर्गतमहाशेषाहिलोलत्फणा-
पत्रोन्निद्रसितारविन्दकुहरैश्चन्द्रस्फुरत्कर्णिकैः ।
देवि ! त्वां च निजं च पश्यति वपुर्यः कान्तिभिन्नान्तरं
ब्राह्मि ! ब्रह्मपदस्य वल्गति वचः प्रागल्भदुग्धाम्बुधेः ॥४॥
नाभीपाण्डुरपुण्डरीककुहराद् हृत्पुण्डरीके गलत्-
पीयूषद्रववर्षिणि ! प्रविशतीं त्वां मातृकामालिनीम् ।
दृष्ट्वा भारति ! भारती प्रभवति प्रायेण पुंसो यथा
निर्ग्रन्थीनि शतान्यपि ग्रथयति ग्रन्थायुतानां नरः ॥५॥

त्वां मुक्तामयसर्वभूषणगणां शुक्लाम्बराडम्बरां
गौरीं गौरिसुधातरङ्गधवलामालोक्य हृत्पङ्कजे ।
वीणापुस्तकमौक्तिकाक्षवलयश्वेताब्जवल्गत्करां
न स्यात् कः स्फुटवृत्तचक्ररचनाचातुर्यचिन्तामणिः ॥६॥

पश्येत् त्वां तनुमिन्दुमण्डलगतां त्वां चाभितो मण्डितां
यो ब्रह्माण्डकरण्डपिण्डितसुधाडिण्डीरपिण्डैरिव ।
स्वच्छन्दोद्गतगद्यपद्यलहरीलीलाविलासामृतैः
सानन्दास्तमुपाचरन्ति कवयश्चन्द्रं चकोरा इव ॥७॥

तद्वेदान्तशिरस्तदोङ्कृतिमुखं तत् तत्कलालोचनं
तत्तद्वेदभुजं तदात्महृदयं तद्गद्यपद्याङ्घ्रि च ।
यस्त्वद्वर्ष्म विभावयत्यविरतं वाग्देवते ! वाङ्मयं
शब्दब्रह्मणि निष्ठितः स परमब्रह्मैकतामश्नुते ॥८॥

वाग्बीजं स्मरबीजवेष्टितमतो ज्योतिःकला तद्बहि-
श्चाष्टद्वादशषोडशद्विगुणितद्व्यष्टाब्जपत्रान्वितम् ।
तद्बीजाक्षरकादिवर्णरचितान्यग्रे दलस्यान्तरे
हंसः कूटयुतं भवेदवितथं यन्त्रं तु सारस्वतम् ॥९॥

ओमैं श्रीमनु सौं ततोऽपि च पुनः क्लीं वदौ वाग्वादि-
न्येतस्मादपि ह्रीं ततोऽपि च सरस्वत्यै नमोऽदः पदम् ।
अश्रान्तं निजभक्तिशक्तिवशतो यो ध्यायति प्रस्फुटं
बुद्धिज्ञानविचारसारसहितः स्याद् देव्यसौ साम्प्रतम् ॥१०॥

स्मृत्वा मन्त्रं सहस्रच्छदकमलमनुध्याय नाभीह्रदोत्थं
श्वेतस्निग्धोर्ध्वनालं हृदि च विकचतां प्राप्य निर्यातमास्यात् ।
तन्मध्ये चोर्ध्वरूपामभयदवरदां पुस्तकाम्भोजपाणिं
वाग्देवीं त्वन्मुखाच्च स्वमुखमनुगतां चिन्तयेदक्षरालीम् ॥११॥

किमिह बहुविकल्पैर्जल्पितैर्यस्य कण्ठे
भवति विमलवृत्तस्थूलमुक्तावलीयम् ।
भवति भवति ! भाषे ! भव्यभाषाविशेषै-
र्मधुरमधुसमृद्धस्तस्य वाचां विलासः ॥१२॥

अथ मन्त्रक्रमो लिख्यते—ॐ सरस्वत्यै नमः । अर्चनमन्त्रः ।

ॐ भूरिसी भूतधात्री भूमिशुद्धिं कुरु कुरु स्वाहा । भूमिशुद्धिमन्त्रः । ॐ विमले ! विमलजले ! सर्वतीर्थजले ! पां वां झ्वीं झ्वीं अशुचिः शुचीभवामि स्वाहा । आत्मशुद्धिमन्त्रः ।

ॐ वद वद वाग्वादिनी ह्रीं शिरसे नमः ।
ॐ महापद्मयशसे ह्रीं योगपीठाय नमः ।
ॐ वद वद वाग्वादिनी ह्रूँ शिखायै वषट् ।
ॐ वद वद वाग्वादिनी नेत्रद्वयाय वषट् ।
ॐ वद वद वाग्वादिनी कवचाय हुं ।
ॐ वद वद वाग्वादिनि ! अस्त्राय फट् । इति सकलीकरणम् ।

ॐ अमृते ! अमृतोद्भवे ! अमृतं स्रावय स्रावय ऐं क्लीं ब्लूँ द्रां द्रीं द्रावय द्रावय स्वाहा ।

योे जपेज्जातिकापुष्पैर्भानुसंख्यसहस्रकम् ।
दशांशहोमसंयुक्तं स स्याद् वागीश्वरीसमः ॥१॥
महिषाख्यगुग्गुलेन प्रविनिर्मितचनकमात्रसद्गुटिकाः ।
होमस्त्रिमधुरयुक्तः तुष्टा देवी वरं दत्ते ॥२॥

इति शुद्धं श्रीसारस्वतम् ।

अथैतत्पीठक्रमो लिख्यते—

पद्मोपरि पद्मासनस्था भगवतीमूर्तिः करचतुष्टयधृतवरपद्मा शिरसि षट्कोणाकारमुकुटभ्राजिता नाभौ चतुर्दलपद्मधारिणी लेख्या । ततो नाभिपद्मे कर्णिकायां ॐकारं लिखेत्, पूर्वादिचतुर्दलेषु न १ मः २ सि ३ द्धं ४ इत्यक्षराणि लेख्यानि । अधस्तनदक्षिणकरे षोडशदलं पद्मं कृत्वा तत्र कर्णिकायां ऐंकारं दत्त्वा पूर्वादिषोडषदलेषु क्रमेण षोडश स्वरान् लिखेत्, अधस्तनवामकरे पञ्चविंशतिदलं पद्मं कृत्वा तत्कर्णिकायां श्रींकारं विलिख्य पूर्वादिपञ्चविंशतिदलेषु क्रमेण क्रमात् कादयो वर्गवर्णाः पञ्चविंशतिर्लेख्याः । अथवोपरितनदक्षिणकरे अष्टदलं पद्मं कृत्वा तत्र कर्णिकायां सौं इति बीजं लिखित्वा पूर्वादिदलेषु य-र-ल-व-श-ष-स-ह इत्यष्टौ वर्णा लेख्याः । उपरितनवामकरेऽप्यष्टदलं पद्मं कृत्वा तत्कर्णिकायां क्लीं इति बीजं दत्त्वा पूर्वाद्यष्टदलेषु व १ द २ व ३ द ४ वा ५ ग्वा ६ दि ७ नि ८ इति वर्णा लेख्याः । शिरःषट्कोणे गर्भे ह्रींकारं लिखित्वा पूर्वादिकोणषट्के स १ र २ स्व ३ त्यै ४ न ५ मः ६ एवमक्षरषट्कं लेख्यम् । सर्वं शुक्लध्यानेन षट्चक्रस्थापनं विधाय ध्येयम् ।

मूलमन्त्रश्चायम्-ॐ ऐं श्रीं सौं क्लीं वद वद वाग्वादिनी ह्रीं सरस्वत्यै नमः। इति पाठशुद्धया मन्त्रं स्मरेत्, करजापो लक्षं जातिपुष्पैः सहस्राः १२ जापः। गुग्गुलगुटी १२०० त्रिमधुरमिश्राः कृत्वा होमः कार्यः, आश्विने चैत्रे वा नवरात्रेषु कार्यं दीपोत्सवामावास्यायां वा ततः सिद्धिः॥

आम्नायान्तरेण यन्त्रं लिख्यते, यथा-

वृत्तं मण्डलं कृत्वा परितः पूर्वादौ चत्वारि दलानि, तत्र पूर्वदले ॐ ह्रीं देवतायै नमः १, दक्षिणदले ॐ ह्रीं सरस्वत्यै नमः २, पश्चिमदले ॐ ह्रीं भारत्यै नमः ३, उत्तर दले ॐ ह्रीं कुम्भदेवतायै नमः ४,

तद्बहिरष्टदले, तत्र पूर्वादितः ॐ मोहे यः १, ॐ नन्दे यः २, ॐ भद्रे यः ३, ॐ जये यः ४, ॐ विजये यः ५, ॐ अपराजिते यः ६, ॐ जम्भे यः ७, ॐ स्तम्भे यः ८, इति लेख्यम्। तद्बहिः षोडशदलानि, तत्र-ॐ रोहिण्यै नमः १, ॐ प्रज्ञप्त्यै नमः २, इत्यादिषोडश देवीनामानि लेख्यानि, तद्बहिः पुनरष्टदलानि, पूर्वदले ॐ ह्रीं इन्द्राय नमः १ क्रमेण ॐ ह्रीं अग्नये नमः २, ॐ ह्रीं यमाय नमः ३, ॐ ह्रीं नैर्ऋतये नमः ४, ॐ ह्रीं वरुणाय नमः ५, ॐ ह्रीं वायवे नमः ६, ॐ ह्रीं कुबेरायनमः ७, ॐ ह्रीं ईशानाय नमः ८ इति लिखेत्। ततो मायया त्रिरभिवेष्ट्य क्रौंकारेण निरुध्य परितः पृथ्वीमण्डलं कोणेषु प्रत्येकं चतुर्वज्राङ्कितं कृत्वा मध्यकोणेषु लं प्रत्येकं लिखेत्।

इति यन्त्रविधिः।

यन्त्रमध्ये मन्त्रो भगवतीमूर्तिर्वा लेख्या।

मन्त्रश्चायम्- ॐ ऐं ह्रीं श्रीं वद वद वाग्वादिनि! भगवति! सरस्वति! ह्रीं नमः। एतन्मन्त्रस्य पूर्वसेवा करजप्यः लक्षं जातीपुष्पजातिश्च १२००० ततो दशांशहोमो घृतगुग्गुलमधुखण्डैर्जपितपुष्पमध्यात् १२००० पुष्पाणि गृहीत्वा गुटिका संचूर्ण्यते। मन्त्रदानं दीपोत्सव एव गर्भे मन्त्रो मूर्त्तिर्वा भगवत्या लिख्यते यन्त्रस्योभयथापि कार्यम्। जापे नमः। होमे स्वाहा।

## इति श्रीबप्पभट्टिसूरेराम्नायः।

अथ पुनः श्रीबप्पभट्टिसूरिविद्याक्रमे महापीठोद्धारो लिख्यते-ऐं क्लीं ह्सौं: पूर्ववक्त्राय नमः, १ ऐं क्लीं ह्सौं: दक्षिणवक्त्राय नमः २, ऐं क्लीं ह्सौं: पश्चिमवक्त्राय नमः ३, ऐं क्लीं ह्सौं: उत्तरवक्त्राय नमः ४, ऐं क्लीं ह्सौं: ऊर्ध्ववक्त्राय नमः ५— वक्त्रपञ्चकम्।

ऐं हृदि कमलायै हृदयाय नमः १, ऐं शिरः कुलायै नमः, ऐं शिरसे स्वाहा २, ऐं शिखकुलाये शिखायै वौषट् ३, ऐं कवचकुलाय कवचाय नमः ४, ऐं नेत्रायै नेत्र-

ऋयाय वषट् ५, स्राकुलयै अस्त्राय फट् ६,अ ऐं अङ्गसकलीकरणम् । इति करन्यासः, अङ्गन्यासः, पात्रपूजा, आत्मपूजा, मण्डलपूजा, ततः आह्वानं स्थापनम् ।

सन्निधानं सन्निरोधमुद्रा–दर्शनयोनिमुद्रा–गोस्तनमुद्रा–महामुद्रा इति मुद्रात्रयं दर्शयेत्, ततो जापः कार्यः । यथाशक्त्या करजापेन लक्षजापः । पुष्पजापे चतुर्विंशतिसहस्राणि दशांशेन होमः । पूजापुष्पाणि कुट्टयित्वा गुटिका घृतेन घोलयित्वा होमयेत्, त्रिकोणकुण्डे हस्तमात्रविस्तारे खाते च ततः सिद्धयति ।

ऐं क्लीं ह्सौँ वद वद वाग्वादिनि ! ह्रीं नमः । मूलमन्त्रः ॥

वाग्भवं प्रथमं बीजं द्वितीयं कुसुमायुधम् ।
तृतीयं जीवसंज्ञं तु सिद्धसारस्वतं पुनः ॥
वाग्बीजं स्मरबीजवेष्टितमतो ज्योतिःकला तद्बहि-
रष्टद्वादशषोडशद्विगुणितंद्वयष्टाब्जपत्रान्वितम् ।
तद्बीजाक्षरकादिवर्णरचितान्यग्रे दलस्यान्तरे
हंसः कूटयुतं भवेदवितथं यन्त्रं तु सारस्वतम् ॥
स्मृत्वा मन्त्रं सहस्रच्छदकमलमनुध्याय नाभीहृदोत्थं
चेतः स्निग्धोदनालं हृदि च विकचतां प्राप्य निर्यातमास्यात् ।
तन्मध्ये चोर्ध्वरूपामभयदवरदापुस्तिकाम्भोजपाणिं
वाग्देवीं त्वन्मुखाच्च स्वमुखमनुगतां चिन्तयेदक्षरालीम् ॥

ततो मध्ये साध्यनाम ततोऽष्टदलेषु अष्टौ पिठाक्षराणि क्म्ल्व्र्यूं च्म्ल्व्र्यूं त्म्ल्व्र्यूं ट्म्ल्व्र्यूं प्म्ल्व्र्यूं य्म्ल्व्र्यूं श्म्ल्व्र्यूं ह्म्ल्व्र्यूं इति

ततो द्वादशदलाक्षराणि यथा कं कः, चं चः, टं टः, तं तः, पं पः, यं यः, रं रः, लं लः, वं वः, शं शः, षं षः, सं सः इति ।

ह्रस्वास्तु भैरवाः प्रोक्ता दीर्घस्वरेण मातरः ।
असिताङ्गो रुरुश्चण्डः क्रोध अष्टौ हि भैरवाः ॥

ब्रह्माणी माहेश्वरी कौमारी वाराही वैष्णवी चामुण्डा चण्डिका महालक्ष्मीः इत्यष्टौ मातरः। एवं षोडशदलेषु बीजाक्षराणि यथा–अह्सौँ आह्सौँ इह्सौँ ईह्सौँ उह्सौँ ऊह्सौँ ऋह्सौँ ॠह्सौँ लृह्सौँ ॡह्सौँ एह्सौँ ऐह्सौँ ओह्सौँ औह्सौँ अंह्सौँ अःह्सौँ। ततोऽपि द्विकाधिकत्रिंशद्दलानि–कह्सौँ खह्सौँ गह्सौँ घह्सौँ ङह्सौँ चह्सौँ छह्सौँ जह्सौँ झह्सौँ ञह्सौँ टह्सौँ ठह्सौँ डह्सौँ ढह्सौँ णह्सौँ तह्सौँ थह्सौँ दह्सौँ धह्सौँ नह्सौँ पह्सौँ फह्सौँ बह्सौँ भह्सौँ मह्सौँ यह्सौँ रह्सौँ लह्सौँ वह्सौँ शह्सौँ षह्सौँ सह्सौँ ३२

प्रत्यन्तरे तु अस्मिन् द्वात्रिंशद्दलकोष्ठेषु ककारादिवर्णानामग्रे बीजाक्षरलेखने पाठान्तरं दृश्यते तदपि लिख्यते । यथा—

कद्र्यैँः खद्र्यैँः गद्र्यैँः घद्र्यैँः ङद्र्यैँः चद्र्यैँः छद्र्यैँः जद्र्यैँः झद्र्यैँः ञद्र्यैँः टद्र्यैँः ठद्र्यैंः डद्र्यैंः ढद्र्यैंः णद्र्यैंः तद्र्यैंः थद्र्यैंः दद्र्यैंः धद्र्यैंः नद्र्यैंः पद्र्यैंः फद्र्यैंः बद्र्यैंः भद्र्यैंः मद्र्यैं यद्र्यैंः रद्र्यैंः लद्र्यैंः वद्र्यैंः शद्र्यैंः षद्र्यैंः सद्र्यैंः ३२ इति प्रत्यन्तरपाठान्तरक्रमः ।

ततश्चतुःषष्टिदलानि आलाई ईवाई ऊशाई ऋषाई ऌसाई ऐहाई औळाई अंक्षाई १।

आवाई ईशाई ऊषाई ऋसाई ऌहाई ऐळाई औक्षाई अंलाई २ आशाई ईषाई ऊसाई ऋहाई ऌळाई ऐक्षाई औलाई अंवाई ३

आषाई ईसाई ऊहाई ऋळाई ऌक्षाई ऐलाई औवाई अंशाई ४
आसाई ईहाई ऊळाई ऋक्षाई ललाई ऐवाई औशाई अंषाई ५
आहाई ईळाई ऊक्षाई ऋलाई लवाई ऐशाई औषाई अंसाई ६
आळाई ईक्षाई ऊलाई ऋवाई लशाई ऐषाई औसाई अंहाई ७
आक्षाई ईलाई ऊवाई ऋशाई लषाई ऐसाई औहाई अंळाई ८
एवं षष्टिः खीलनानि हलेषु ततोऽष्ट दलानि। दलेषु ऐं ३ दुर्गे ! दुर्गदर्शने नमः।
ऐं ३ चामुण्डे ! चण्डरूपधारिण्यै नमः ।
ऐं ३ जम्भे नमः। ऐं ३ मोहे नमः । ऐं ३ स्तम्भने नमः। ऐं ३ आशापुरायै नमः।
ऐं ३ विद्युज्जिह्वे ! नमः । ऐं ३ कुण्डलिनी नमः।
ऐं ह्रींकारवेष्टितं क्रोंकारनिरुद्धं भूरिसी भूतधात्री भूमिशुद्धिं कुरु कुरु स्वाहा ।
भूमिशुद्धिमन्त्रः ।
ऐं विमले ! विमलजलाय सर्वोदकैः स्नानं कुरु कुरु स्वाहा ।

स्नानमन्त्रः ।

मंतपयारो एसो हयारपुव्वि त्ति सोयमग्गम्मि ।
सो च्चिय सयारपुव्वो विज्ञानेओ कुले होइ ॥
.........जीवं दक्षिणवाचयोगसमन्वितम् ।
सिद्धसारस्वतं बीजं सद्यो वै वचःकारः ॥

शुचिप्रदेशे पटे पट्टे वा श्रीखण्डेन कर्पूरेण वा देव्या मूर्तिं कमलासनस्थां देवीचरणसमीपे योजितकरां स्वमूर्तिं च आलिख्य देवीप्रतिमां चाग्रतो विन्यस्य देवीपूजापूर्वकं यथाशक्ति श्रीखण्डजातीकुसुमसुगन्धधूपफलनैवेद्यजलप्रदीपाक्षतादिभिः साधकः पूजयेत् । स च स्नानकं च स्नानं वा कृत्वा शुचिवेषः समुपविशेत्। ततश्च 'ॐ विमलाय विमलचित्ताय पां वां क्ष्वां ह्रीं स्वाहा' अनेन मन्त्रेण वार ३ शिरः प्रदेशात् चरणौ यावत् हस्ताभ्यां मन्त्रस्नानं कुर्यात् चन्द्रकिरणैर्दुग्धकर्पूरैर्वा आत्मानमभिषिच्यमानं चिन्तयेत्।

'ॐ भूरिसि! भूतधात्री भूमिशुद्धिं कुरु कुरु हुं फट् स्वाहा' अनेन मन्त्रेण वार ३ भूमिशुद्धिं कुर्यात्। ततः-"ॐ ४ एहि एहि वार ४" अनेन मन्त्रेण आह्वानं कुर्यात्। द्रव्यतो भावतश्च देव्याह्वाननं स्थापना च कार्या। ततः क्षि पद्मासने, प नाभिप्रदेशे, ॐ हृदये, स्वा नासिकायाम्, हा शिरःप्रदेशे एभिर्मन्त्रपदैरारोहक्रमेण ततश्च हा ५ ललाटे, स्वा ८ नासिकायाम्, ॐ ८ हृदये, प १३ नाभौ, क्षि ५ पद्मासने एभिरेव मन्त्राक्षरैरात्मरक्षां कुर्यात्, चतुर्दिशं नखच्छोटिकां च शिखाबन्धं विदध्यात्। गुरूपदिष्टध्यानपूर्वकं मूलमन्त्रं जपेत्। मूलमन्त्रस्य सहस्र १२ करजापे ततःपुष्पजापे सहस्र पुष्पजापसत्कानि पुष्पाणि छायाशुष्काणि सञ्चूर्ण्य गुग्गुलेन सह चणकप्रमाणा गुटिकाः कृत्वा दुग्धघृतखण्डमध्यादाकृष्य ध्यानपूर्वं मन्त्रपूर्वं च होमयेत् खदिराङ्गारैः पलाशसमिद्भिश्च वैश्वानरः प्रथमं ज्वलन् कार्यः। पूजानन्तरम्-ॐ यः विसर्जनमन्त्रः लक्षजापे दिननियमो नास्ति, तत्रापि पूर्वविधिना दशांशेन होमः कार्यः, करजापे लक्ष १, पुष्पजापे लक्ष १, होमसहस्र १० उत्तरक्रियायां करजाप लक्ष १ सिद्धिं यावत् साधकः साधयेत्। ब्रह्मचर्यं भूमिशयनं वृक्षशयनं वा। एकवारभोजनं आम्ललवणवर्जं च कुर्यात्। स्वप्नेऽपि वीर्यच्युतौ मूलतो गच्छति, अतोऽनवरतं एलचीप्रभृतिवीर्यापहारकं भक्षयेत्।

होमकुण्डं अङ्गुल १६, विस्तारे अङ्गुल १२॥

अ ॐ स्वाहा कुण्डस्य स्थापना! आ ॐ स्वाहा मृत्तिकासंस्कारः।

इ ॐ स्वाहा जलसंस्कारः। ई ॐ स्वाहा गोमयसंस्कारः।

उ ॐ स्वाहा उभयसंयोगसंस्कारः। ऊ ॐ लिम्पनसंस्कारः

ऋ ॐ स्वाहा दहनसंस्कारः। ॠ ॐ शोषणसंस्कारः।

ऌ ॐ स्वाहा अमृतलावणसंस्कारः। ॡ ॐ स्वाहा मन्त्र पूतसंस्कारः।

ए ॐ इन्द्रासनाय नमः। ऐ ॐ स्वाहा अनलदेवतासनाय नमः।

ओ ॐ यमाय स्वाहा। ओ ॐ नैर्ऋताय स्वाहा।

अं ॐ वरुणाय स्वाहा। अं ॐ वायवे स्वाहा।

अं अः ॐ धनदाय स्वाहा। अं अः ॐ ईशानाय स्वाहा।

ह्लं ॐ कुण्डदेवतायै स्वाहा। क्षं ॐ स्वाहा एवं कुण्डसंस्कारः।

ॐ जातवेदा आगच्छ आगच्छ सर्वाणि कार्याणि साधय साधय साधय स्वाहा। आह्वाननम्।

र ॐ जलेन प्रोक्षणम्। र ॐ अभ्रोक्षणम्।

र ॐ त्रिर्मार्जनम्। र ॐसर्वभस्मीकरणम्।

र ॐ क्रव्यादजिह्वां परिहरामि । दक्षिणदिशि पुष्पं भ्रामयित्वा क्षेपणीयम् ।

अथ वैश्वानररक्षा—

ॐ हृदयाय नमः, ॐ शिरसे स्वाहा, । वैश्वानररक्षा ।

जिह्वा-चतुर्भुज-त्रिनेत्र-पिङ्गलकेश-रक्तवर्ण-तस्य नाभिकमले मन्त्रो न्यसनीयः । होतव्यं द्रव्यं ततस्मै उपतिष्ठते ।

वैश्वानराहूतिः ॐ जातवेदा सप्तजिह्व ! सकलदेवमुख ! स्वधा । वार २१ आहूतिः करणीया । म्ल्र्व्यूँ बहुरूपजिह्वे ! स्वाहा होमात् पूर्णाहूतिः मूलमन्त्रेण " देव्यै साङ्गायै सपरिकरायै समस्तवाङ्मयसिद्धयै द्वादशशतानि जापपुष्पचूर्णगुग्गुलगुटिका पूर्णाहूतिः । स्वाहा अनेन क्रमेण वार ३ यावद् भण्यते तावदनवच्छिन्नं आज्यधारया नागवल्लीपत्र-मुखेन पूर्णाहूतिः कार्या । घृतकर्षः ताम्बूलं नैवेद्यम्, यज्ञोपवीत-नवीनश्वेतवस्त्रखण्डं वा दधिदूर्वाक्षतादिभिराहूतिः करणीया ।

अथ विसर्जनम्—

मूलमन्त्रेण साङ्गायै सपरिवारायै देव्यै सरस्वत्यै नमः-अनेन मन्त्रेण आत्महृदयाय स्वाहा । वैश्वानरनाभिकमलात् देवी ध्यानेनात्मनि संस्करणीया पश्चाद् ॐ अस्त्राय फट् इति मन्त्रं वारचतुष्टयं भणित्वा वार ४ अग्निविसर्जनं कार्यम् ।

ॐ क्षमस्व क्षमस्व भस्मना तिलकं कार्यम् ।

ऐं ह्रीं श्रीं क्लीं ह्सौँ वद वद वाग्वादिनि ! भगवति सरस्वति ! तुभ्यं नमः ।

इति सारस्वतं समाप्तम् ।

---

अत्र श्रीबप्पभट्टिसारस्वतकल्पोक्तमाद्यं बृहद् यन्त्रम् ?, इदं च द्वितीयमपि यन्त्रं आम्नायान्तरे दन्दृश्यते । गुरुक्रमेण लब्ध्वा पूजनीयम् । सर्वं तत्त्वमिदं पाठतस्तु

वाग्बीजं स्मरबीजवेष्टितमतो ज्योतिः कला तद्बहि-
श्चाष्टद्वादशषोडशद्विगुणितं द्व्यष्टाब्जपत्रान्वितम् ।
तद्बीजाक्षरकादिवर्णरचितान्यग्रे दलस्यान्तरे
हंसः कूटयुतं भवेदवितथं यन्त्रं तु सारस्वतम् ।

इति मूलकाव्यं यन्त्रोद्धारसूचकम् ।

तथा—

ॐ ऐं श्रीमनु सैाँ ततोऽपि च पुनः क्लीं वदद्रौ वाग्वादिनी
एतस्मादपि ह्रीं ततोऽपि च सरस्वत्यै नमोऽदः पदम् ।

अश्रान्तं निजभक्तिशक्तिवशतो यो ध्यायति प्रस्फुटं
बुद्धिज्ञानविचारसारसहितः स्याद्देव्यसौ साम्प्रतम् ॥

इति मूलमन्त्रोद्धारकाव्यं च ।

तथापि गुरुक्रमवशतः पाठान्तराणि दृश्यन्ते तत्र गुरुक्रम एव प्रमाणम् । भक्तानां हि सर्वेऽपि फलन्तीति ।

ॐ ह्रीं आसिआउसा नमः अर्हं वाचिनि ! सत्यवाचिनि ! वाग्वादिनि वद वद मम वक्त्रे व्यक्तवाचया ह्रीं सत्यं ब्रूहि ब्रूहि सत्यं वद वद अस्खलितप्रचारं सदेवमनुजासुरसदसि ह्रींअर्हं असिआउसा नमः स्वाहा ।

लक्षजापात् सिद्धिर्बप्पभट्टि सारस्वतम् ।

इति श्रीबप्पभट्टिसारस्वतकल्पः ।

---

वाग्भवं प्रथमं बीजं १ द्वितीयं कुसुमायुधम्२ ।
तृतीयं जीवसंज्ञं च सिद्धसारस्वतं स्मृतम् ॥
जीवसंज्ञं स्मरेद् गुह्ये वक्षसि (वक्षःस्थले) कुसुमायुधम् ।
शिरसि वाग्भवं बीजं शुक्लवर्णं स्मरेत् त्रयम् ॥

त्रयम्–बीजत्रयमित्यर्थः ।

ॐ ह्रीं मण्डले आगच्छ आगच्छ स्वाहा । आह्वानम् ।

ॐ ह्रीं स्वस्थाने गच्छ गच्छ स्वाहा विसर्जनम् ।

ॐ अमृते ! अमृतोद्भवे ! अमृतमुखि ! अमृतं स्रावय स्रावय ॐ ह्रीं स्वाहा इति सकलीकरणम् । इति शारदाकल्पः ।

ॐ नमो भगवओ अरिहओ भगवईए वाणीए वयमाणीए मम सरीरं पविस पविस निस्सर निस्सर स्वाहा ।

लक्षं जापः । वाक्सिद्धिः फलति ।

ॐ नमो हिरीए बंभीए भगवईए सिज्जउ मे भगवई महाविज्जा ॐ बंभी महाबंभी स्वाहा ।

लक्षं पूर्वसेवायां जपः, तत्र त्रिसन्ध्यं सदा जपः ।

क्षिप ॐ स्वाहेति पञ्चतत्त्वरक्षा पूर्वं कार्या । प्राङ्मुखं च ध्यानम् । एष विधिः सर्वसारस्वतोपयोगी ज्ञेयः ।

नमो अरिहंताणं, नमो सिद्धाणं, नमो आयरियाणं, नमो उवज्झायाणं, नमो लोए सव्वसाहूणं । नमो भगवईए सुअदेवयाए संघसुअमायाए बारसंगपवयणजणणीए सरस्सईए

सच्चवाइणि ! सुवण्णवण्णे ओअर ओअर देवी मम सरीरं पविस पुच्छंतस्स मुहं पविस सव्वजणमणहरी अरिहंतसिरी सिद्धसिरि आयरियसिरी उवज्झायसिरी सव्वसाहुसिरी दंसणसिरी नाणसिरी चारित्तसिरी स्वाहा। सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः। अनेन मन्त्रेण कच्चोलकस्थं कंगुतैलं गजवेलक्षुरिकया वार १००८ अष्टोत्तरसहस्रं अथवा अष्टोत्तरशतं अभिमन्त्र्य पिबेत् महाप्रज्ञाबुद्धिः प्रैधते। अनेन ब्राह्मीवचाऽभिमन्त्र्य भक्षणीया वाक्सिद्धिः। तथा पर्युषणापर्वणि यथाशक्ति एतत्स्मरणं कार्यं महैश्वर्यं वचनसिद्धिश्च।

ॐ नमो अणाइनिहणे तित्थयरपगासिए गणहरेहिं अणुमण्णिए द्वादशाङ्गचतुर्दशपूर्वधारिणि श्रुतदेवते ! सरस्वति ! अवतर अवतर सत्यवादिनि हुं फट् स्वाहा। अनेन पुस्तिकादौ वासक्षेपः। लक्षजापे हुंफडग्रे च ॐ ह्रीं स्वाहा इत्युच्चारणे सारस्वतं उपश्रुतौ कर्णाभिमन्त्रणं 'नमो धम्मस्स नमो संतिस्स नमो अजिअस्स इलि मिलि स्वाहा' चक्षुः कर्णौ च स्वस्याधिवास्य परस्य वा एकान्ते स्थितो यत् शृणोति तत्सत्यं भवति। उपश्रुतिमन्त्रः॥

ॐ अर्हन्मुखकमलवासिनि ! पापात्मक्षयंकरि ! श्रुतज्ञानज्वालासहस्रप्रज्वलिते ! सरस्वति ! मत्पापं हन हन दह दह क्षां क्षीं क्षूं क्षौं क्षः क्षीरधवले ! अमृतसम्भवे ! वं वं हूं क्ष्वीं ह्रीं क्लीं ह्सौं वद वद वाग्वादिन्यै ह्रीं स्वाहा।
चन्द्रचन्दनगुटिका दीपोत्सवे उपरागे शुभेऽह्नि वा अभिमन्त्र्य देया मेघाकरः। दक्षिणशयं स्वं स्वयं मुखे दत्त्वा ५।७ गुण्या क्षोभता।

चन्द्रचन्दनगुटीं रचयित्वा भक्षयेदनुदिनं सुपठित्वा।
शिष्यबुद्धिवैभवकृते विहितेयं हेमसूरिगुरुणा करुणातः॥

ऐं क्लीं ह्रीं ह्सौं सरस्वत्यै नमः। जापः सहस्र ५० सारस्वतम्।

ॐ क्लीं वद वद वाग्वादिनि ! ह्रीं नमः। अस्य लक्षजापे काव्यसिद्धिः। ध्याने च भगवती श्वेतवस्त्रा ध्यातव्येति

———:o:———

परिशिष्ट १३

साध्वीशिवार्याविरचितं

# पठितसिद्धसारस्वतस्तवः ।

व्याप्तानन्तसमस्तलोकनिकरैङ्कारा समस्ता स्थिरा,
यारा्ध्या गुरुभिर्गुरोरपि गुरुदेवैस्तु या वन्द्यते ।
देवानामपि देवता वितरतात् वाग्देवता देवता
स्वाहान्तः क्षिप ॐ यतः स्तवमुखं यस्याः स मन्त्रो वरः ॥१॥

ॐ ह्रीं श्रीप्रथमा प्रसिद्धमहिमा सन्तप्तचित्ते हि या
सैं ऐं मध्यहिता जगत्त्रयहिता सर्वज्ञनाथाहिता ।
श्रीं क्लीं ब्लीं चरमा गुणानुपरमा जायेत यस्या रमा
विद्येषा वषडिन्द्रगोःपतिकरी वाणीं स्तुवे तामहम् ॥२॥

ॐ कर्णे ! वरकर्णभूषिततनुः कर्णेऽथ कर्णेश्वरी
ह्रींस्वाहान्तपदां समस्तविपदां छेत्त्री पदं सम्पदाम् ।
संसारार्णवतारिणी विजयते विद्यावदाते शुभे
यस्याः सा पदवी सदा शिवपुरे देवीवतंसीकृता ॥३॥

सर्वाचारविचारिणी प्रतरिणी नौर्वाग्भवाब्धौ नृणां
वीणावेणुवरक्वणातिसुभगा दुःखाद्रिविद्रावणी ।
सा वाणी प्रवणा महागुणगणा न्यायप्रवीणाऽमलं
शेते यस्तरणी रणीषु निपुणा जैनी पुनातु ध्रुवम् ॥४॥

ॐ ह्रीं बीजमुखा विधूतविमुखा संसेविता सन्मुखा
ऐं क्लीं सौं सहिता सुरेन्द्रमहिता विद्वज्जनेभ्यो हिता ।

विद्या विस्फुरति स्फुटं हितरतिर्यस्या विशुद्धा मतिः
सा ब्राह्मी जिनवक्त्रवज्रललने लीना तु लीलातु माम् ॥५॥

ॐ अर्हन्मुखपद्मवासिनि ! शुभे ! ज्वालासहस्रांशुभे
पापप्रक्षयकारिणि ! श्रुतधरे ! पापं दहत्या शुभे ।
क्षाँ क्षीँ क्षूँ वरबीजदुग्धवले ! वं वं वहं स्वावहा
श्रीवाग्देव्यमृतोद्भवे ! यदि भवे मे मानसे सा भवे ॥६॥

हस्ते शर्मदपुस्तिकां विदधती सत्पात्रकं चापरं
लोकानां सुखदं प्रभूतवरदं सज्ज्ञानमुद्रं परम् ।
तुभ्यं बालमृणालकन्दललसल्लीलाविलोलं करं
प्रख्याता श्रुतदेवता विदधती सूक्ष्मं नृणां सूनृतम् ! ॥७॥

हंसो हंसोतिगर्वं वहति हि विधृता यन्मयैषा मयैषा
यन्त्रं यन्त्रं यदेतत् स्फुटति सिततरां सैव यक्षावयक्षा ।
साध्वी साध्वी शिवार्या प्रविधृतभुवना दुर्धरा या धराया
देवी देवीजनार्थ्या रमतु मम सदा मानसे मानसे सा ॥८॥

स्पष्टपाठं पठत्येतत् ध्यानेन पटुनाष्टकम् ।
अजस्रं यो जनस्तस्य भवन्त्युत्तमसम्पदः ॥९॥

# परिशिष्ट १४

## श्रीजिनप्रभसूरिविरचितं सारस्वतमन्त्रगर्भितं

# श्रीशारदास्तवनम् ।

ॐ नमस्त्रिदशवन्दितक्रमे ! सर्वविद्वज्जनपद्मभृङ्गिके ! ।
बुद्धिमान्द्यकदलीदलीक्रियाशस्त्रि ! तुभ्यमधिदेवते ! गिराम् ॥१॥

कुर्वते नभसि शोणशोचिषो भारति ! क्रमनखांशवस्तव ।
नम्रनाकिमुकुटांशुमिश्रिता ऐन्द्रकार्मुकपरम्परामिव ॥२॥

दन्तहीन्दुकमलश्रियो मुखं येऽवलोकि तव देवि ! सादरम् ।
ते विविक्तकविताजिकेतनं के न भारति ! भवन्ति भूतले ? ॥३॥

श्रीन्द्रमुख्यविबुधार्चितक्रमां ये श्रयन्ति भवतीं तरीमिव ।
ते जगज्जननि ! जाड्यवारिधिं निस्तरन्ति तरसा रसास्पृशः ॥४॥

द्रव्यभावतिमिरापनोदिनीं तावकीनवदनेन्दुचन्द्रिकाम् ।
यस्य लोचनचकोरकद्वयी पीयते भुवि स एव पुण्यभाक् ॥५॥

बिभ्रदङ्कमिदं त्वदर्पितस्नेहमन्थरदृशा तरङ्गितम् ।
वर्णमात्रवदनाक्षमोऽप्यहं स्वं कृतार्थमवयामि निश्चितम् ॥६॥

मौक्तिकाक्षवलयाब्जकच्छपीपुस्तकाङ्कितकरोपशोभिते ! ।
पद्मवासिनि ! हिमोज्ज्वलाङ्गि वाग्वादिनि ! प्रभव नो भवच्छिदे ॥७॥

विश्वविश्वभुवनैकदीपिके ! नेमुषां मुषितमोहविप्लवे ! ।
भक्तिनिर्भरकवीन्द्रनन्दिते ! तुभ्यमस्तु गिरिदेवते नमः ॥८॥

उदारसारस्वतमन्त्रगर्भितं जिनप्रभाचार्यकृतं पठन्ति ये ।
वाग्देवतायाः स्फुटमेतदष्टकं स्फुरन्ति तेषां मधुरोज्ज्वला गिरः ॥९॥

परिशिष्ट १५

# देवीस्तोत्रम्

श्रीसरस्वत्यै नमः ।

श्री [1]शारदे ! नमस्तुभ्यं जगद्भवनदीपिके ! ।
विद्वज्जनमुखाम्भोजभृङ्गिके ! मे मुखे वस ॥१॥

वागीश्वरि ! नमस्तुभ्यं नमस्ते हंसगामिनि ! ।
नमस्तुभ्यं जगन्मातर्जगत्कर्त्रि ! नमोऽस्तु ते ॥२॥
शक्तिरूपे ! नमस्तुभ्यं कवीश्वरि ! नमोऽस्तु ते ।
नमस्तुभ्यं भगवति ! सरस्वति ! नमोऽस्तुते ॥३॥

जगन्मुख्ये नमस्तुभ्यं वरदायिनि ! ते नमः ।
नमोऽस्तु तेऽम्बिकादेवि ! जगत्पावनि ! ते नमः ॥४॥
शुक्लाम्बरे ! नमस्तुभ्यं ज्ञानदायिनि ! ते नमः ।
ब्रह्मरूपे ! नमस्तुभ्यं ब्रह्मपुत्रि ! नमोऽस्तु ते ॥५॥

विद्वन्मातर्नमस्तुभ्यं वीणाधारिणि ! ते नमः ।
सुरेश्वरि ! नमस्तुभ्यं नमस्ते सुरवन्दिते ! ॥६॥
भाषामयि ! नमस्तुभ्यं शुकधारिणि ! ते नमः ।
पङ्कजाक्षि ! नमस्तुभ्यं मालाधारिणि ! ते नमः ॥७॥

पद्मारूढे ! नमस्तुभ्यं पद्मधारिणि ! ते नमः ।
शुक्लरूपे नमस्तुभ्यं नमस्त्रिपुरसुन्दरि ! ॥८॥
[2]धीदायिनि ! नमस्तुभ्यं ज्ञानरूपे ! नमोऽस्तुते ।
सुरार्चिते ! नमस्तुभ्यं भुवनेश्वरि ! ते नमः ॥९॥

---

१ सरस्वति ! २ श्रीदायिनि !

कृपावति ! नमस्तुभ्यं यशोदायिनि ! ते नमः ।
सुखप्रदे ! नमस्तुभ्यं नमः सौभाग्यवर्द्धिनि ! ॥१०॥

विश्वेश्वरि ! नमस्तुभ्यं नमस्त्रैलोक्यधारिणि ! ।
जगत्पूज्ये ! नमस्तुभ्यं विद्यां[1] देहि महामहे ॥११॥

श्रीदेवते ! नमस्तुभ्यं जगदम्बे ! नमोऽस्तुते ।
महादेवि ! नमस्तुभ्यं पुस्तकधारिणि ! ते नमः ॥१२॥

कामप्रदे नमस्तुभ्यं श्रेयोमाङ्गल्यदायिनि ! ।
सृष्टिकर्त्रि ! नमस्तुभ्यं [2]सृष्टिधारिणि ! ते नमः ॥१३॥

जगद्धिते ! नमस्तुभ्यं नमः संहारकारिणि ! ।
विद्यामयि ! नमस्तुभ्यं विद्यां देहि दयावति ! ॥१४॥

अथ लक्ष्मीनामानि—

महालक्ष्मि ! नमस्तुभ्यं पीतवस्त्रे ! नमोऽस्तु ते ।
पद्मालये ! नमस्तुभ्यं नमः पद्मविलोचने ! ॥१५॥

सुवर्णाङ्गि ! नमस्तुभ्यं पद्महस्ते ! नमोऽस्तु ते ।
नमस्तुभ्यं गजारूढे ! विश्वमात्रे नमोऽस्तु ते ॥१६॥

शाकम्भरि ! नमस्तुभ्यं कामधात्रि ! नमोऽस्तु ते ।
क्षीराब्धिजे ! नमस्तुभ्यं शशिस्वस्रे ! नमोऽस्तु ते ॥१७॥

हरिप्रिये ! नमस्तुभ्यं वरदायिनि ! ते नमः ।
सिन्दूराभे ! नमस्तुभ्यं नमः सन्मतिदायिनि ! ॥१८॥

ललिते ! च नमस्तुभ्यं वसुदायिनि ! ते नमः ।
शिवप्रदे ! नमस्तुभ्यं समृद्धिं देहि मे रमे ! ॥१९॥

अथ योगिनीरूपाणि—

गणेश्वरि ! नमस्तुभ्यं दिव्ययोगिनि ते ! नमः ।
विश्वरूपे ! नमस्तुभ्यं महायोगिनि ! ते नमः ॥२०॥

भयङ्करि ! नमस्तुभ्यं सिद्धयोगिनि ! ते नमः ।
चन्द्रकान्ते ! नमस्तुभ्यं चक्रेश्वरि ! नमोऽस्तु ते ॥२१॥

---

१ विद्यादेवि ! महामहे ! । २ नमस्ते सृष्टिहारिणि ! ।

पद्मावति ! नमस्तुभ्यं रुद्रवाहिनि ! ते नमः ।
परमेश्वरि ! नमस्तुभ्यं कुण्डलिनि ! नमोऽस्तु ते ॥२२॥
कलावति ! नमस्तुभ्यं मन्त्रवाहिनि ! ते नमः ।
मङ्गले ! च नमस्तुभ्यं श्रीजयन्ति ! नमोस्तु ते ॥२३॥

अथान्यनामानि—

चण्डिके ! च नमस्तुभ्यं दुर्गे ! देवि ! नमोऽस्तु ते ।
स्वाहारूपे ! नमस्तुभ्यं स्वधारूपे ! नमोऽस्तु ते ॥२४॥
प्रत्यङ्गिरे ! नमस्तुभ्यं गोत्रदेवि ! नमोऽस्तु ते ।
शिवे ! कृष्णे ! नमस्तुभ्यं नमः कैटभनाशिनि ! ॥२५॥
कात्यायनि ! नमस्तुभ्यं नमो धूम्रविनाशिनि ! ।
नारायणि ! नमस्तुभ्यं नमो महिषखण्डिनि ! ॥२६॥
सहस्राक्षि ! नमस्तुभ्यं नमश्चण्डविनाशिनि !
तपस्विनि ! नमस्तुभ्यं नमो मुण्डविनाशिनि ! ॥२७॥
अग्निज्वाले ! नमस्तुभ्यं नमो निशुम्भखण्डिनि ! ।
भद्रकालि ! नमस्तुभ्यं मधुमर्दिनि ! ते नमः ॥२८॥
महाबले ! नमस्तुभ्यं शुम्भखण्डिनि ! ते नमः ।
श्रुतिमयि ! नमस्तुभ्यं रक्तबीजवधे ! नमः ॥२९॥
धृतिमयि ! नमस्तुभ्यं दैत्यमर्दिनि ! ते नमः ।
दिवागते ! नमस्तुभ्यं ब्रह्मदायिनि ! ते नमः ॥३०॥
माये ! क्रिये ! नमस्तुभ्यं श्रीमालिनि ! नमोऽस्तु ते ।
मधुमति ! नमस्तुभ्यं कले ! कालि ! नमोऽस्तु ते ॥३१॥
श्रीमातङ्गि ! नमस्तुभ्यं विजये ! च नमोऽस्तु ते ।
जयदे च नमस्तुभ्यं श्रीशाम्भवि ! नमोऽस्तु ते ॥३२॥
त्रिनयने ! नमस्तुभ्यं नमः शङ्करवल्लभे ! ।
वाग्वादिनि ! नमस्तुभ्यं श्रीभैरवि ! नमोऽस्तु ते ॥३३॥
मन्त्रमयि ! नमस्तुभ्यं क्षेमङ्करि ! नमोऽस्तु ते ।
त्रिपुरे ! च नमस्तुभ्यं तारे शबरि ! ते नमः ॥३४॥
हरसिद्धे ! नमस्तुभ्यं ब्रह्मवादिनि ! ते नमः ।
अङ्गे ! बङ्गे ! नमस्तुभ्यं कालिके ! च नमोऽस्तु ते ॥३५॥

उमे ! नन्दे ! नमस्तुभ्यं यमघण्टे ! नमोऽस्तु ते ।
श्रीकौमारि ! नमस्तुभ्यं वातकारिणि ! ते नमः ॥३६॥
दीर्घदंष्ट्रे ! नमस्तुभ्यं महादंष्ट्रे ! नमोऽस्तु ते ।
प्रभे ! रौद्रि ! नमस्तुभ्यं सुप्रभे ! ते नमो नमः ॥३७॥
महाक्षमे ! नमस्तुभ्यं क्षमाकारि ! नमोऽस्तु ते ।
सुतारिके ! नमस्तुभ्यं भद्रकालि ! नमोऽस्तु ते ॥३८॥
चन्द्रावति ! नमस्तुभ्यं वनदेवि ! नमोऽस्तु ते ।
नारसिंहि ! नमस्तुभ्यं महाविद्ये ! नमोऽस्तु ते ॥३९॥
अग्निहोत्रि ! नमस्तुभ्यं सूर्यपुत्रि ! नमोऽस्तु ते ।
सुशीतले ! नमस्तुभ्यं ज्वालामुखि ! नमोऽस्तु ते ॥४०॥
सुमङ्गले ! नमस्तुभ्यं वैश्वानरि ! नमोऽस्तु ते !
निरञ्जने ! नमस्तुभ्यं श्रीवैष्णवि ! नमोऽस्तु ते ॥४१॥
श्रीवाराहि ! नमस्तुभ्यं तोतलायै नमो नमः ।
कुरुकुल्ले ! नमस्तुभ्यं भैरवपत्नि ! ते नमः ॥४२॥
अथागमोक्तनामानि स्वयमूह्यानि पण्डितैः ।
कथ्यन्ते कानि नामानि प्रसिद्धानि तथा न वा ॥४३॥
हेमकान्ते ! नमस्तुभ्यं हिङ्गुलायै नमो नमः ।
यज्ञविद्ये ! नमस्तुभ्यं वेदमातर्नमोऽस्तु ते ॥४४॥
श्रीमृडानि नमस्तुभ्यं विन्ध्यवासिनि ! ते नमः ।
पृथ्वीज्योत्स्ने ! नमस्तुभ्यं नमो नारदसेविते ! ।४५॥
प्रह्लादिनि ! नमस्तुभ्यमपर्णायै नमो नमः ।
जैनेश्वरि ! नमस्तुभ्यं सिंहगामिनि ! ते नमः ॥४६॥
बौद्धमातर्नमस्तुभ्यं जिनमातर्नमोऽस्तु ते ।
ॐकारे च नमस्तुभ्यं राज्यलक्ष्मि ! नमोऽस्तु ते ॥४७॥
सुधात्मिके ! नमस्तुभ्यं राजनीते ! नमोऽस्तु ते ।
मन्दाकिनि ! नमस्तुभ्यं गोदावरि ! नमोऽस्तु ते ॥४८॥
पताकिनि ! नमस्तुभ्यं भगमालिनि ! ते नमः ।
वज्रायुधे ! नमस्तुभ्यं परापरकले ! नमः ॥४९॥

वज्रहस्ते ! नमस्तुभ्यं मोक्षदायिनि ! ते नमः ।
शतबाहु ! नमस्तुभ्यं कुलवासिनि ! ते नमः ॥५०॥
श्रीत्रिशक्ते ! नमस्तुभ्यं नमश्चण्डपराक्रमे ! ।
महाभुजे ! नमस्तुभ्यं नमः षट्चक्रभेदिनि ! ॥५१॥
नभःश्यामे ! नमस्तुभ्यं षट्चक्रक्रमवासिनि ! ।
वसुप्रिये ! नमस्तुभ्यं रक्तादिनि नमो नमः ॥५२॥
महामुद्रे ! नमस्तुभ्यमेकचक्षुर्नमोऽस्तु ते ।
पुष्पबाणे ! नमस्तुभ्यं खगगामिनि ! ते नमः ॥५३॥
मधुमत्ते नमस्तुभ्यं बहुवर्णे ! नमो नमः ।
मदोद्धते ! नमस्तुभ्यं इन्द्रचापिनि ! ते नमः ॥५४॥
चक्रहस्ते ! नमस्तुभ्यं श्रीखड्गिनि ! नमो नमः ।
शक्तिहस्ते ! नमस्तुभ्यं नमस्त्रिशूलधारिणि ! ॥५५॥
वसुधारे ! नमस्तुभ्यं नमो मयूरवाहिनि ! ।
जालन्धरे ! नमस्तुभ्यं सुबाणायै नमो नमः ॥५६॥
अन्तर्वीर्ये ! नमस्तुभ्यं वरायुधधरे ! नमः ।
वृषप्रिये ! नमस्तुभ्यं शत्रुनाशिनि ! ते नमः ॥५७॥
वेदशक्ते ! नमस्तुभ्यं वरधारिणि ! ते नमः ।
वृषारूढे ! नमस्तुभ्यं वरदायै नमो नमः ॥५८॥
शिवदूति ! नमस्तुभ्यं नमो धर्मपरायणे ! ।
घनध्वनि ! नमस्तुभ्यं षट्कोणायै नमो नमः ॥५९॥
जगद्गर्भे ! नमस्तुभ्यं त्रिकोणायै नमोनमः ।
निराधारे ! नमस्तुभ्यं सत्यमार्गप्रबोधिनि ! ॥६०॥
निराश्रये ! नमस्तुभ्यं छत्रच्छायाकृतालये ! ।
निराकारे ! नमस्तुभ्यं वह्निकुण्डकृतालये ! ॥६१॥
प्रभावति ! नमस्तुभ्यं रोगनाशिनि ! ते नमः ।
तपोनिष्ठे ! नमस्तुभ्यं सिद्धिदायिनि ! ते नमः ॥६२॥
त्रिसन्ध्यके ! नमस्तुभ्यं दृढबन्धविमोक्षणि ! ।
तपोयुक्ते ! नमस्तुभ्यं कारावन्धविमोचनि ! ॥६३॥
मेघमाले ! नमस्तुभ्यं भ्रमनाशिनि ! ते नमः ।
ह्रींक्लींकारि ! नमस्तुभ्यं सामगायनि ! ते नमः ॥६४॥

ॐ ऐंरूपे ! नमस्तुभ्यं बीजरूपे ! नमोऽस्तु ते ।
नृपवश्ये ! नमस्तुभ्यं शस्यवर्द्धिनि ! ते नमः ॥६५॥
नृपसेव्ये ! नमस्तुभ्यं धनवर्द्धिनि ! ते नमः ।
नृपमान्ये ! नमस्तुभ्यं लोकवश्यविधायिनि ! ॥६६॥
नमः सर्वाक्षरमयि ! वर्णमालिनि ! ते नमः ।
श्रीब्रह्माणि ! नमस्तुभ्यं चतुराश्रमवासिनि ! ॥६७॥
शास्त्रमयि ! नमस्तुभ्यं वरशस्त्रास्त्रधारिणि ! ।
तुष्टिदे ! च नमस्तुभ्यं पापनाशिनि ! ते नमः ॥६८॥
पुष्टिदे ! च नमस्तुभ्यमार्तिनाशिनि ! ते नमः ।
धर्मदे ! च नमस्तुभ्यं गायत्रीमयि ! ते नमः ॥६९॥
कविप्रिये ! नमस्तुभ्यं चतुर्वर्गफलप्रदे ! ।
जगज्जीवे ! नमस्तुभ्यं त्रिवर्गफलदायिनि ! ॥७०॥
जगद्बीजे ! नमस्तुभ्यमष्टसिद्धिप्रदे ! नमः ।
मातङ्गिनि ! नमस्तुभ्यं नमो वेदाङ्गधारिणि ! ॥७१॥
हंसगते ! नमस्तुभ्यं परमार्थप्रबोधिनि !
चतुर्बाहु ! नमस्तुभ्यं शैलवासिनि ते नमः ॥७२॥
चतुर्मुखि ! नमस्तुभ्यं द्युतिवर्द्धिनि ! ते नमः ।
चतुःसमुद्रशायिनि ! तुभ्यं देवि ! नमो नमः ॥७३॥
कविशक्ते ! नमस्तुभ्यं कलिनाशिनि ! ते नमः ।
कवित्वदे ! नमस्तुभ्यं मत्तमातङ्गगामिनि ! ॥७४॥

## परिशिष्ट १६

# श्रीअम्बिकाष्टकम्

व्यालोलालम्बमानप्रवणरणझणत्किङ्किणीक्वाणरम्यं
ध्वस्तध्वान्तं समन्तान्मणिकिरणगणाडम्बरोल्लासितेन ।
देवी दिव्यांशुकानां ध्वजपटपटलैः शोभमानं विमानं
लीलारूढा भ्रमन्ती भुवनकृतनतिः पातु मामम्बिका सा ॥१॥

या देवी दिव्यदामाञ्चितचिकुरभरामोदमुग्धालिमाला-
भास्वन्माणिक्यमालामिलदमलमहोमण्डलीमण्डिताङ्गा ।
सन्मुक्तातारहारैर्गगनतलगतास्तारकास्तर्जयन्ती
वज्रालङ्कारभासा हसितरविकरा पातु मामम्बिका सा ॥२॥

या कौबेरं विहाय स्वपतिपरिभवात् साधुदानप्ररूढात्
स्थानं श्रान्तातिमार्गे श्रमशमनकृते संश्रिता चूतवृक्षम् ।
क्षुत्क्षामौ वीक्ष्य पुत्रौ कृतसुकृतवशात् प्रार्थयन्ती फलानि
क्षिप्रं सम्प्राप तानि स्वचरितमुदिता पातु मामम्बिका सा ॥३॥

देवी याऽत्रोपविष्टा सरणिगतपतिं वीक्ष्य कम्पं दधाना
स्मृत्वा श्री रैवताद्रिं व्यवसितमरणा साधुधर्मं स्मरन्ती ।
आरुह्योत्तुङ्गश्रृङ्गं प्रपतनविधिना दिव्यदेवत्वमाप्ता
जैनेन्द्रे पादपीठे सततनतशिराः पातुमामम्बिका सा ॥४॥

या पश्चात्तापतप्तं गतमदमदनं दुष्कृतं स्वं स्मरन्ती
दंष्ट्रास्यं पिङ्गनेत्रं खरनखरकरं केसरालीकरालं ।
पुच्छाच्छोटप्रकम्पावनिवलयतलं दिव्यसिंहं स्वकान्तं
संरूढा याति नित्यं जिनपतिनिलये पातु मामम्बिका सा ॥५॥

सान्द्राम्राम्रालुम्बिहस्ता तरलहरिगता बालकाभ्यामुपेता
　　ध्याता या सिद्धकामैर्विघटितडमरा साधकैर्भक्तियुक्तैः ।
रक्ता रागानुरक्तैः स्फटिकमणिनिभा क्लेशविध्वंसधीभिः
　　पीता वश्यानुभावैर्विहितजनहिता पातु मामम्बिका सा ॥६॥

देवी विद्याधरेन्द्रासुरसुरमनुजैर्वन्द्यपादारविन्दा
　　प्रत्यूहान्निक्षिपन्ती क्षपितकलिमला बिभ्रती विश्वरक्षाम् ।
जैनेन्द्रं शासनं या प्रकटयति महोत्साहशक्त्या स्वभक्त्या
　　नित्यं नाम्ना नराणां विशदशिवफला पातु मामम्बिका सा ॥७॥

एवं वृत्ताष्टकेन स्तुतिमुखरमुखः संस्तुतिं यः करोति
　　ध्यानाधीनान्तरात्मा प्रशममुपगतो नित्यमेकाग्रचित्तः ।
प्रातर्मध्ये निशायां शयनतलगतो यत्र कुत्रापि संस्थो
　　देवी तस्य प्रकामं प्रकटयति पटुं प्रौढमम्बा प्रसादम् ॥८॥

# परिशिष्ट १७

# अम्बिकास्तुतिः ।

ॐ महातीर्थरैवतगिरिमण्डने ! जैनमार्गस्थिते ! विघ्नभीखण्डने ! ।
नेमिनाथाङ्घ्रिराजीवसेवापरे ! त्वं जयाम्बे ! जगज्जन्तुरक्षाकरे ! ॥१॥
ह्रीं महामन्त्ररूपे ! शिवे ! शङ्करे ! देवि ! वाचालसत्किङ्किणीनूपुरे ! ।
तारहारावलीराजितोरःस्थले ! कर्णताडङ्करुच्चिरम्यगण्डस्थले ! ॥२॥
अम्बिके ! ह्रां स्फुरद्बीजविद्ये ! स्वयं ह्रीं समागच्छ मे देहि दुःखक्षयम् ।
ह्रां हूँ तं द्रावय द्रावयोपद्रवान् ह्रीं द्रुहि क्षुद्रसर्पेभकण्ठीरवान् ॥३॥
क्लीँ प्रचण्डे ! प्रसीद प्रसीद क्षणं ब्लूँ सदा प्रसन्ने ! विधेहीक्षणम् ।
सः सतां दत्तकल्याणमालोदये ! ह्रस्क्ल्ह्रीं नमस्तेऽम्बिके ! अङ्कस्थपुत्रद्वये ॥४॥
इत्थमद्भूतमाहात्म्यमन्त्रस्तुते ! क्रौँसमालीढषट्कोणयन्त्रस्थिते ! ।
ह्रींयुतेऽम्बे ! मरुन्मण्डलालङ्कृते ! देहि मे दर्शनं ह्रीं त्रिरेखावृते ! ॥५॥
नाशिताशेषमिथ्यादृशां दुर्मदे ! शान्तिकीर्तिद्युतिस्वस्तिसिद्धिप्रदे ! ।
दुष्टविद्याबलोच्छेदनप्रत्यले ! नन्द नन्दाम्बिके ! निश्चले ! निर्मले ! ॥६॥
देवि ! कूष्माण्डि ! दिव्यांशुके ! भैरवे ! दुःसहे दुर्जये ! तप्तहेमच्छवे ! ।
नाममन्त्रेण निर्नाशितोपद्रवे ! पाहि मामंह्रिपीठस्थकण्ठीरवे ! ॥७॥
देवदेवीगणैः सेविताङ्घ्रिद्वये जागरूकप्रभावैकलक्ष्मीमये ! ।
पालिताशेषजैनेन्द्रचैत्यालये ! रक्ष मां रक्ष मां देवि ! अम्बालये ! ॥८॥

अत्र स्तुतौ गुप्तीकृतो मन्त्रस्त्वेवम्—

ॐ ह्रीं अम्बिके ! ह्रां ह्रीं ह्रां ह्रीं क्लीँ ब्लूँ सः ह्रस्क्ल्ह्रीं नमः ।

———:o:———

## परिशिष्ट १८

# अम्बिकाताटङ्कः।

सिंहारूढा सुतयुगविभूषिता कम्रनम्रमध्यगता।
साऽम्बा देवी तीर्थाधिवासिनी हरतु मम दुरितम् ॥१॥

ॐ ह्रीं जय जय परमेश्वरि ! श्रीअम्बिके ! आम्रहस्ते ! महासिंहयानस्थिते ! किङ्किणीनूपुरक्वाणकेयूरहाराङ्गदानेकसद्भूषणैर्विभूषिताङ्गे ! सर्वसल्लक्षणैर्लक्षिताङ्गे ! जिनेन्द्रस्य भक्ते ! कले ! निष्कले ! निष्प्रपञ्चे ! महाग्रानने ! सिद्धगन्धर्वविद्याधरेन्द्रार्चिते ! मन्त्रमूर्ते ! शिवे ! शङ्करे ! सिद्धिबुद्धिधृतिकीर्तिकान्तिविस्तारिणि ! शान्तिनिधितुष्टिपुष्टिहृष्टिप्रिये ! शोभने ! सुप्रहासे ! जरे ! जम्भिनि ! स्तम्भिनि ! मोहिनि ! दीपनि ! शोषणि ! त्रासिनि ! मोटिनि ! भञ्जिनि ! दुष्टसञ्चूर्णिनि ! क्षुद्रविद्रावणि ! शत्रुसञ्चूर्णिनि ! धार्मिकारक्षिणि ! देवि ! अम्बे ! महाविक्रमे ! भीमनादे ! सुनादे ! अघोरे ! सुघोरे ! सुरौद्रे ! सुरौद्रानने ! चण्डिके ! चण्डरूपे ! सुनेत्रे ! सुवक्त्रे ! सुगात्रे ! पवित्रे ! नमन्मध्यभागे ! जयन्ति ! जयन्ताकुमारी ! त्रैपुराङ्गि ! गौरि ! गान्धारि ! गन्धर्वि ! यक्षेश्वरि ! ॐ कालि ! कालि ! महाकालि ! योगेश्वरि ! जंनमार्गस्थिते ! सुप्रशस्ते ! धनुर्बाणदण्डासिचक्राम्बुजानेकशस्त्रोद्दिते ! सृष्टिसंहारकर्त्रि ! दिव्ये ! देवेन्द्रनागेन्द्रभूपेन्द्रचन्द्रस्तुते ! सुवर्णे ! पवित्रे ! महामूलविद्यास्थिते ! ॐ वषट्कारस्वाहाकारस्वधाकारह्रींकारकेंकारबीजान्विते ! दुःखदारिद्र्यदौर्भाग्यनिर्नाशिनि ! लक्ष्मीधृतिकीर्तिकान्तिविस्तारिणि ! ह्रीं नमो यक्षेश्वरि ! ह्रीं देवि ! कुष्माण्डिके ! ह्रूँ नमो देवि ! अम्बिके ! ह्रः सदा सर्वसिद्धिप्रदे ! अलं रक्ष रक्ष मां देवि ! वादे विवादे रणे कानने शत्रुमध्ये श्मशाने अग्नौ गिरौ रात्रौ सन्ध्याकाले विहस्तं निरस्तं नभःस्थं निषण्णं प्रमत्तं भयैर्व्याघ्रसिंहैर्वराहैश्च रुद्धं तथा व्यालवेतालभूपालभीतं ज्वरेणाभिभूतं कृतान्तेन नीतं नरेण उक्तं नरैराक्षसैर्देवि ! अम्बालये ! त्वत्प्रसादात् शान्तिकं पौष्टिकं वश्यमाकर्षणं स्तम्भनं मोहनं दुष्टसञ्चूर्णनं धार्मिकारक्षणम्।

परिशिष्ट १९

# अम्बिकाताडङ्कम्

पठेत् स्मरेत् त्रिसन्ध्यं यो भक्त्या जिनपशासने ।
सम्प्राप्य मानुषान् लभते लभते सुभगां गतिम् ॥१॥
अम्बे ! दत्तावलम्बे ! त्वं मादृशां भव नित्यशः ।
श्रीधर्मकल्पलतिके ! प्रसीद वरदेऽम्बिके ! ॥२॥

ॐ ह्रीं आम्रकूष्माण्डिनि ! ह्स्क्ल्ह्रीं नमः । अयं मूलमन्त्रः । द्वादश सहस्राणि रक्तकणवीरकुसुमैर्जापः, द्वादशांशेन होमः । जप्तपुष्पमध्यात् द्वादश शतानि छायाशुष्काणि कृत्वा गुग्गुल-दधि-दुग्ध-मधु-घृतमिश्रो होमस्त्रिकोणकुण्डे देयः बदरीपलाससमिधैः ॥

ॐ ह्रीं आम्रकूष्माण्डिनि ! सर्वाङ्गसुन्दरि ! ह्वीं क्ष्वीं नमः ।

अयमपि तथैव साध्यः ।

ॐ ह्रीं आम्रकूष्माण्डिनि सर्वाङ्गसुन्दरि ! ह्वीं क्ष्वीं स्वप्नान्तरदेशं कुरु कुरु स्वाहा ।

षट् सहस्राणि जापः अम्बिकामूर्तेः पुरतो भोगं कृत्वा सुप्यते चिन्तिताभिप्रायेण स्वप्नं स्यात् ।

ऐं ह्स्क्ल्ह्रीं ह्सौं नमः । सहस्र ३ जापः, रक्तध्यानेन मञ्जिष्ठाऽरुणवसनां स्वर्णाभरणभूषिताङ्गीं सिंहारूढां अङ्गुलीलग्नैकडिम्भां अङ्कस्थद्वितीयडिम्भां हेमवर्णां चतुर्भुजां उपरितनवामकराङ्कुशां उपरितनदक्षिणकरात्तप्रलुम्बीं अधस्तनदक्षिणकरबीजपूरां अधस्तनवामकरपाशां देवीमम्बिकां ध्यायेत् पकेनैवासने (न) जपः कार्यः । रक्तध्यानेन विशिष्टफलमफलं रागवश्यादि स्वप्नोपदेशश्च ।

ॐ ह्रीं कूष्माण्डिनि ! कनकप्रभे ! सिंहमस्तकसमारूढे ! जिनधर्मसुवत्सले ! महादेवि ! मम चिन्तितकार्येषु शुभाशुभं कथय कथय अमोघवागीश्वरि ! सत्यवादिनि ! सत्यं दर्शय दर्शय स्वाहा ॥

अम्बिकामन्त्रः सत्प्रत्ययः ।

ॐ ह्रीं अम्बिके ! ह्रां ह्रीं ह्रां ह्रीं क्लीं ब्लूँ सः ह्स्क्लीं नमः । अयमम्बिकामन्त्रः ॐ ह्रीं अंबा अंबालुंबि हि लुंबिया ह्रीं । १०८ षण्मासान् यावत् महाभक्त्या स्मरेत् । पुत्रं लभते ।

ॐ ह्रीं अम्बे ! आँ क्रों ह्रीं ह्रां ह्रीं क्लीं ब्लूँ सः ह्स्क्लीं नमः । इदं यन्त्रं पवित्रपट्टके यक्षकर्दमकणवीरपुष्पैर्जापो दिनसप्तकेन द्वादश सहस्राणि ततः पुरु घृतमधुखण्डमिश्रजप्तकुसुमदशांशचूर्णेन गुटिका शत १२ त्रिकोणकुण्डे होमः । ततोऽम्बिका सिद्धा स्यात् । विश्वक्षोभण-स्त्र्याकर्षण-पात्रावतार-स्वप्नादेशसिद्धिर्मुद्गलादिग्रहनिग्रहं च विदधाति । अन्यदपि हितं सम्पादयति ।

ॐ आकाशगामिनि ! नगरपुरपाटनक्षोभिणि ! रायराणासामन्तमोहिनि ! ॐ अम्बिकादेवि ! ह्रीं फट् स्वाहा ।

जातिपुष्पैः सहस्राणि १० जापः । इति पूर्वसेवा । नित्यं च वार २१ जापः । वार ३ थूकमन्त्री वामकनिष्ठया पुण्ड्रं सभावश्यम् ।

ॐ आकाशगामिनि ! नगरपुरपाटणक्षोभिणि ! रायराणाअमात्यवशीकरणी ॐ ह्रीं अम्बिके ! हुं फट् स्वाहा । २१ स्मरणा ।

ॐ ह्रीं अम्बिके ! उज्जयन्तनिवासिनि ! सर्वकल्याणकारिणि ! ह्रीं नमः । स्मरणा ।

ॐ ह्रीं सिद्धमात अम्बिके ! मम सर्वसिद्धिं देहि देहि ह्रीं नमः । सदा स्मरणा कार्या ।

ॐ क्लीं हर हर ठः ठः सर्वदुष्टान् वशीकुरु कुरु त्रिपुरक्षोभिनि ! त्रिपुरवशीकरणि ! ॐ ह्रीं अम्बिके ! स्वाहा । सदा स्मरणा ।

ॐ नमो भगवति ! कूष्माण्डिनि ! क्ष्मीं ह्रीं ह्रीं शासनदेवि ! अवतर अवतर घटे दर्पणे जले वाममेतं कार्यं सत्यं ब्रूहि ब्रूहि स्वाहा । दीपे कन्या शुभाशुभं वक्ति ।

ॐ ह्रीं रक्ते ! महारक्ते ! प्रैँ शासनदेवि ! एहि एहि अवतर अवतर स्वाहा ।

ॐ ह्रीं रक्ते ! महारक्ते ! ह्रौँ ह्स्क्लीं ह्स्क्ल्लूँ शासनदेवि ! एहि एहि अवतर अवतर स्वाहा ।

ॐ ह्रीं अम्बे ! अम्बकूष्माण्डे ! रक्ते ! रक्तवस्त्रे ! अवतर अवतर एहि एहि शीघ्रमानय आनय मम चिन्तितं कार्यं कथय कथय ॐ ह्रीं स्वाहा। दीपावतारमन्त्रः।

ॐकारसम्पुटस्थानं ह्रयरेहपरिय.................।
बिंदुकलासंजुत्तं लिहइ सनामं सयाकालं ॥१॥
पुव्वाई अट्ठदलं सु...मणं लिहइ भुज्जपत्तम्मि ।
दंसणनाणचरित्ता तव चतुरो छहि पुव्वाइं ॥२॥
चन्दणकप्पूरेणं लिहइ क्रम पञ्चबाणमन्तेहिं ।
अह्वाहं सेयकुसुमेहिं अट्ठुत्तरं जाव ॥३॥
कांपाविअम्बिएणं गंधक्खयधूवकुसुमदीवेहिं ।
अण्णं चिय इट्टधुरं पण जं जरइ देवएण मन्तेणं ॥४॥
पुण पुत्तह वरकण्णा दीवणमज्झम्मि मीइ जं रूवं ।
सद्दं वा आअम्बइ सुहासुहं तं फुडं होइ ॥५॥

परिशिष्ट २०

महामात्यश्रीवस्तुपालविरचितं

# श्रीअम्बिकास्तवनम्

पुण्ये गिरीशशिरसि प्रथितावतारामासूत्रितत्रिजगतीदुरितापहाराम् ।
दौर्गत्यपातिजनताजनितावलम्बामम्बामहं महिमहैमवतीं महेयम् ॥१॥
यद्वक्त्रकुञ्जरहरोद्गतसिंहनादोऽप्युन्मादिविघ्नकरियूथकथाममाथम् ।
कूष्माण्डि खण्डयतु दुर्विनयेन कण्ठः कण्ठीरवः स तव भक्तिनतेषु भीतिम् ॥२॥
कूष्माण्डि ! मण्डनमभूत्तव पादपद्मयुग्मं यदीयहृदयावनिमण्डलस्य ।
पद्मालया नवनिवासविशेषलाभलुब्धा न धावति कुतोऽपि ततः परेण ॥३॥
दारिद्र्यदुर्दमतमःशमनप्रदीपाः सन्तानकाननघनाघनवारिधाराः ।
दुःखोपतप्तजनबालमृणालदण्डाः कूष्माण्डि ! पातु पदपद्मनखांशवस्ते ॥४॥
देवि ! प्रकाशयति सन्ततमेष कामं वामेतरस्तव करश्चरणानतानाम् ।
कुर्वन् पुरः प्रगुणितां सहकारलुम्बिमम्बे ! विलम्बविकलस्य फलस्य लाभम् ॥५॥
हन्तुं जनस्य दुरितां त्वरिता त्वमेव नित्यं त्वमेव जिनशासनरक्षणाय ।
देवि ! त्वमेव पुरुषोत्तममाननीया कामं विभासि विभया सभया त्वमेव ॥६॥
तेषां मृगेश्वरगरज्वरमारिवैरिदुर्वारवारणजलज्वलनोद्भवा भीः ।
उच्छृङ्खलं न खलु खेलति येषु धत्से वात्सल्यपल्लवितमम्बकमम्बिके ! त्वम् ॥७॥
देवि ! त्वदूर्जितर्जितप्रतिपन्थितीर्थयात्राविधौ बुधजनाननरङ्गसङ्गि ।
एतत्त्वयि स्तुतिनिभाद्भुतकल्पवल्लीहल्लीसकं सकलसंघमनोमुदेऽस्तु ॥८॥

वरदे ! कल्पवल्लि ! त्वं स्तुतिरूपे ! सरस्वति ! ।
पादाग्रानुगतं भक्तं लम्भयस्वातुलैः फलैः ॥९॥

स्तोत्रं श्रोत्ररसायनं श्रुतसरस्वानम्बिकायाः पुर-
श्चक्रे गूर्जरचक्रवर्तिसचिवः 'श्रीवस्तुपालः' कविः ।
प्राप्तः प्रातरधीयमानमनघं यच्चित्तवृत्तिं सता-
माधत्ते विभुतां च ताण्डवयति श्रेयःश्रियं पुष्यति ॥१०॥

इत्यम्बिकास्तुतिः ।

## परिशिष्ट २१

### श्रीजिनेश्वरसूरिविरचिता

# श्रीअम्बिकादेवीस्तुतिः

देवगन्धर्वविद्याधरैर्वन्दिते जय जयामित्रवित्रासने विश्रुते ।
नूपुरारावसुनिरुद्धभुवनोदरे मुखरतरकिङ्किणीचारुतारस्वरे ॥१॥

ॐ ह्रीं मन्त्ररूपे शिवे शङ्करे अम्बिके देवि ! जय जन्तुरक्षाकरे ।
स्फुरत्तारहारावलीराजितोरःस्थले कर्णताटङ्करुचिरम्यगण्डस्थले ॥२॥

स्तम्भिनी मोहिनी ईश उच्चाटने क्षुद्रविद्राविणी दोषनिर्णाशिनी ।
जम्भिनी भ्रान्तिभूतग्रहस्फोटिनी शान्तिधृतिकीर्त्तिमतिसिद्धिसंसाधिनी ॥३॥

ॐ महामन्त्रविद्येऽनवद्ये स्वयं ह्रीं समागच्छ मे देवि दुरितक्षयम् ।
ॐ प्रचण्डे प्रसीद प्रसीद क्षणं (हे) सदानन्दरूपे विधेहि क्षणम् ॥४॥

ॐ नमो देवि दिव्येश्वभे भैरवे जयेऽपराजिते तप्तहेमच्छवे ! ।
ॐ जगज्जननि संहारसम्मार्जनी ह्रीं कूष्माण्डि ! दिव्याधिविध्वंसिनी ॥५॥

पिङ्गतारोत्पतद्भीमकण्ठीरवे नाममन्त्रेण निर्णाशितोपद्रवे ।
अवतरावतर रैवतगिरिनिवासिनि अम्बिके ! जय जय त्वं जगत्स्वामिनी ॥६॥

ह्रीं महाविघ्नसङ्घातनिर्णाशिनी दुष्टपरमन्त्रविद्याबलच्छेदिनी ।
हस्तविन्यस्तसहकारफललुम्बिका हरतु दुरितानि देवी ! जगत्यम्बिका ॥७॥

इति श्रीजिनेश्वरसूरिभिरम्बिका भगवती शुभमन्त्रपदैः स्तुता ।
प्रवरपात्रगता शुभसम्पदं वितरतु प्रणिहन्त्वशिवं मम ॥८॥

इति श्रीअम्बिकादेवीस्तुतिः ॥

## चक्रेश्वरी (अप्रतिचक्र) २४



Goddess Chakreshvari

[illegible]

# परिशिष्ट २२

## श्रीजिनदत्तसूरिविरचितम्

# श्रीचक्रेश्वरीस्तोत्रम्

श्रीचक्रेश्वरि चक्रचुम्बितकरे चञ्चच्चलत्कुण्डला-
लंकारे कृतमस्तकोरुमुकुटे ग्रैवेयकालंकृते ॥
स्फारोदारभुजाग्रभूषणकरे सन्नूपुरैर्बन्धुरे
मातर्मन्ति नयं स्वमिष्टविनयं त्रायस्व संत्रासतः ॥१॥

श्रीचक्रेश्वरी चन्द्रमण्डलमिव ध्वस्तांधकारोत्करं
भव्यप्राणिचकोरचुम्बितकरं संतापसंपद्धरं ।
सम्यग्दृष्टिसुखप्रदं सुविशदं कान्त्यास्पदं संपदां
पात्रं जीवमनःप्रसादजनकं भाति त्वदीयं मुखम् ॥२॥

श्रीचक्रेश्वरी युष्मदाननरविं पश्यन्ति नैवोदितं
ध्वस्तध्वान्ततति प्रदत्तसुगतिं संप्राप्तमार्गस्थितिं ।
ते ज्ञेया इह कौशिका इव जना हेयाः सतां सर्वथा
नादेयाः कुदृशो भवन्ति भगवत्युच्चैःशिवं वांछतां ॥३॥

श्रीचक्रेश्वरी युष्मदंघ्रिचरितं सर्वत्र तद्विश्रुतं ।
कस्याज्ञस्य मनोमुदे भवति नो निष्पुण्यचूडामणेः ।
कारुण्यान्वितभंगिसंमतमतिभ्रान्तिप्रशान्तप्रियं
श्रीसंकेतगृहं सदास्तविरहं पुण्यानुबन्धि स्फुटम् ॥४॥

श्रीचक्रेश्वरि ये स्तुवन्ति भवतीं भव्या भवद्भक्तयः ।
श्रीसर्वज्ञपदारविन्दयुगले विश्राममातन्वतीम् ॥

भृङ्गीवत्सदृशां सुखं त्वसदृशं संप्रार्थयन्तो जना-
स्ते स्युर्ध्वस्तविपत्तयः सुमतयः स्पष्टं जितारातयः ॥५॥
श्रीचक्रेश्वरि नित्यमेव भवतीनामाऽपि ये सादरं ।
सन्तः सत्यशमाश्रिताः प्रतिपदं सम्यक् स्मरन्ति स्फुरत् ॥
तेषां किं दुरितानि यान्ति निकटे नायाति किं श्रीर्गृहे ।
नोपैति द्विषतां गणोऽपि विलयं नाऽभीष्टसिद्धिर्भवेत् ॥६॥
श्रीचक्रेश्वरि ये भवन्ति भवतीपादारविन्दाश्रिता-
स्ते भृङ्गा इव कामितार्थमधुनः पात्रं सदैवाङ्गिनः ।
जायन्ते जगति प्रतीतिभवनं भव्याः स्फुरत्कीर्त्तय-
स्तेषां क्वापि कदापि सा भवति नो दारिद्र्यमुद्रा गृहे ॥७॥
श्रीचक्रेश्वरि यः स्तवं तव करोत्युच्चैः स किं मानवः
कस्मादन्यजनाच्च यावत इह क्लेशैर्विमुक्ताशयः ।
कासश्वासशिरोगलग्रहकटीवातातिसारज्वर-
स्रोतोनेत्रगतामयैरपि न स श्रेयानिह प्रार्थते ॥८॥
श्रीचक्रेश्वरि शासनं जिनपतेस्तद्रक्षसि त्वं मुदा
ये केचिज्जिनभाषितान्यवितथान्युच्चैः प्रजल्पन्ति च ।
भव्यानां पुरतो हितानि कुरुषे तेषां तु तुष्टिं सदा
क्षुद्रोपद्रवविद्रवं प्रतिपदं कृत्वा कृतान्तादपि ॥९॥
श्रीचक्रेश्वरि विश्वविस्मयकरी त्वं कल्पवृक्षोपमा
धत्सेऽभीष्टफलानि वस्तुनिकृतिं दत्से विना संशयं ।
तेन त्वं विनुता मयाऽपि भवती मत्वेति मन्निश्चयं
कुर्याः श्रीजिनदत्तभक्तिषु मनो मे सर्वदा सर्वथा ॥१०॥

इति श्रीचक्रेश्वरीस्तोत्रं संपूर्णम्

## परिशिष्ट २३

# ॥ श्रीचक्रेश्वरीअष्टकम् ॥

श्रीचक्रे ! चक्रभीमे ! ललितवरभुजे ! लीलया लोलयन्ती
चक्रं विद्युत्प्रकाशं ज्वलितशितशिखं खे खगेन्द्राधिरूढे ! !
तत्त्वैरुद्भूतभावे सकलगुणनिधे ! त्वं महामन्त्रमूर्तिः [मूर्ते]
क्रोधादित्यप्रतापे ! त्रिभुवनमहिते ! पाहि मां देवि ! चक्रे ! ॥१॥
क्लीं क्लीं क्लींकारचित्ते ! कलिकलिवदने ! दुन्दुभिभीमनादे !
ह्रॉं ह्रीं ह्रः सः खबीजे ! खगपतिगमने ! मोहिनी शोषिणी त्वम् ।
तच्चक्रं चक्रदेवी भ्रमसि जगति दिक्चक्रविक्रान्तकीर्ति-
र्विघ्नौघं विघ्नयन्ती विजयजयकरी पाहि मां देवि ! चक्रे ! ॥२॥
श्रां श्रीं श्रूं श्रः प्रसिद्धे ! जनितजनमनःप्रीतिसन्तोषलक्ष्मीं
श्रीवृद्धिं कीर्तिकान्तिं प्रथयसि वरदे ! त्वं महामन्त्रमूर्तिः [मूर्ते] ।
त्रैलोक्यं क्षोभयन्तीमसुरभिदुरहुङ्कारनादैकभीमे !
क्लीं क्लीं क्लीं द्रावयन्ती हुतकनकनिभे पाहि मां देवि ! चक्रे ! ॥३॥
वज्रक्रोधे ! सुभीमे ! शशिकरधवले ! भ्रामयन्ती सुचक्रं
ह्रां ह्रीं ह्रूं ह्रः कराले ! भगवति ! वरदे ! रुद्रनेत्रे ! सुकान्ते !
आं ईं उं क्षोभयन्ती त्रिभुवनमखिलं तत्त्वतेजःप्रकाशि
ज्वां ज्वीं ज्वीं सच्चबीजे प्रलयविषयुते ! पाहि मां देवि ! चक्रे* ! ॥४॥
ॐ ह्रीं ह्रूं ह्रः सहर्षे [र्षं] हहहहहहसिते[1] चक्रसङ्काशबीजे !
ह्रॉं ह्रीं ह्रः यः क्षीरवर्णे ! कुवलयनयने ! विद्रवं द्रावयन्ती ।

---

* क्षां क्षीं क्षुं क्षोभयन्ती विषमविषयुते ! पाहि मां देवि ! चक्रे !—पाठान्तरे

१—हरहसितसिते

ह्रीं ह्रीं (ह्रौं) ह्रः क्षः त्रिलोकैरमृतजरजरैर्वारिणैः प्लावयन्ती
ह्रां ह्रीं ह्रीं चन्द्रनेत्रे ! भगवति सततं पाहि मां देवि ! चक्रे ![1] ॥५॥
आँ आँ आँ ह्रीं युगान्ते प्रलयविचयुते[2] कारकोटिप्रतापे !
चक्राणि भ्रामयन्ती विमलवरभुजे पद्ममेकं फलं च ।
सच्चक्रे कुङ्कमाङ्गैर्विधृतवि[व]निरुहं तीक्ष्णरौद्रप्रचण्डे
ह्रीं ह्रीं ह्रींकारकारीरमरगणतनो [वो] पाहि मां देवि ! चक्रे ! ॥६॥
श्राँ श्रीं श्रूँ श्रः [3]सवृत्तिस्त्रिभुवनमहिते नादबिन्दुत्रिनेत्रे
वं वं वं वज्रहस्ते ललललललिते नीलशोनीलकोषे ।
चं चं चं चक्रधारी चलचलचलते[4] नूपुरालीढलोले
त्वं लक्ष्मीं श्रीसुकीर्तिं सुरवरविनते पाहि मां देवि ! चक्रे ! ॥७॥
ॐ ह्रीं हूँकारमन्त्रे कलिमलमथने[5] तुष्टिवश्याधिकारे
ह्रीं ह्रौं ह्रः यः प्रघोषे प्रलययुगजटीज्ञेयशब्दप्रणादे ।
यां यां यां क्रोधमूर्ते ! ज्वलज्वलज्वलिते ज्वालसंज्वाललीढे
आँ ह्रूँ ॐ अः प्रघोषे प्रकटितदशने पाहि मां देवि ! चक्रे ! ॥८॥
यः स्तोत्रं मन्त्ररूपं पठति निजमनोभक्तिपूर्वं शृणोति
त्रैलोक्यं तस्य वश्यं भवति बुधजनो वाक्पटुत्वञ्च दिव्यं ।
सौभाग्यं स्त्रीषु मध्ये खगपतिगमने गौरवं त्वत्प्रसादात्
डाकिन्यो गुह्यकाश्च विदधति न भयं चक्रदेव्याः स्तवेन ॥९॥

॥ इति श्रीचक्रेश्वरीदेवीस्तोत्रम् ॥

---

१–ज्वां ज्वीं ज्वीं सत्त्वबीजे ! प्रलयविषयुते पाहि मां देवि ! चक्रे !
२–प्रलयदिनकरे, ३–प्रवृत्तिः, ४–कलिते
५–कलिकलिमथने

## परिशिष्ट २४

# ॥ श्रीचतुःषष्टियोगिनीस्तोत्रम् ॥

ॐ ह्रीं दिव्ययोगी १ महायोगी २ सिद्धयोगी ३ गणेश्वरी ४ ।
प्रेताशी ५ डाकिनी ६ काली ७ कालि(ल)रात्रि ८ निशाचरी ९ ॥१॥
हुंकारी १० सिद्धवैताली ११ ह्रींकारी १२ भूतडामरी १३ ।
ऊर्ध्वकेशी १४ विरूपाक्षी १५ शुष्काङ्गी १६ नरभोजिनी १७ ॥२॥
षट्कारी १८ वीरभद्रा च १९ धूम्राक्षी २० कलहप्रिया २१ ।
राक्षसी २२ घोररक्ताक्षी २३ विश्वरूपा २४ भयंकरी २५ ॥३॥
वैरी २६ कुमारिका २७ चण्डी २८ वाराही २९ मुण्डधारिणी ३० ।
भास्करी ३१ राष्ट्रटङ्कारी ३२ भीषणी ३३ त्रिपुरान्तका३४ ॥४॥
रौरवी ३५ ध्वंसिनी ३६ क्रोधा ३७ दुर्मुखी ३८ प्रेतवाहनी ३९ ।
खट्वाङ्गी ४० दीर्घलंबोष्ठी ४१ मालिनी ४२ मन्त्रयोगिनी ४३ ॥५॥
कालिनी ४४ त्राहिनी ४५ चक्री ४६ कंकाली ४७ भुवनेश्वरी ४८ ।
कटी ४९ निकटी ५० माया च ५१ वामदेवा कपर्दिनी ५२ ॥६॥
केशमर्दी च ५३ रक्ता च ५४ रामजंघा ५५ महर्षिणी ५६ ।
विशाली ५७ कार्मुकी ५८ लोला काकदृष्टिरधोमुखी ५९ ॥७॥
मडोयधारिणी ६० व्याघ्री ६१ भूतादिप्रेतनाशिनी ६२ ।
भैरवी च महामाया ६३ कपालिनी वृथाङ्गनी ६४ ॥८॥
चतुषष्टिः समाख्याता योगिन्यो वरदाः प्रदाः ।
त्रैलोक्ये पूजिता नित्यं देवमानवयोगिभिः ॥९॥
चतुर्दश्यां तथाष्टम्यां संक्रातौ नवमीषु च ।
यः पठेत् पुरतो भूत्वा तस्य विघ्नं प्रणश्यति ॥१०॥
राजद्वारे तथोद्वेगे संग्रामे अरिसंकटे ।
अग्निचौरनिपातेषु सर्वग्रहविनाशिनि ॥११॥
य इमां जपते नित्यं शरीरे भयमागते ।
स्मृत्वा नारायणी देवी सर्वोपद्रवनाशिनी ॥१२॥

## परिशिष्ट २५

# ज्वालामालिनीमन्त्रस्तोत्रम्।

ॐ नमो भगवते श्रीचन्द्रप्रभजिनेन्द्राय शशाङ्कशङ्खगोक्षीरहारधवलगात्राय घातिकर्मनिर्मूलोच्छेदनकराय जातिजरामरणविनाशनाय त्रैलोक्यवशङ्कराय सर्वासत्त्वहितङ्कराय सुरासुरेन्द्रमुकुटकोटिघृष्टपादपीठाय संसारकान्तारोन्मूलनाय अचिन्त्यबलपराक्रमाय अप्रतिहतचक्राय त्रैलोक्यनाथाय देवाधिदेवाय धर्मचक्राधीश्वराय सर्वविद्यापरमेश्वराय कुविद्यानिधनाय,

तत्पादपङ्कजाश्रमनिषेविणि ! देवि ! शासनदेवते ! त्रिभुवनसङ्क्षोभिणि ! त्रैलोक्याशिवापहारकारिणि ! स्थावरजङ्गमविषमविषसंहारकारिणि ! सर्वाभिचारकर्मापहारिणि ! परविद्याच्छेदिनि ! परमन्त्रप्रणाशिनि ! अष्टमहानागकुलोच्चाटनि ! कालदुष्टमृतकोत्थापिनि ! सर्वविघ्नविनाशिनि ! सर्वरोगप्रमोचनि ! ब्रह्मविष्णुरुद्रेन्द्रचन्द्रादित्यग्रहनक्षत्रोत्पातमरणभयपीडासंमर्दिनि ! त्रैलोक्यमहिते ! भव्यलोकहितङ्करि ! विश्वलोकवशङ्करि ! अत्र महाभैरवरूपधारिणि ! महाभीमे ! भीमरूपधारिणि ! महारौद्रि ! रौद्ररूपधारिणि ! प्रसिद्धसिद्धविद्याधरयक्षराक्षसगरुडगन्धर्वकिन्नरकिंपुरुषदैत्योरगरुद्रेन्द्रपूजिते ! ज्वालामालाकरालितदिगन्तराले ! महामहिषवाहने ! खेटककृपाणत्रिशूलहस्ते ! शक्तिचक्रपाशशरासनविशिखपविराजमाने ! षोडशार्द्धभुजे ! एहि एहि ह्म्ल्व्र्यूं ज्वालामालिनि ! ह्रीं क्लीं ब्लूं फट् द्रां द्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रीं देवान् आकर्षय आकर्षय, सर्वदुष्टग्रहान् आकर्षय आकर्षय, नागग्रहान् आकर्षय आकर्षय, यक्षग्रहान् आकर्षय आकर्षय, राक्षसग्रहान् आकर्षय आकर्षय, गान्धर्वग्रहान् आकर्षय आकर्षय, गान्धार्यग्रहान् आकर्षय आकर्षय, ब्रह्मग्रहान् आकर्षय आकर्षय, भूतग्रहान् आकर्षय आकर्षय, सर्वदुष्टान् आकर्षय आकर्षय, चोरचिन्ताग्रहान् आकर्षय आकर्षय, कटकट कम्पावय कम्पावय, शीर्षं चालय चालय, बाहुं चालय चालय, गात्रं चालय चालय, पादं चालय चालय, सर्वाङ्गं चालय चालय, लोलय लोलय, धूनय धूनय, कम्पय कम्पय, शीघ्रमवतारं गृण्ह गृण्ह,

ग्राहय ग्राहय, अचेलय अचेलय आवेशय आवेशय इम्ल्व्र्यूँ ज्वालामालिनि ! ह्रीं क्लीं ब्लूँ द्रां द्रीं ज्वल ज्वल र र र  र र र रां प्रज्वल प्रज्वल, हूँ प्रज्वल प्रज्वल, धगधगधूमान्धकारिणि ! ज्वल ज्वल, ज्वलितशिखे ! देवग्रहान् दह दह, गन्धर्वग्रहान् दह दह, यक्षग्रहान् दह दह, भूतग्रहान् दह दह, ब्रह्मराक्षसग्रहान् दह दह, व्यन्तरग्रहान् दह दह, नागग्रहान् दह दह, सर्वदुष्टग्रहान् दह दह, शतकोटिदैवतान् दह दह, सहस्रकोटिपिशाचराजान् दह दह, घे घे स्फोटय स्फोटय, मारय मारय, दहनाक्षि ! प्रलय प्रलय, धगधगितमुखे ! ज्वालामालिनि ! ह्राँ ह्रीं ह्रूं ह्रौं ह्रः सर्वग्रहहृदयं दह दह, पच पच, छिन्द छिन्द, भिन्धि भिन्धि हः हः हाः हाः हेः हेः हुं फट् फट् घे घे क्ष्म्ल्व्र्यूँ क्ष्राँ क्ष्रीं क्ष्रूँ क्ष्रौं क्ष्रः स्तम्भय स्तम्भय, हा पूर्वं बन्धय बन्धय, दक्षिणं बन्धय बन्धय, पश्चिमं बन्धय बन्धय, उत्तरं बन्धय बन्धय, भ्म्ल्व्र्यूँ भ्राँ भ्रीं भ्रूँ भ्रौं भ्रः ताडय ताडय, म्म्ल्व्र्यूँ म्राँ म्रीं म्रूँ म्रौं म्रः नेत्रे यः स्फोटय स्फोटय, दर्शय दर्शय, ह्म्ल्व्र्यूँ प्राँ प्रीं प्रूँ प्रौं प्रः प्रेषय प्रेषय, घ्म्ल्व्र्यूँ घ्राँ घ्रीं घ्रूँ घ्रौं घ्रः जठरं भेदय भेदय, झ्म्ल्व्र्यूँ झ्राँ झ्रीं झ्रूँ झ्रौं झ्रः मुष्टिबन्धेन बन्धय बन्धय, ख्म्ल्व्र्यूँ ख्राँ ख्रीं ख्रूँ ख्रौं ख्रः ग्रीवां भञ्जय भञ्जय, छ्म्ल्व्र्यूँ छ्राँ छ्रीं छ्रूँ छ्रौं छ्रः अन्तराणि छेदय छेदय, त्म्ल्व्र्यूँ त्राँ त्रीं त्रूँ त्रौं त्रः महाविद्यापाषाणास्त्रैः हन हन, व्म्ल्व्र्यूँ व्राँ व्रीं व्रूँ व्रौं व्रः समुद्रे ! जृम्भय जृम्भय, ड्राँ ड्रः ध्राँ ड्राँ ध्रः सर्वडाकिनीः मर्दय मर्दय, सर्वयोगिनीः तर्जय तर्जय, सर्वशत्रून् ग्रस ग्रस, खं खं खं खं खं खं खादय खादय, सर्वदैत्यान् विध्वंसय विध्वंसय सर्वमृत्यून् नाशय, नाशय, सर्वोपद्रवं महाभयं स्तम्भय स्तम्भय, दह २ पच २ मथ २ ययः २ धम २ धरू २ खरू २ खङ्गरावणसुविद्या घातय२ पातय २ सच्चन्द्रहासशस्त्रेण छेदय २ भेदय२ झरू २ छरू२ हरू २ फट् २ घेः हाँ हाँ आँ क्रोँ क्ष्वीं ह्रीं क्लीं ब्लूँ द्रां द्रीं क्रोँ क्ष्वीं क्ष्वीं क्ष्वीं क्ष्वीं ज्वालामालिनी आज्ञापयति स्वाहा ॥

इति सर्वरोगहरस्तोत्रम् ॥

---

# श्रीमायाबीजस्तोत्रम् ।

सुवर्णवर्णं लयमध्यसिद्धमधीश्वरं भास्वरभानुरूपम् ।
खण्डेन्दुबिन्दुस्फुटनादशोभं त्वां शक्तिबीजं प्रमनाः प्रणौमि ॥१॥
ह्रींकारमेकाक्षरमादिरूपं त्रैलोक्यवर्णं परमेष्ठिबीजम् ।
मायाक्षरं कामदमादिमन्त्रं तज्ज्ञाः स्तुवन्तीश ! भवन्तमित्थम् ॥२॥
शैक्षः सुशिक्षां सुगुरोरवाप्य शुचिर्वशी धीरमनाश्च मौनी ।

त्वदात्मबीजस्य तनोति जापमपांशु नित्यं विधिना विधिज्ञः ॥३॥
त्वां चिन्तयन् श्वेतकरानुकारं ज्योत्स्नामयीं पश्यति यस्त्रिलोकीम् ।
श्रयन्ति तं तत्क्षणतोऽनवद्याः विद्याकलाशान्तिकपौष्टिकानि ॥४॥
त्वामेव बालारुणमण्डलाभं स्मृत्वा जगत्त्वत्करजालदीप्रम् ।
विलोकते यः किल तस्य विश्वं विश्वं भवेद् वश्यमवश्यमेव ॥५॥
यस्तप्तचामीकरचारुदीप्रं पिङ्गप्रभं त्वां कलयेत् समन्तात् ।
सदा मुदा तस्य गृहे सहेलं करोति केलिं कमला चलापि ॥६॥
यः श्यामलं कज्जलमेचकाभं त्वां वीक्षते चातुषधूमधूम्रम् ।
विपक्षपक्षः खलु तस्य वाताहताभ्रवद् यात्यचिरेण नाशम् ॥७॥
आधारकन्दोद्गततन्तुसूक्ष्मलक्ष्मोन्मिषद्ब्रह्मसरोजवासम् ।
यो ध्यायति त्वां स्रवदिन्दुबिम्बामृतः स च स्यात् कविसार्वभौमः ॥८॥
षड्दर्शनी स्वस्वमतावलेपात् स्वे दैवते तन्मयबीजमेव ।
ध्यात्वा तदाराधनवैभवेन भवेदजेया परवादिवृन्दैः ॥९॥
किं मन्त्रतन्त्रैर्विविधागमोक्तिदुःसाधसंशीतिफलाल्पलाभैः ॥
सुसाध्यसद्यःफलचिन्तितार्थाधिकप्रदश्चेतसि चेत् त्वमेकः ॥१०॥
चौरारिमारिग्रहरोगलूताभूतादिदोषानिलबन्धनोत्थाः ।
भियः प्रभावात् तव दूरमेव नश्यन्ति पारीन्द्ररवाद्विभाः ॥११॥
प्राप्नोत्यपुत्रः सुतमर्थहीनः श्रीदायते पत्तिरपीशते इह ।
दुःखी सुखी वाऽथ भवेन्न किं किं त्वद्रूपचिन्तामणिचिन्तितेन ॥१२॥
पुष्पादिजापामृतहोमपूजाक्रियाधिकारः सकलोऽस्तु दूरे ।
यः केवलं ध्यायति बीजमेव सौभाग्यलक्ष्मीर्वृणुते स्वयं तम् ॥१३॥
त्वत्तोऽपि लोकः सुकृतार्थकाममोक्षान् पुमर्थांश्च नरा लभन्ते ।
यास्यन्ति याता अथ यान्ति ये वा श्रेयःपदं त्वन्महिमालवः सः ॥१४॥
विधाय या प्राक् प्रणवं नमोऽन्ते मध्ये च बीजं ननु जञ्जपीति ।
तस्यैकवर्णा वितनोत्यवन्ध्या कामार्जुनी कामितमेव विद्या ॥१५॥

मालामिमां स्तुतिमयीं सगुणां त्रिलोकी-
बीजस्य यः स्वहृदये कुरुते त्रिसन्ध्यम् ।
अङ्केऽष्टसिद्धिरवशा लुठतीह तस्य
नित्यं महोदयपदं लभते क्रमात् सः ॥१६॥

——— ० ———

## ज्वालामालिनी यंत्र ।

| | | |
|---|---|---|
| द्म्ल्व्र्यूं द्म्ल्व्र्यूं द्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>ददादिदी दुदूदेदैदोदौदंदः<br>द्रेद्रैंद्रैंद्रः दुष्टान् वारय २<br>स्वाहा श्रीं नमः १ | ह्म्ल्व्र्यूं ह्म्ल्व्र्यूं ह्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>हहाहिहीहुहूहेहैहोहौहंहः हौं<br>ह्रीं हुँ हः सर्वदुष्टजीवान्<br>वश्यं कुरु२ फट् स्वाहा २ | क्ष्म्ल्व्र्यूं क्ष्म्ल्व्र्यूं क्ष्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>क्षक्षाक्षिक्षीक्षुक्षूक्षेक्षैक्षोक्षौक्षं<br>क्षः सर्वजनवश्यं दुष्टजनवश्यं<br>कुरु २ स्वाहा. ३ |
| भ्म्ल्व्र्यूं भ्म्ल्व्र्यूं भ्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>भभाभिभीभुभूभेभैभोभौभंभः<br>सर्वजनवश्यं दुष्टजनवश्यं<br>कुरु २ स्वाहा श्रीं नमः ४ | म्म्ल्व्र्यूं म्म्ल्व्र्यूं म्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>ममामिमीमुमूमेमैमोमौमंमः<br>सर्वजनवश्यं दुष्टजनवश्यं<br>कुरु २ स्वाहा श्रीं नमः ५ | ज्म्ल्व्र्यूं ज्म्ल्व्र्यूं ज्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>जजाजिजीजुजूजेजैजोजौजंजः<br>सर्वजनवश्यं कुरु २ स्वाहा<br>श्रीं नमः ६ |
| य्म्ल्व्र्यूं य्म्ल्व्र्यूं य्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>ययायियीयुयूयेयैयोयौयंयः<br>सर्वजनवश्यं दुष्टजनवश्यं<br>कुरु २ स्वाहा श्रीं नमः ७ | घ्म्ल्व्र्यूं घ्म्ल्व्र्यूं घ्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>घ्रां घ्रुं घ्रैं घ्रौं दुन घ्रौं घ्रः<br>शशाष्टान् त्रय २ यय नन<br>श्रीघोराक्षयमसुरस्य<br>नमः स्वाहा ८ | क्म्ल्व्र्यूं क्म्ल्व्र्यूं क्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>क्रां क्रीं क्रूं क्रैं क्रौं क्रः दुष्टा<br>घभन् २ पर्यबन्ध परान् निट्<br>ॐ फुट् स्वाहा ९ |
| ख्म्ल्व्र्यूं ख्म्ल्व्र्यूं ख्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>खाँ खें खैं खौं खः दुष्टज-<br>नान् वश्यं जट नमनाग्री<br>भंजय २ स्वाहा कुरुभ्यं नमः<br>१० | च्म्ल्व्र्यूं च्म्ल्व्र्यूं च्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>च्रां च्रीं च्रैं च्रूं च्रैं च्रौं दु-<br>ष्टान् कृजतात्रान् मंथ २<br>छेदय २ ॐ ह्रीं फुट् स्वाहा<br>श्रीं नमः ११ | व्म्ल्व्र्यूं व्म्ल्व्र्यूं व्म्ल्व्र्यूं<br>क्रौं क्रौं क्रौं<br>ज्वालामालिनी देवी नमः<br>व्रां व्रं व्रैं व्रौं व्रैं व्रः दु-<br>ष्टानानि वदनाविरुधवररम-<br>कयकार फुट् २ स्वाहा<br>श्रींनमः १२ |

लक्ष्मीः इदं यन्त्रम् । विधिः—दीपालिकायां कृष्णचतुर्दश्यां षष्ठव्रततपः कृत्वा पवित्रीभूत्वा अष्टगन्धकेन अगुरुधूपोत्क्षेपणपूर्वकं सदशपीताम्बरं परिधाय स्वर्णलेखिन्या लिखनीयम् । ततः षट्कोणैककुण्डं कृत्वा अष्टोत्तरशतसंख्येयनालीकेरपूगीलवंगजातीफलपलादिकपञ्चामृतं सार्द्धपञ्चपञ्चसेरसंख्याकं अग्नौ जुहुयात् । संपूर्णम् ॥

## परिशिष्ट २६

# श्रीगर्भस्तोत्रम्

ह्रींकारोदरवाग्भवैकवसतिर्या कुण्डली कौलिनी
ब्रह्मानन्दमयी परा परकला षड्ग्रन्थिसम्भेदिनी ।
साहस्रं पदपद्मकोटरलसत्सोमेन सार्द्धं मुदा
क्रीडन्ती सुखसम्पदं दिशतु नः श्रीमत्त्रिखण्डेश्वरी ॥१॥

श्रीमत्पञ्चदशाक्षरी शिवकलाधारादिचक्रेषु या
स्फूर्त्तिः पञ्चदशस्तथोनवतया त्रेधापि या संस्थिता ।
उन्मन्यन्तमुपागता कुलकजप्रोद्दामसौदामिनी
मायामोहनिकृन्तिनी निजसुखं मह्यं प्रसद्यात् सदा ॥२॥

कश्चित् पङ्कजसम्भवः करुणया पूर्णस्त्वया विश्वसृक्
वेदादिर्वियदादितत्त्वममलं त्वत्सामरस्यं स्फुटम् ।
तद्वेदत्रिपुरे कृपामृतरसोन्मथ्याऽप्यनन्या श्रिये
दृष्टिं देहि ततः समुज्ज्वलतरानन्दस्वभावो भवे ॥३॥

पतत् ते त्रिपुरे ! त्वदीयवपुषा सा चित्रवर्णाध्वना
व्यस्तं विश्वमनुत्तरोत्तरतया यद्बीजमुद्गीयते ।
तन्मे ताण्डवमण्डितं रसनिका सारस्वतेनाहतं
विस्फूर्जत्कलकोकिलारजतयोद्वेलं जरीजृम्भते ॥४॥

ईकारोऽसि हुताशनेन्दुतपनैर्बिन्दुत्रयैः संयुतः
कामाख्याजननी स्थितिं वितनुते ब्रह्मैकयः केशवः ।
यत्वं देवि ! पुरे सुधारसवचः कल्लोलकल्लोलिनी
जिह्वातः प्रसरीसरीतु भवती कारुण्यतस्तद्द्रुतः ॥५॥

लक्ष्मीं लक्ष्मिललामधामबहुलां मत्तेभकुम्भोच्छल-
दानाम्भोत्कटपूरपङ्कविकटां देह्यम्ब ! मह्यं यतः ।
त्वं सृष्टिस्थितिमेदिनी मधुजितः शक्तिर्विरञ्चेर्निजा
यद्वा वाग्भवमध्यगा विलससि श्रीमत्त्रिखण्डेश्वरि ! ॥६॥

ह्रींकारादिहराब्जयोनिविलसत्संसारसङ्कोचिनी
या बेयारतयेश्वरस्य मह्विता वागेश्वरी जृम्भते ।
बिन्दौ नादतया च बीजवसतिर्याऽनुत्तरा शाम्भवी
श्रीमत्त्रिपुरसुन्दरी विजयते खण्डे स्थिता वास्तवे ॥७॥

हः कामः शिवबीजतो हरिरयं यन्मोहयत्यङ्गना
स्थित्या त्वच्चरणप्रसादवशतः श्रीकामराजादितः ।
मातर्भक्तिसमीहितं सृजति यद्वैर्य......रं श्रयः।
सोऽयं मेऽखिलकाङ्क्षितं वितरतात् कामेश्वरप्रेयसी ॥८॥

सत्तारूपिणि ! सज्जनैकनिलये ! सौभाग्यसम्पत्प्रदे !
सावित्रीति सरस्वतीति गदिता लक्ष्मीस्त्वमेवासि सा ।
तत् कामेश्वरशम्भुपत्नि ! मम यत् काङ्क्षाधिरूढं भवेत्
तद्देहि त्वरितं तपोभिरपि यद् दुष्प्रापमन्यैरपि ॥९॥

कल्याणं कमलापतिः करुणया कामेश्वरः कांक्षितं
दद्यान्मध्यमखण्डतस्तव शवे मध्ये स्थितः कान्मना ।
कन्दर्पप्रतिमः कलासु कुशलः कल्पद्रुमः कामिनां
यस्योच्चारवशेन राजति नरः श्रीमत्त्रिखण्डात्मिके ! ॥१०॥

हस्त्वन्माध्यमखण्डले च वसतिर्योऽम्ब ! द्वितीयस्थितिं
पुष्णात्येकतयैव चाधिकतया बन्धूकपुष्पप्रभः ।
सौभाग्यं परमं स मे वितरता वश्या भवेयुर्यतो
राजानो वरयोषितश्च निभृताः सौख्यश्रियः सम्मना ॥११॥

लक्ष्यं मे मनसो मनोरमतमं सौन्दर्यसीमालयो
बन्धूकप्रभवारुणं करलसच्चापेषु पाशाङ्कुशम् ।
काञ्चीनद्धनितम्बबिम्बसुभगं मध्ये न किञ्चिच्च यत्
रूपं ते कुचचक्रवाकखिलसच्चन्द्रालिकं स्तात् सदा ॥१२॥

ह्रींकारे हरमान्मथोन्दुरणितैः श्रीकामराजान्तिगे
खण्डे मण्डनमावहन्ति हरयः सङ्कोचतः संस्थिते ।

रुद्रः शक्तियुतश्च मन्मथकलाकामेश्वरेणेन्दुना
नादात्मा च परापरेण भवतान्मत्कामसम्पूर्तये ॥१३॥
सच्चित्सौख्यमखण्डितं शिवमयं शक्तिस्वरूपोल्लस-
त्तार्तीये तव संहृतौ प्रथमतः सद्वृत्ततोज्जृम्भते ।
शङ्कातङ्ककलङ्कभावजनितं भेदः प्रथातः शिवे
तन्मे पूर्णशशाङ्कमण्डलनिभं कुर्याद्दशं दूरतः ॥१४॥
कश्चिज्जन्मशतार्जितेन तपसा तत्पादपद्मद्वये
जातप्रीतिरनन्यभावमनसा लब्ध्वा गुरोः सत्कृपाम् ।
कं वेद त्रिपुरे [1]तृतीयशकले कामेश्वराख्यं हरिं
पूर्णानन्दविभूतिदं त्रिजगतीवश्यंकरं तं श्रये ॥१५॥
लब्ध्वादेशकराजवीक्षणकृपां त्वां वेद कामेश्वरीं
धन्यो यस्त्रिपुरे ! त्वदङ्घ्रिकृपया विश्वात्मसाम्राज्यभूः ।
लक्ष्मीस्तं वृणुते कटाक्षवशतस्तस्य ज्वरोपप्लवा
नाशं यान्ति सदा विषाणि च महावेतालभूतग्रहाः ॥१६॥
श्रीमत्यम्ब ! विराजते तव परं खण्डं तृतीयान्तिमं
बीजं तत्र हरौ हरौ प्रथमतो या रुद्रशक्तिः स्वयम् ।
संहारैकरसो मनोभवकलावह्नीन्दुसूरा परा
बिन्दुर्योऽपि परेश्वरो मम सदा कुर्वन्तु ते मङ्गलम् ॥१७॥

---

१ ॐ स्वर्भूभूः रेखा ३ । स्वः—सामवेदः, भूः—यजुर्वेदः, भूः—ऋग्वेदः । पुरुषः, स्त्री, नपुंसकः सत्त्वम् , रजः, तमः, । ब्रह्मा, विष्णुः, महेशः । कल्पवृक्षः, चिन्तामणिः, कामधेनुः । देवतत्त्वम्, गुरुतत्त्वम् , धर्मतत्त्वम् । ज्ञानम् , दर्शनं चारित्रम् च ।

## परिशिष्ट २७

## श्रीधराचार्यविरचितः

# श्रीपद्मावतीस्तोत्रम्

ॐ जयन्तीभमातङ्गी सर्वदुष्टक्षयंकरी ।
पद्मासने पद्मदेवी च महापद्मे नमोनमः ॥१॥
देवी त्वं ध्यायिता इन्द्रे पूजिता शिवसंकरे ।
कृष्णेन संस्तुता देवी महापद्मे नमोनमः ॥२॥
सावित्रि पतिमाराध्य वासुकै सेविता भृशम् ।
तेषां संतुक्षते देवी महापद्मे नमोनमः ॥३॥
पद्माम्बरधरा देवी पद्मद्रहनिवासिनी !
पद्मायुधधरा नित्यं महापद्मे नमोनमः ॥४॥
यस्यां प्रसन्नतां पद्मे तस्यां दारिद्र्यनाशने ।
जय त्वं सुखदाता च महापद्मे नमोनमः ॥५॥
देवि ! दारिद्र्यदग्धाहं तन्मेसं संकरीभव ।
चिंतिता वरदाता च महापद्मे नमोनमः ॥६॥
पद्मावती यस्या गृहे पूजिता जगदीश्वरी ।
हृदये यस्य वर्तन्ते तस्य सौख्यं निरंतरम् ॥७॥
इदं स्तोत्रं पवित्रं च श्रीधराचार्यभाषितं ।
एकाग्रमनसा साध्यं तस्य सौख्यं निरन्तरम् ॥८॥
रणे राजकुले चैव दुर्गमे शत्रुसंकटे ।
महावने महाभीमे विघ्नो यांति दिसो दिसा ॥९॥
अपुत्रो लभते पुत्रं धनार्थी लभते धनं ।
विद्यार्थी लभते विद्यां सुखार्थी लभते सुखं ॥१०॥

॥ इति श्रीपद्मावतीस्तोत्रं सम्पूर्णम् ॥

## परिशिष्ट २८

# श्रीपद्मावतीकवचम् ।

भगवन् ! सर्वमाख्यातं मन्त्रं यन्त्रं शुभप्रदम् ।
पद्मायाः कवचं ब्रूहि यद्यहं तव वल्लभः ॥ १ ॥
महागोप्यं महागुह्यं पद्मायाः सर्वकामदम् ।
कवचं मोहनं देवि ! गुरुभक्ताय दीयते ॥ २ ॥
राज्यं देयं च सर्वस्वं कवचं न प्रकाशयेत् ।
गुरुभक्ताय दातव्यमन्यथा सिद्धिदं न हि ॥ ३ ॥
ऐं बीजम् । क्लीं शक्तिः । ह्सौं कीलकम् ।
पद्मावतीप्रीत्यर्थं जपे विनियोगः ।
ॐ परब्रह्मणे नमः शिरसि । अनुष्टुप्छन्दो यो नमः मुखे ।
श्रीपद्मावतीशक्तिदेवतायै नमः हृदये । आं बीजाय नमः कण्ठे ।
ह्रीं शक्तये नमः गुह्ये । क्रौं कीलकाय नमः पादयोः ।
श्रीपद्मावतीकवचसिद्ध्यर्थं जपे विनियोगः ॥
ॐ पद्मा बीजं शिरः पातु ललाटं पञ्चमी परा ।
नेत्रे कामप्रदा पातु मुखं भुवनसुन्दरी ॥ ४ ॥
नाशिकां नागनाथश्च जिह्वां वागीश्वरी तथा ।
श्रुतिरूपा जगद्धात्री करौ हृत् हिमवासिनी ॥ ५ ॥
उदरं मोहदमनी कुण्डली नाभिमण्डलम् ।
पार्श्वे पृष्ठं कटिं गुह्यं शक्तिस्थाननिवासिनी ॥ ६ ॥
ऊरू जङ्घे तथा पादौ सर्वविघ्नविनाशिनी ।
रक्ष रक्ष महामाये पद्मे ! पद्मालये शिवे ॥ ७ ॥

वाञ्छितं पूरयत्याशु पद्मा सा पातु सर्वतः ।
इदं तु कवचं देव्या यो जानाति स मन्त्रवित् ॥ ८ ॥
राजद्वारे श्मशाने च भूतप्रेतोपचारके ।
बन्धने च महादुःखे भये शत्रुसमागमे ॥ ९ ॥
स्मरणात् कवचस्यास्य भयं किञ्चिन्न जायते ।
प्रयोगमुपचारं च पद्मायाः कर्तुमिच्छति ॥ १० ॥
कवचं प्रपठेदादौ ततः सिद्धिमवाप्नुयात् ।
भूर्यपत्रे लिखित्वा तु कवचं यस्तु धारयेत् ॥ ११ ॥
देहे च यत्र कुत्रापि सर्वसिद्धिर्भवेद् ध्रुवम् ।
शस्त्राग्निजं भयं नैव भूतादिभयनाशनम् ॥ १२ ॥
गुरुभक्तिं समासाद्य पद्मायाः स्तवनं कुरु ।
सहस्रनामपठने कवचं प्रथमं कुरु ॥ १३ ॥
नन्दिना कथितं देवि ! तवाग्रे तत् प्रकाशितम् ।
साङ्गता जायते देवि ! नान्यथा गिरिनन्दिनी ॥ १४ ॥
इदं कवचमज्ञात्वा पद्मायाः स्तौति यो नरः ।
कल्पकोटीशतेनापि न भवेत् सिद्धिदायिनी ॥ १५ ॥

परिशिष्ट २९

# सूरिविद्यास्तोत्रम्

पढमपए सुपइट्ठा विज्जाए सूरिणो गुणनिहिस्स ।
गोयमपयभत्तिजुआ सरस्सई मह सुहं देउ ॥१॥
दुइयट्ठाणनिविट्ठा इमाइ विज्जाइ निरुवममहप्पा ।
तिहुयणसामिणि नाम सहस्सभुयसंजुया संता ॥२॥
सिरिगोयमपयकमलं झायन्ती माणुसुत्तरनगस्स ।
सिहरम्मि ठिया णिच्चं संघस्स य मह सुहं देउ ॥३॥
दुइयट्ठाणनिविट्ठा चउसट्ठिसुराहिवाण मयमहणी ।
सव्वंगभूसणधरा पणमन्ती गोयममुणिंदं ॥४॥
विजया जया जयन्ती नन्दाभद्दासमण्णिआ तइए ।
विज्जापए निविट्ठा सिरिसिरिदेवी सुहं देउ ॥५॥
विज्जाचउत्थट्ठाणे निवेसिओ गोयमस्स अभिमुहिओ ।
गणिपिडजक्खराओ अणपणपण्णीकयपइट्ठो ॥६॥
सोलसहस्सजक्खाण सामिओऽतुलबलो य वीसभुओ ।
जिणसासणपडिणीयं मह रिउवग्गं निवारेउ ॥७॥
सोहम्मकप्पवासी एरावणवाहणो य वज्जकरो ।
सेवइ तियसाहिवई सगोयमं मन्तवररायं ॥८॥
ईसाणकप्पवासी सूलकरो वसहसंठिओ निच्चं ।
सेवइ तियसाहिवई सगोयमं मन्तवररायं ॥९॥
तइयकप्पनिवासी सिरिसुमणो नामओ य चक्कधरो ।
सेवइ तियसाहिवई सगोयमं मन्तवररायं ॥१०॥

सिरिबम्भलोयवासी सोमणसो नामओ य बहुसत्थो ।
सेवइ तियसाहिवई सगोयमं मन्तवररायं ॥११॥
अट्ठकुलनागराओ सहसफणो सिरनिविट्ठकरमउलो ।
सेवइ धरणिंदो चिय सगोयमं मन्तवररायं ॥१२॥
रोहिणिपमुहा देवी चउसट्ठिसुराहिवा तहा अन्ने ।
सेवइ गोयमचरणे जक्खा जक्खाण चउवीसं ॥१३॥
कणयमयसहस्सपत्ते कमलम्मि निवेसिओ उ लद्धिजुओ ।
बहुपाडिहेरकलिओ झायव्वो गोयममुणिंदो ॥१४॥
ऑं क्रौँ ह्रीं श्रीं एएणं मन्तेणं झाणारंभे ठविज्जए णिच्चं ।
अंगुलिमुद्दाकरणे सन्निहियसुरस्स समवाओ ॥१५॥
सन्निहियसुरवराणं उस्सग्गो कीरए सुपूया य ।
कप्पूरधूववासेहिं सव्वहा विहियबम्भवओ ॥१६॥
थोवजलविहियन्हाणो वरवत्थविभूसिओ य तिक्कालं ।
कम्मक्खयहेउं जो सुमरइ विज्जं इमं लक्खं ॥१७॥
ॐ किरिपिरिसिरिहिरि आयरिय पयस्स मन्तरायस्स ।
जावं तिलक्खमाणं करेइ जो सो गोयमो होइ ॥१८॥
सोहणपयपरमिट्ठी पवयणसुरही कयंजली चेव ।
मुद्दापञ्चक्कमेय कायव्वं सव्वकालच्चं ॥१९॥
किं चिंतामणिकामधेणुकप्पदुदुमसुंदरु
नवनिहिचउदसरयणपवरचक्कित्तणुसहयरु ।
जा मुणिवइसिरिसूरिविज्जगोयमसुपइट्ठिय
भुवणत्तय अक्खलियमहप्प निट्ठियकम्मट्ठय ॥२०॥

## परिशिष्ट ३०

### आचार्यश्रीभद्रगुप्तविरचिता

# अनुभवसिद्धमन्त्रद्वात्रिंशिका ।

प्रणम्य श्रीमहावीरं विद्यारत्नमहानिधिम् ।
मन्त्रद्वात्रिंशिकां वक्ष्ये सर्वकार्यप्रसाधिकाम् ॥१॥
स्तम्भनं मोहमुच्चाटं वश्याकर्षणजम्भनम् ।
विद्वेषणं मारणं च शान्तिकं पौष्टिकं तथा ॥२॥
मुक्तिमार्गं च शास्त्रेऽत्र भणिष्यामि यथाविधि ।
एकाग्रीभूय भो भव्याः श्रूयतां भक्तिपूर्वकम् ॥३॥
[1]सर्वज्ञाभं महामन्त्रं सर्वकल्याणकारकम् ।
सर्वकर्मकरं चैव साधयेच्च यथाविधि ॥४॥
ब्रह्मत्रिलोककमला अकारं नमसोऽक्षरम् ।
रेफबिन्दुकलाक्रान्तं नमश्च मन्त्र उच्यते ॥५॥
[2]पीतं स्तम्भेऽरुणं वश्ये क्षोभणे विद्रुमप्रभम् ।
कृष्णं विद्वेषणे ध्यायेत् कर्मघाते शशिप्रभम् ॥६॥
द्वादशसहस्रजापो दशांशहोमेन सिद्धिमुपयाति ।
मन्त्रो गुरुप्रसादाद् ज्ञातव्यस्त्रिभुवने सारः ॥७॥

---

श्रीयोगशास्त्रस्वोपज्ञवृत्त्यनुसारि टिप्पनकम् ।

१ ॐ श्रीं ह्रीं अर्हं नमः इत्येवं लक्षणम् ।

२ यद्यपि कर्मघातार्थिनां शशिप्रभस्यैव प्रणवस्य ध्यानमुक्तम्, तथापि तत्तद्द्रव्यक्षेत्रकालभावसामग्रीवशेन पीतादिध्यानान्यपि कदाचिदुपकारिणीत्येतदुपदिष्टम् । (यो. प्र. ८ श्लो, ३१) ।

[1]विद्याप्रवादपूर्वस्य तृतीयप्राभृतादयम्।
उद्धृतः कर्मघाताय श्रीवीरस्वामिसूरिभिः ॥८॥
[2]नासाग्रे प्रणवं शून्यमनाहतमिति त्रयम्।
ध्यायन् गुणाष्टकं लब्ध्वा ज्ञानमाप्नोति निर्मलम् ॥९॥
शङ्खकुन्दशशाङ्काभांस्त्रीनमून् ध्यायतः सदा।
समग्रविषयज्ञानप्रागल्भ्यं जायते सदा[3] ॥१०॥
द्विपार्श्वप्रणवद्वन्द्वं प्रान्तयोर्मायया वृतम्।
सोऽहं मध्ये विमूर्धानं अर्हंकारं[4] विचिन्तयेत्[5] ॥११॥
[6]कामधेनुमिवाचिन्त्यफलसम्पादनक्षमाम्।
अनवद्यां जपेद् विद्यां गणभृद्वदनोद्गताम् ॥१२॥
[7]षट्कोणेऽप्रतिचक्रे फडिति प्रत्येकमक्षरम्।
सव्ये न्यसेत् विचक्राय स्वाहा बाह्येऽपसव्यतः ॥१३॥
भूतान्तं बिन्दुसंयुक्तं तन्मध्ये न्यस्य चिन्तयेत्।
नमो जिणाणमित्याद्यैरोंपूर्वैर्वेष्टयेद् बहिः ॥१४॥
[8]कर्मदावहुताशस्य प्रशान्तिमेव वारिदम्।
गुरूपदेशाद् विज्ञाय सिद्धचक्रं विचिन्तयेत् ॥१५॥

---

१ सन्तुल्यतां यो. प्र. ८ (श्लो. ७४.)।

२ ओम् हं, अष्टौ गुणा अणिमादयः। यो. ३ ०नृणाम्०।

४ यो. ०अर्हम्लीँकारं०।

५ ह्रौं ॐ ॐ सः अर्हम्लीँ हं ॐ ॐ ह्रौं।

६ विद्या च ॐ जोग्गे मग्गे तच्चे भूए भविस्से अन्ते पक्खे जिणपार्श्वे स्वाहा।

७ ॐ नमो जिणाणं, ॐ नमो ओहिजिणाणं, ॐ नमो परमोहिजिणाणं, ॐ नमो सव्वोसहिजिणाणं, ॐ नमो अणंतोहिजिणाणं, ॐ नमो कुट्ठबुद्धीणं, ॐ नमो बीयबुद्धीणं, ॐ नमो पदानुसारीणं, ॐ नमो संभिन्नसोयाणं, ॐ नमो उज्जुमईणं, ॐ नमो विउलमईणं, ॐ नमो दसपुव्वीणं, ॐ नमो चउदसपुव्वीणं, ॐ नमो अट्ठङ्गमहानिमित्तकुसलाणं, ॐ नमो विउव्वणइड्ढिपत्ताणं, ॐ नमो विज्जाहराणं, ॐ नमो चारणाणं, ॐ नमो पण्णसमणाणं, ॐ नमो आगासगामीणं, ॐ ज्झौं ज्सौं श्रींह्रींधृतिंकीर्तिंबुद्धिलक्ष्मी स्वाहा, इतिपदैर्वलयं पूरयेत्। पञ्चनमस्कारेण पञ्चांगुलीन्यस्तेन सकलीक्रियते। तद्यथा—ॐ नमो अरिहन्ताणं ह्रीं स्वाहा अंगुष्ठे, ॐ नमो सिद्धाणं ह्रीं स्वाहा तर्जन्याम्, ॐ नमो आयरियाणं ह्रूँ स्वाहा मध्यमायाम्, ॐ नमो उवज्झायाणं ह्रैं स्वाहा अनामिकायाम्, ॐ नमो लोए सव्वसाहूणं ह्रौं स्वाहा कनिष्ठायाम्, एवं वारत्रयमंगुलीषु विन्यस्य मस्तकस्योपरि पूर्वदक्षिणापरोत्तरेषु भागेषु विन्यस्य जपं कुर्यात्॥

८ यो. ०जन्मदाव०।

चीर्णैरपि चिरं कालं तपोभिरमलैः सदा।
कथञ्चित् प्राप्यते पुम्भिः महामन्त्रो महागुणः ॥१६॥
अनाख्येयमसाधूनां साधूनामपि यत्नतः।
कथ्यमेकान्तदेशेषु मन्त्रस्यास्य स्वरूपकम् ॥१७॥
मूलमन्त्रोऽपि व्याख्येयो महागुणविवर्द्धनः।
येन विज्ञातमात्रेण सम्पदः सर्वतोमुखाः ॥१८॥
त्रिभुवनस्वामिनीं विद्यां त्रिभुवनस्वामितास्पदम्।
विद्यां स्मरत हे धीरा! यद्यक्षयसुखेच्छवः ॥१९॥
लक्षैकस्य प्रजापेन प्रसूनैर्जातिसम्भवैः।
दशांशहोमतो याति सिद्धिं विद्या प्रसाधिता ॥२०॥

इत्याचार्यश्रीभद्रगुप्तविरचितायामनुभवसिद्धमन्त्रद्वात्रिंशिकायां सर्वकर्मकर-मन्त्राष्टकवर्णनो नाम प्रथमोऽधिकारः ॥१॥

卐

अथातः संप्रवक्ष्यामि वश्याकर्षणमुत्तमम् ।
येन विज्ञातमात्रेण सुखं सम्पद्यतेऽद्भुतम् ॥१॥
प्रणवं मायया युक्तं कमलायुतमेव च ।
कलिकुण्डमुद्यतं चापि स्वामिने वशमानय ॥२॥
पुनरानय स्वाहेति मन्त्रः पार्श्वजिनाग्रतः ।
त्रिरात्रं साधितः पुष्पैरयुतेन वशंवदः ॥३॥
प्रणवं कामबीजं च मायाबीजं तथैव च ।
अधोरेफयुतं शून्यं वाग्बीजेन प्रसंयुतम् ॥४॥
मायावाग्भवबीजेन सहिता मायया पुनः।
शून्यं रेफेण संयुक्तं सपाशं सविसर्गकम् ॥५॥
श्रीअपराजितदेव्या मन्त्रोऽयमपराजितः ।
लक्षत्रितयजापेन सिद्धिं याति सुनिश्चितम् ॥६॥
पिण्डाकृष्टिं फलाकृष्टिं द्रव्याकृष्टिं च कामिताम् ।
वस्त्राद्याकर्षणं सर्वं कुरुते नात्र संशयः ॥७॥
वश्या भवन्ति कामिन्यो भ्रश्यत्परिहिताम्बराः ।
आजन्म दास्यभावं च भजन्ते नात्र संशयः ॥८॥
यद् यत् कामयते सर्वं तत् सद्यस्तस्य जायते ।
मन्त्रराजप्रसादेन फलमस्य न संशयः ॥९॥
प्रणवं पार्श्वनाथाय मायाबीजं तथैव च ।
एवं लक्षप्रजापेन मन्त्रोऽयं सिद्ध्यति स्फुटम् ॥१०॥
नारीणां पुरुषाणां च भूपतीनां विशेषतः ।
आराध्यमानो यत्नेन दशाहेन वशङ्करः ॥११॥
सहस्रमेकं यत्नेन दशाहं प्रतिवासरम् ।
पदभ्रष्टो जपेद् यस्तु स सद्यो लभते पदम् ॥१२॥
वाञ्छितानि च जन्तूनां फलान्यस्य प्रभावतः ।
कल्पद्रोरिव जायन्ते नानारूपाणि नित्यशः ॥१३॥
पाशं पाशयुतं शून्यं विषघ्नं मङ्गलं तथा।
कल्याणं चेति मन्त्रोऽयं पार्श्वयक्षाभिधानतः ॥१४॥
देयोऽयं भक्तियुक्ताय सूर्यचन्द्रोपरागयोः।
दीपोत्सवेऽथवा मन्त्रो रहस्सु गुरुपूजया ॥१५॥

तेनापि भक्तियुक्तेन शुद्धचित्तेन सन्ततम्।
मायामदवियुक्तेन क्रोधलोभमदोज्झिना ॥१६॥
सत्यवाक्यप्रधानेन गुरुपादोपसर्पिणा।
एकभक्तोषितेनैव ब्रह्मचर्यविधायिना ॥१७॥
सहस्रैकस्य जापेन षण्मासान् प्रतिवासरम्।
श्रीमत्पार्श्वजिनेन्द्रस्य गुरुपूजापुरस्सरम् ॥१८॥
ध्यातव्यः सुधिया नित्यं मन्त्रोऽयममरार्चितः।
सिद्धिं याति ततस्तस्य महासत्त्वशिरोमणेः ॥१९॥
यस्यायं सिद्ध्यते मन्त्रो वशे तस्य वसुन्धरा।
सद्यो भवति मर्त्यस्य कर्तव्यो नात्र संशयः ॥२०॥
द्वारे तस्य च गर्जन्ति शैलोत्तुङ्गशरीरकाः।
मुहुःस्रवन्मदासारसिक्तोर्वीका मतङ्गजाः ॥२१॥
हेषन्ति च हया द्वारे वेगनिर्जितवायवः।
प्रणतिं यान्ति पादानां तस्य स्फारितभक्तिकम् ॥२२॥
पादपीठलुठन्मूर्धमुकुटकोटितटोत्कटाः।
पादयोस्तस्य भूपाला लुठन्ति बहुमानिनः ॥२३॥
न दोषान् कोऽपि गृह्णाति गुणान् सर्वोऽपि भाषते।
तस्य सौभाग्ययुक्तस्य यस्य तुष्टो जिनेश्वरः ॥२४॥
ब्रह्मत्रिलोककमलामूलबीजत्रयं ततः।
कलिकुण्डलदण्डाय ह्रींनमश्चाक्षराणि च ॥२५॥
रविसङ्ख्यसहस्राणि प्रसूनैर्जातिसम्भवैः।
पयःपूर्णालुकामध्ये जापं कुर्याज्जिनाग्रतः ॥२६॥
सिद्धिं याति ततो मन्त्रः पार्श्वस्यैव प्रभावतः।
कामदो मोक्षदश्चापि भक्तिभाजां शरीरिणाम् ॥२७॥
रक्षोयक्षोरगव्याघ्रव्यालानलगरादयः।
नापकर्तुमलं तेभ्यो ये चास्य शरणं गताः ॥२८॥
वह्निव्याधिपयोनिधिहरिकरिफणिचौरसंयुगादीनाम्।
भयमखिलमस्य संस्मृतिमात्रादपि देहिनां व्रजति ॥२९॥
व्यन्तरविषविषमज्वरदुष्टग्रहशाकिनीप्रमुखदोषाः।
दूरे तस्य वहन्ते यस्यायं भवति हृदयस्थः ॥३०॥

सद्यो दासति कर्षितकरालकरवालकोपितः शत्रुः ।
श्रीपार्श्वमन्त्रमुच्चैरुच्चरतां देहिनां नित्यम् ॥३१॥

निन्दूविरूपवन्ध्याशल्यवतीदुर्भगादिदोषत्वम् ।
भजते न जातु जिनवरवरमन्त्रपरायणो जन्तुः ॥३२॥

कीर्तिः कमला रमणी राज्यं सौभाग्यमाशु सौख्यानि ।
मन्त्रे लब्धेऽप्यस्मिन्निह जन्तोः सपदि जायन्ते ॥३३॥

तममररमणीनिकरः सरभसमभिसरति दिव्यविश्रान्तम् ।
लावण्यसिन्धुगाहनगिरिराजे यस्य चैतसी वृत्तिः ॥३४॥

येषां परमब्रह्मणि मन्त्रेऽस्मिन् परममानसी प्रीतिः ।
ते हन्त साभिलाषं वीक्ष्यन्ते मुक्तिकामिन्या ॥३५॥

वाग्भवं कामबीजं च सान्तं षान्तेन संयुतम् ।
ओंकारेण युतं चापि मन्त्रं वश्यकरं परम् ॥३६॥

ऊर्ध्वाधोरेफसंयुक्तं षष्ठमस्वरभूषितम् ।
नादबिन्दुकलाक्रान्तं साध्यनामैकगर्भितम् ॥३७॥

तद्बाह्येऽष्टदलं पद्मं कर्णिकाकोटिभूषितम् ।
तत्र चों पार्श्वनाथाय स्वाहेति पदमुल्लिखेत् ॥३८॥

स्वराः षोडश तद्बाह्ये हरहरेति ततो बहिः ।
कादिक्षान्तपदैः पश्चात् पूरयेत् सततं बहिः ॥३९॥

मायाबीजेन तद्बाह्ये रेखात्रितयवेष्टितम् ।
भूर्जपत्रे लिखेच्चक्रं सर्वसम्पत्तिकारणम् ॥४०॥

कर्पूरागरुकस्तूरीकुङ्कुमादिसुगन्धिभिः ।
विलेख्यं जातिलेखिन्या शुभलग्ने शुभे दिने ॥४१॥

वेष्ट्यं कुमारसूत्रेण बाहौ बद्धं च देहिनाम् ।
सौभाग्यभाग्यमुख्यानि सौख्यानि कुरुते क्षणात् ॥४२॥

प्रणवं माययोपेतं कमलालङ्कृतसन्निधिम् ।
मायायुक्तं पुनर्नामगर्भितं कमलोदरे ॥४३॥

बहिरष्टदलाक्रान्तमायाबीजसमन्वितम् ।
बहिः प्रणवह्रींकारपार्श्वनाथाय ह्रीं नमः ॥४४॥

लिखित्वा पूजयेद् भूर्जे सुगन्धद्रव्ययोगतः ।
कन्यासूत्रेण संवेष्ट्य धारणीयं करादिषु ॥४५॥

भूतादिदोषविद्रावं योषिता गर्भसम्भवम् ।
सौभाग्यादिगुणाश्चैवं यन्त्रमेतत् करोत्यहो ॥४६॥
प्रणवं परमं तत्त्वं मायाबीजविराजितम् ।
परमेष्ठ्यादिपदं चैव ह्रींकारं च नमः पदम् ॥४७॥
त्रिसन्ध्यं विजने भूत्वा जातिपुष्पैरथोत्तमैः ।
अष्टोत्तरशतं जाप्यमस्य सर्वार्थसिद्धये ॥४८॥
इत्याकृष्टि च वश्यादौ मन्त्राष्टकमुदीरितम् ।
श्रुताम्भोधिमवगाह्य रत्नोच्चयमिवोज्ज्वलम् ॥४९॥

इत्याचार्यश्रीभद्रगुप्तविरचितायामनुभवसिद्धमन्त्रद्वात्रिंशिकायां वश्याकृष्ट्यादिकर्मकर मन्त्राष्टकवर्णनो नाम द्वितीयोऽधिकारः ॥

अथातः सम्प्रवक्ष्यामि स्तम्भस्तोभादिकं विधिम् ।
येन विज्ञातमात्रेण जगतोऽजय्यता भवेत् ॥१॥
ऊर्ध्वाधोरेफयुक्तस्य कलाबिन्दुयुतस्य च ।
नामसङ्गर्भितस्याद्योऽग्रन्यवर्णस्य संलिखेत् ॥२॥
परमेष्ठिपञ्चबाह्ये सम्यग्ज्ञानं च दर्शनम् ।
चारित्रं च ततः स्वाहा ॐपूर्वकं ततः स्वरान् ॥३॥
वर्गाष्टकं च पत्रेषु सन्धौ तत्त्वाक्षराणि च ।
मायास्वप्नं कुशरुद्धं रेखात्रितयवेष्टितरू ॥४॥
भूमण्डलं ततः कृत्वा यथाविधि समन्वितम् ।
पट्टे पटे च भूर्जे वा द्रव्यैश्च गुलिकादिभिः ॥५॥
शराः शक्रादिदेवानामपि स्तम्भनमुत्तमम् ।
भाराक्रान्तमिदं चक्रं कुरुते नात्र संशयः ॥६॥
एतदेव पटे भूर्जे कर्परे मृतकर्पटे ।
विलिख्य निखनेत् प्रेतवने सम्पुटमध्यगम् ॥७॥
तिलतुषराजीलवणैर्मिश्रीकृत्यैकविंशतिदिनानि ।
अष्टदलमुभयकालं जपतान्मन्त्रेण सिद्धसक्तेन ॥८॥
उच्चाटनमारणविद्वेषणगुरुमोहमुख्यकर्माणि ।
मन ईप्सितानि जनानां जायन्ते सद्गुरुप्रसादात् ॥९॥
ॐ उल्कामुखी अलामाक्षी विद्युज्जिह्वे ! महाबले ! ।
अमुकस्य ज्वरं सद्य आनयानय रौद्रयकः ॥१०॥
द्विर्दह द्विः पचोच्चार्य स्वाहान्ते च ततः क्षिपेत् ।
एकभक्तं ततः कृत्वा सिद्धयेऽष्टशतं जपेत् ॥११॥
कृष्णाष्टम्यां चतुर्दश्यां चिताङ्गारसुरा ददेत् ।
खरीमूत्रेण संकुथ्यारलुकद्रुमसम्पुटे ॥१२॥
विलिख्येदं महामन्त्रमेकान्ते सम्पुटं क्षिपेत् ।
अष्टोत्तरशतं चास्य प्रजपेत् प्रतिवासरम् ॥१३॥
यन्नाम लिखितं गर्भे जप्तं चोद्यमपूर्वकम् ।
तस्यानयेज्ज्वरं सद्यः सप्तास्यमपि तत्क्षणात् ॥१४॥
न तच्छक्रोऽपि संहर्तुं शक्नोति ज्वरमुत्थितम् ।
तदक्षराली नो यावत् क्षालिता पयसा किल ॥१५॥

ॐ अमृतोद्भवे ! देवि ! वर्षय वर्षयामृतम् ।
इत्यादिकेन मन्त्रेण वह्निस्तोभो विधीयते ॥१६॥
वंकारमध्यसंस्थानं मायाबीजेनवेष्टितम् ।
अमुकं देवि ! कुरुकुले ! कुरु स्वाहेति चोच्चरेत् ॥१७॥
दुष्टकुष्ठं क्षयं याति क्षीरनीरं पचायते।
पुष्पमालायते व्यालः कुन्ताग्रं कुसुमायते ॥१८॥
नीरपूरायते वह्निर्गरलं च सुधायते ।
माघामासायते ग्रीष्मो रविः शीतकरायते ॥१९॥
नित्यैकद्वित्रिसम्भूतज्वरो याति परिक्षयम् ।
कम्पस्वेदादिका दोषा गच्छन्ति प्रलयं क्षणात् ॥२०॥
आज्ञामात्रेण च क्षुद्रा वृश्चिकाद्यास्तनूभृतः ।
दूरे व्रजन्ति विद्याया एतस्याः सुप्रभावतः ॥२१॥
ॐ उच्चिष्ट पिशाचिनी देवी मही स्वाहेति कथ्यते ।
उच्चिष्ट पिशाचिनी नामविद्या सर्वज्ञभाषिता ॥२२॥
मृन्मयी पुत्रिकां कृत्वा जरत्कर्परसूर्पिकाम् ।
एकान्ते स्थापयेत् तां च पूजयेच्च यथाविधि ॥२३॥
त्रयोदश दिनान्युच्चैः पूजानैवेद्यपूर्वकम् ।
उच्छिष्टोच्छिष्टवेलायां जपेद् वारांस्त्रयोदश ॥२४॥
विकार्यैश्च प्रदातव्यं नैवेद्यं प्रतिवासरम् ।
चतुर्दशेऽह्नि सम्प्राप्ते मध्ये कृष्णघटं क्षिपेत् ॥२५॥
रक्तपुष्पैश्चसम्पूज्य पुत्रिकां तां च मृण्मयीम् ।
यावता तैलपूरेण ब्रुडेत् तावत्प्रमाणकम् ॥२६॥
कूपे सरसि नद्यां वा प्रवाहयेत् ततो घटम् ।
सिद्ध्यत्येषा ततो विद्या महासत्वैकशालिनाम् ॥२७॥
यद्येकदापि पुरुषाणां साधयतां स्खलितं भवेत् ।
षण्मासान्ते ततो विद्यां पुनरेतां प्रजापयेत् ॥२८॥
सिद्धा सती च जन्तूनां ददाति प्रतिवासरम् ।
द्रम्मान् त्रयोदशैवैतान् पुनरन्यस्य नो वदेत् ॥२९॥
परमागमसम्प्रोक्तं विश्वकम्पैकचेटकम् ।
द्रम्माष्टकपदं सद्यः साधयेद्धैर्यसंयुतः ॥३०॥

ॐचल चल प्रचल [२] विश्वं कम्पय [२] च ।
वेलात्रयं ठठ स्वाहा विश्वं कम्प कम्पेति च ॥३१॥
श्रीपर्ण्या पट्टके मन्त्रं लिखित्वैनं महामतिः ।
जातीपुष्पैस्ततो जापं पञ्चायुतप्रमाणकम् ॥३२॥
दशांशेन च होतव्यं त्रिमधुरेण संयुतम् ।
बदरप्रमाणगुटिकाभिर्महिषाक्ष च द्रुतम् ॥३३॥
कृष्णाष्टम्यां निशामध्ये नवम्यां भास्करोदये ।
अष्टोत्तरशतं रक्तपुष्पाणि प्रजपेत् ततः ॥३४॥
चेटकप्रतिमां कृत्वा चिताङ्गारेण मण्डले ।
हृदये साध्यनामं च लिखित्वा प्रजपेत् ततः ॥३५॥
निर्धूमाङ्गारसम्पूर्णं घटमाधाय होमयेत् ।
तान्येव पूर्वजप्तानि रक्तपुष्पाणि शक्तिमत् ॥३६॥
विद्वेषोच्चाटनं सद्यः कुरुते देहिनामयम् ।
कपिलाक्षश्चेटको ह्येवं जप्तः पठितसिद्धिदः ॥३७॥
ॐ नमो भगवत्यादौ शिवचक्रे च मालिनि ! ।
स्वाहापदं ततो देयं मन्त्रोऽयं लाभदो मतः ॥३८॥
श्वेतार्कस्य च मूलेन बिम्बं पार्श्वजिनेशितुः ।
विधाय च प्रतिष्ठाप्य मन्त्रेणानेन पूजयेत् ॥३९॥
यद् यद् विचिन्त्यते कार्यं मनुजैरैहलौकिकम् ।
तत् तत् सम्पद्यते सद्यो मन्त्रस्यास्य प्रभावतः ॥४०॥
राजद्वारे व्यवहारे विवादे धान्य संग्रहे ।
इत्येवमादिकार्येषु सर्वेष्वेनं विचिन्तयेत् ॥४१॥

इत्याचार्यश्रीभद्रगुप्तविरचितायामनुभवसिद्धमन्त्रद्वात्रिंशिकायां स्तम्भस्तोभादिकमन्त्राष्टकवर्णनो नाम तृतीयोऽधिकारः ॥३॥

अथातः सम्प्रवक्ष्यामि शुभाशुभादिसूचकम्।
मन्त्राष्टकमिदं रम्यं सद्यः प्रत्ययकारकम् ॥१॥
प्रणवं मायया युक्तं ल्वा ह्वा प लक्ष्मिकान्वितम्।
वायाशून्यावसानं च मन्त्रं मन्त्रविदो विदुः ॥२॥
सहस्रदशकं जातिपुष्पैः पूर्वं प्रजप्य तु।
पश्चाद् दशांशहोमेन सिद्धिरस्य विधीयते ॥३॥
कार्यकाले च सम्प्राप्ते विधायैकासनं तपः।
अष्टोत्तरशतं जप्त्वा स्वपेद् भूमौ व्रते स्थितः ॥४॥
लाभालाभं भविष्यन्तं शुभाशुभं जयाजयम्।
जीवितं मरणं चैव सुभिक्षं क्षेममेव च ॥५॥
वर्षावर्षं भयं भीतिवर्जितं सुखदासुखम्।
लगित्वा कर्णयोर्देवी सर्वमाख्याति निश्चितम् ॥६॥
ॐ ह्रीं ल्वाँ ह्वां प लक्ष्मीं कँली क्ष्वीं च कुश्च हं स च।
स्वाहाकारं ततो देयं मन्त्रोऽयं मुनिभाषितः ॥७॥
त्रयोदश सहस्राणि जातिपुष्पैश्च पूर्वतः।
जापोऽस्य हि विधातव्यो महासत्त्वैकशालिभिः ॥८॥
तदनूत्तरसेवायां दशांशहोमतस्तथा।
मन्त्रोऽयं साध्यतां नेयः संयमारामगामिभिः ॥९॥
विधिः पुनरयं चात्र मन्त्रस्यास्य प्रसाधने।
स्नात्वा विलिप्य सर्वाङ्गं सदृशश्वेतवस्त्रभृत् ॥१०॥
स्वयं चोपोषितो भूत्वा कन्याभोजनदायकः।
कुमारीगुरुपूज्यानां वस्त्रदानपुरःसरम् ॥११॥
श्रीमदम्बिकादेव्या बिम्बमादाय सद्भुवि।
स्नानपूजादिकं कृत्वा तस्या एव पुरःस्थितः ॥१२॥
विद्यामेतां महाभक्त्या संयताक्षो महामतिः।
दिनत्रयेण संसाध्य केवलीव भवेन्नरः ॥१३॥
यत् परैश्चिन्तितं कार्यं स्वयं वा चिन्तितं भवेत्।
नष्टं वा निहितं चापि तच्चाज्ञातस्य नामकम् ॥१४॥
अतीतं वर्तमानं वा भविष्यं वा यदर्थयेत्।
ज्ञातुं मन्त्री तकं सर्वं कथयत्येष कर्णयोः ॥१५॥

ॐ ह्रीं ल्वाह्वापलक्ष्मी व हंसः स्वाहा च विन्यसेत् ।
विश्वोपकारिणीं विद्यामेतां तत्त्वविदो विदुः ॥१६॥
सहस्रदशकं जातीपुष्पैः पूर्वं प्रजप्यते ।
हूयते तु दशांशेन पश्चात् विद्या प्रसिद्ध्यति ॥१७॥
आज्ञामात्रेण संसिद्धा करोत्येषा शरीरिणाम् ।
जङ्गमे स्थावरे चापि विषे वीर्यविनाशनम् ॥१८॥
एतद् विद्यात्रयं भव्यजीवोपकृतिहेतवे ।
मयागममहाम्भोधिमध्यादुद्धृत्य दर्शितम् ॥१९॥
मिथ्यादृशां न दातव्यं दातव्यं सुदृशां पुनः ।
दातव्यं योग्यजीवानामयोग्यानां न दापयेत् ॥२०॥
षान्तं हकारसंयुक्तं लकारं सान्तसंयुतम् ।
रेफस्वरकलाक्रान्तं विन्दूपेतं महाक्षरम् ॥२१॥
इदमेवाक्षरं लक्षवारं रक्तप्रसूनकैः ।
जाड्यं हरति जन्तूनां जप्तं सज्ज्ञानमुद्रया ॥२२॥
जप्तं करोति जन्तूनां वश्याकृष्टिमहोदयम् ।
इदमेवाक्षरं लक्षवारं रक्तप्रसूनकैः ॥२३॥
राजा गोयोषितः क्षुद्रजन्तवो यान्ति वश्यताम् ।
एतद्बीजप्रभावेन साधकानामसंशयम् ॥२४॥
विद्वद्वादिमहेभानां स्तम्भकुम्भविदारणे ।
एतदेव परं बीजं कण्ठीरवपदायते ॥२५॥
ॐ ह्रीं देवि ! नमस्तुभ्यमम्भोरुहनिभानने ! ।
नमन्नभश्चरीमूला(चूला)माणिक्यारुणितक्रमे ! ॥२६॥
लक्षत्रयप्रजापेन जातीपुष्पैः प्रसिद्ध्यति ।
सरस्वती महादेवी दिव्या कमलवासिनी ॥२७॥
गद्यपद्यमयी वाणी गङ्गानीरानुरागिणी ।
निर्याति सततं तस्माद् यस्य तुष्टा सरस्वती ॥२८॥
बन्धे बोधेऽपि तेषां त्वविश्रान्तं जृम्भते मतिः ।
येषामेषा महादेवी वरदीभूतमानसा ॥२९॥
प्रबन्धसेतुबन्धेन रामस्येव पताकिनी ।
तेषां प्रयाति सत्कीर्तिः पारं नीरपतेरपि ॥३०॥

ॐ वाग्बीजं च माया च कमलाकामवर्णकौ ।
सतत्त्वमादिवर्णाश्च नमोऽन्ताः सर्ववेदिनाम् ॥३१॥

एष लोके महामन्त्रः पञ्चानां परमेष्ठिनाम् ।
त्रिभुवनस्वामिनी नाम पुण्यलभ्या महात्मभिः ॥३२॥

लक्षजाप्यप्रदानेन दशांशेन च होमतः ।
सिद्धिं याति महामन्त्रो गुरुसत्त्वैकशालिनाम् ॥३३॥

मेघाकृष्टिं तटस्तम्भं प्रतिमाचालनं तथा ।
करोत्येष मनुष्याणां मनोवाञ्छितसिद्धदः ॥३४॥

राज्यवश्यं देववश्यं वश्यं च सुरयोषिताम् ।
वश्याकर्षणदक्षोऽयं सर्ववश्यविधायकः ॥३५॥

ॐ ऐं माययोपेतं पद्मा सतत्त्वकामदम् ।
ब्लूँ कलिकुण्डनाथाय सौं ह्रीं नम इत्यपि ॥३६॥

श्रीकलिकुण्डदण्डस्य मूलमन्त्रोऽयमुत्तमः ।
तपोभिरमलैर्लभ्योऽनुचीर्णैः पूर्वजन्मनि ॥३७॥

श्रीमत्पार्श्वजिनस्याग्रे यन्त्रमाधाय सद्विधि ।
जातीपुष्पैर्जपेल्लक्षं मन्त्रमेनं दशांशतः ॥३८॥

होमेन साधयेद् धीमान् सर्वकामफलप्रदम् ।
भक्तिभाजां विशेषेण शुभाशुभनिरूपकम् ॥३९॥

एकभुक्तोषितो भूत्वा यद्वा षण्मासकावधिः ।
अष्टोत्तरशतं जाप्यं कुर्यादस्य दिने दिने ॥४०॥

भवद्भूतभविष्याणि सुखदुःखानि देहिनाम् ।
सैकत्रावस्थितो वेत्ति योजनानां शतैरपि ॥४१॥

ब्रह्मचर्यभृतं पञ्च वर्षाणि ध्यायतः सतः ।
सद्ध्यानध्याननिष्ठस्य विकथारहितस्य च ॥४२॥

पलं पलं सुवर्णस्य ददात्येष्वनुवासरम् ।
व्यये तु तच्च कर्तव्यं न धर्तव्यं हि नान्तरे ॥४३॥

धृतेन हीयते सिद्धिः सिद्धिर्वर्धेत तद्व्ययात् ।
व्ययोऽत एव कर्त्तव्यः सत्पात्रादौ मनीषिभिः ॥४४॥

ॐ शून्यद्वयं षष्ठस्वराद्यं बिन्दुसंयुतम् ।
पुनः शून्यद्वयं ह्येकादशस्वरसमन्वितम् ॥४५॥

सप्तवर्णादिमं मन्त्रं षष्ठस्वरविराजितम् ।
विन्दूपेतं च ह्रीं हूँ फडिति वर्णविभूषितम् ॥४६॥
सर्वकर्मकरं मन्त्रं श्रीमत्पार्श्वजिनेशितुः ।
लक्षजापप्रदानेन साधयित्वा स्फुटं कुरु ॥४७॥
राजद्वारे व्यवहारे च सभायां देशनाविधौ ।
विद्वद्विवादवेलायां परविद्यान्तकर्मणि ॥४८॥
वश्ये विद्वेषणे मोहे पापोच्चाटनकर्मणि ।
तीर्थप्रभावनादौ च रुग्णानयनकर्मणि ॥४९॥
एष एव महामन्त्रो महाकल्याणकारणम् ।
सर्वदा सर्वकार्येषु स्मरणीयो मनीषिभिः ॥५०॥

इत्याचार्यश्रीभद्रगुप्तविरचितायामनुभवसिद्धमन्त्रद्वात्रिंशिकायां शुभाशुभादिनिरूपणमन्त्राष्टकवर्णनो नाम चतुर्थोऽधिकारः ।

———— ० ————

अथातः सम्प्रवक्ष्यामि गुरुशिष्यशुभाशुभम् ।
येन विज्ञातमात्रेण कल्याणं जायते द्वयोः ॥१॥
गुरूणा ज्ञाततत्त्वेन सकलागमवेदिना ।
शशाङ्कशान्तचित्तेन क्षमागुणविराजिना ॥२॥
पूर्वमात्महितं ज्ञात्वा सूरिणा गुणभूरिणा ।
शिष्यस्यापि हितं चिन्त्यं दातुकामेन किञ्चन ॥३॥
सिद्धं साध्यं च विज्ञेयं सुसिद्धं शत्रुरूपिणम् ।
मृत्युदं चैव निःशेषं मन्त्रं मन्त्रविदो विदुः ॥४॥
सिद्धं सारफलं ज्ञेयं दातव्यं भक्तिशालिने ।
साध्यं साध्यफलं चापि देयं तदपि सूरिणा ॥५॥
स्वल्पफलं सुसिद्धं सुमन्त्रो यच्छति देहिनाम् ।
सोऽपि कस्यापि दातव्यस्तद्धितस्य शरीरिणः ॥६॥
शत्रुरूपा च शत्रुस्तु मृत्युदो मृत्युनामकः ।
नैव कस्यापि दातव्यौ परलोकफलार्थिभिः ॥७॥
अ-इ-उ-ए-ओ पञ्चैतान् स्वरान् कोष्ठकपञ्चके ।
कादिकान् हान्तवर्णांश्च ङञणाक्षरवर्जितान् ॥८॥
वर्णक्रमेण संलिख्य मातृकाचक्रमुज्ज्वलम् ।
योग्यायोग्यं ततो विद्यान्मन्त्रशिष्य द्वयोरपि ॥९॥

सिद्धं वा यदि वा साध्यं मन्त्रं प्राप्य दुरासदम् ।
शिष्येणापि विधातव्या सद्गुरोर्भक्तिरीदृशी ॥१०॥
भोजनं वस्त्रदानं च पात्रदानं तथैव च ।
दानं सारसुवर्णस्य विधातव्यं मनीषिणा ॥११॥
पादप्रक्षालनं चैव पृष्ठिसंवाहनं तथा ।
स्वयमासनदानं च कर्तव्यं सद्गुरोरिह ॥१२॥
दक्षो जितेन्द्रियो धीमान् कोपानलजलोपमः ।
सत्यवादी विलोभश्च मायामदविवर्जितः ॥१३॥
मानत्यागी दयायुक्तः परनारीसहोदरः ।
जितेन्द्री गुरुभक्तश्च मन्त्रग्राही भवेन्नरः ॥१४॥
सुलग्ने शोभने वारे तिथिनक्षत्रचन्द्रके ।
मन्त्रादानं विधातव्यं गुरुपूजापुरःसरम् ॥१५॥
दीपोत्सवे व्यतीपाते चन्द्रसूर्योपरागयोः ।
विशेषेण विधातव्यं मन्त्रादानं यथाविधि ॥१६॥
श्रुतसागरमालोड्य महारत्नसमा मया ।
एते मन्त्राः समाख्याता योग्यानां हितकाम्यया ॥१७॥
परीक्षितगुणानां तु भक्तियुक्तशरीरिणाम् ।
श्रद्धावतां प्रदातव्याः सुखमिच्छुभिरात्मनः ॥१८॥
मायाहङ्कारयुक्तेषु श्रद्धाहीनदुरात्मसु ।
निर्गुणेषु च एतांस्तु मन्त्रान् दाता स्वदोषतः ॥१९॥
सोऽनन्तं लप्स्यते सद्यः संसारं दुःखरूपिणम् ।
अनन्तानि च दुःखानि शिष्यस्यापि प्रदास्यति ॥२०॥
इति ज्ञात्वा प्रयत्नेन एकान्ते गुरुभक्तितः ।
भक्तियुक्ताय शिष्याय दद्यान्मन्त्रमनुत्तरम् ॥२१॥
......द्वात्रिंशिकाया यः करिष्यति ।
सदभ्यस्तं सदा तस्य सर्वज्ञत्वं भविष्यति ॥२२॥
इह लोकेऽपि दुःखानि द्रारिद्र्याणि च दूरतः ।
क्षयं तस्य प्रयास्यन्ति योऽमुष्मै भक्तिबन्धुरः ॥२३॥
तस्मादेतां महामन्त्रद्वात्रिंशिकां महामतिः ।
अनाख्येयामयोग्यानां स्वयं नित्यं विभावयेत् ॥२४॥

इत्याचार्यश्रीभद्रगुप्तविरचितायामनुभवसिद्धमन्त्रसिद्धद्वात्रिंशिकायांगुरुशिष्य
शुभाशुमसंसूचको नाम पञ्चमोऽधिकारः समाप्तः ॥५॥



Goddess Shanti

" शान्तिदेवतां धवलवर्णां कमलासनां चतुर्भुजां वरदाक्षसूत्रयुक्तदक्षिणकरां कुण्डिका-
कमण्डलुवामकरां चेति । " निर्वाणकलिकायाम्

# परिशिष्ट ३१

## श्रीमानदेवसूरिसूत्रितः

# श्रीलघुशान्तिस्तवः।

शान्तिं शान्तिनिशान्तं शान्तं शान्ताशिवं नमस्कृत्य।
स्तोतुः शान्तिनिमित्तं मन्त्रपदैः शान्तये स्तौमि ॥१॥

---

## श्रीधर्मप्रमोदगणिविरचिता वृत्तिः।

नमः श्रीशान्तये।

श्रीमन्तं बोधिदं नत्वा सदर्थज्ञानसिद्धये। कुर्वे शान्तिस्तवस्याहं व्याख्यामेतां सुबोधदाम् ॥१॥
तत्र पूर्वमस्य स्तवस्योत्पत्तिः कथ्यते। सा चेयम्-
सूरयो मानदेवाख्या बृहद्गच्छे पुराऽभवन्। एकदाऽस्थुश्चतुर्मासीं नड्डूलनगरे च ते ॥१॥
तस्मिन्नेव हि समये शाकम्भरीपुरेऽजनि। श्रीसङ्घः शाकिनीमार्युपद्रवेणार्दितो भृशम् ॥२॥
महातिशयसूरीन्द्रमानदेवान्तिके तदा। सङ्घेनालोच्य मनुजाः प्रेषितास्तत्र ते गताः ॥३॥
विहिता तैः पुरः सूरेर्विज्ञप्तिर्विनयान्वितैः। सङ्घोपद्रवविच्छित्त्यै कृत्वाऽयं प्रेषितः स्तवः ॥४॥
पद्मासुजयाविजयापराजितादेवताप्तसान्निध्यैः। श्रीमानदेवगुरुभिर्जैनमतोत्साहकरणपरैः ॥५॥
पठनादेतस्य ततः स्वयमन्यसमीपतश्च वा श्रवणात्।
एतदभिमन्त्रिताम्भोबिन्दुवितरणाद् गता मारी ॥६॥
श्रीसङ्घस्य समुत्पन्ना शान्तिर्दुःखविनाशिनी। एतत्स्तवोत्पत्तिरियमेवं गुरुमुखाच्छ्रुता ॥७॥

उक्तं च तद्गच्छीयश्रीगुरूणामवदाते—

न मूलनाम नगरे कृतमेघकालैः शाकम्भरीपुरसमागतसङ्घवाचा।
शान्तिस्तवः प्रबलमारिभयापहारी यैर्निर्ममे सुविहितक्रममार्गदीपैः॥

अथ सूत्रं प्रारभ्यते-'शान्तिं शान्तिनिशान्तं.' व्याख्या-

ओमितिनिश्चितवचसे नमो नमो भगवतेऽर्हते पूजाम् ।
शान्तिजिनाय जयवते यशस्विने स्वामिने दमिनाम् ॥२॥
सकलातिशेषकमहा सम्पत्तिसमन्विताय शस्याय ।
त्रैलोक्यपूजिताय च नमो नमः शान्तिदेवाय ॥३॥

---

अहं शान्ति-षोडशजिनं नमस्कृत्य तमेव शान्तिजिनं प्रति स्तौमि । किमर्थम् ? दुःखदुरितोपसर्गनिवृत्तिहेतवे । कैः कृत्वा ? 'मन्त्रपदैः ' विभक्त्यान्तमन्त्राक्षरसमूहैः। कथम्भूतं शान्तिम् ? 'शान्तिनिशान्तम्' शान्तेः-दुःखाद्युपशमहेतुभूतायाः कषायोदयापगमनलक्षणाया वा भद्रस्य वा निशान्तं-गृहम् । 'धामागारं निशान्तम्' इत्यभिधानचिन्तामणौ प्रोक्तत्वात् । पुनः कथम्भूतम् ? 'शान्तम्' उपशमसहितम् , रागद्वेषरहितं जितेन्द्रियं वेत्यर्थः । 'दान्तः शान्तो जितेन्द्रियः' इत्यभिधानचिन्तामणिः । पुनः 'शान्ताशिवम्' शान्तानि-उपशमं नीतानि अशिवानि-अरिष्टानि येन, अथवा शान्तानि उपशमं प्राप्तानि अशिवानि यस्मात् स शान्ताशिवः तम् । यतो यस्मिन् गर्भे समुत्पन्ने पूर्वोत्पन्ना मारिः शान्ता शिवं च जातमतः शान्ताशिवः तम् । पुनः०? 'शान्तिनिमित्तम्' शान्तेः-दुःखदुरितोपसर्गादिनिवृत्तिहेतोः निमित्तं कारणम् । कस्य ? 'स्तोतुः' स्तुतिकर्तुर्नरस्येत्यर्थः ।

अत्र स्तवे महाकविप्रणीतत्वात् मन्त्राक्षरत्वाच्च पुनरुक्तादयो दोषा न चिन्तनीयाः । यदुक्तम्—

वक्ता हर्षभरादिभिराक्षिप्तमनाः स्तुवन् तथा निन्दन् ।
यत् पदमसकृद् ब्रूयात् तत् पुनरुक्तं न दोषाय ॥ १ ॥

'अर्ह पूजायाम्, योगत्वेऽपीति केचन' अर्हति-योग्यो भवतीत्यर्हन् तस्मै । कां प्रति ? 'पूजाम्' चतुःषष्टीन्द्रादिकृतार्चाम् । पुनः०? जयो-रागाद्यान्तरशत्रुत्वम् क्षयकरणोत्थः सोऽस्त्यस्येति जयवान् तस्मै सर्वत्राजेयाय । पुनः० कथम्भूताय ? यशः-प्रशस्ता श्लाघा अस्त्यस्येति यशस्वी तस्मै । पुनः० ? 'स्वामिने' नायकाय । केषाम् ? दमोऽस्त्येषां दमिनः तेषां दमयुक्तानां-योगीन्द्राणाम् ।

द्वितीयागाथात आरभ्य चतुर्दशीं गाथां यावत् षष्ठीं गाथां विहाय पृथक् पृथक् प्रतिगाथां मन्त्राक्षराणि सन्ति । ताः ओमित्यादि भगवत्यन्तास्त्रयोदश गाथा व्याख्याय प्रान्ते सम्पूर्णो मन्त्रो दर्शयिष्यते । च-पुनः शान्तिदेवाय नमो नमः पूर्वोक्तोक्तिः । कथम्भूताय शान्तिदेवाय ? सकलाः-सम्पूर्णाः अतिशेषकाः-अतिशयाश्चतुस्त्रिंशत् । चत्वारः सहजाः, एकादश कर्मक्षयजाः, एकोनविंशतिर्देवकृताः । अतिशयग्रहणात् पञ्चत्रिंशद् वचनातिशया अपि । तल्लक्षणैव महती सम्पत्तिः-ऋद्धिस्तया समन्वितो युक्तः तस्मै

सर्वामरसुसमूहस्वामिकसम्पूजिताय न जिताय।
भुवनजनपालनोद्यततमाय सततं नमस्तस्मै ॥४॥
सर्वदुरितौघनाशनकराय सर्वाशिवप्रशमनाय।
दुष्टग्रहभूतपिशाचशाकिनीनां प्रमथनाय ॥५॥ युग्मम् ॥
यस्येतिनाममन्त्रप्रधानवाक्योपयोगकृततोषा।
विजया कुरुते जनहितमिति च नुता ! नमत तं शान्तिम् ॥६॥

---

पुनः०? 'शस्याय' प्रशंसायोग्याय। पुनः० कथं० ? त्रयाणां लोकानां समाहारात्रिलोकी-जगत्त्रयी तत्र भवाः त्रैलोक्याः-सुरमनुजदनुजाः। अथवा त्रिलोक्येव त्रैलोक्यं तैस्तेन वा पूजितः, तस्मै ॥३॥

तस्मै शान्तये सततं-सदा नमः नमस्कारो भवतु। कथम्भूताय तस्मै ? सर्वेषां-समस्तानां अमराणां-देवानां सह समूहैर्वर्तते ससमूहाः-समूहसहिताः ये स्वामिन एव स्वामिकाः, स्वार्थे कः। अर्थाच्छक्रादयश्चतुःषष्टिरिन्द्रास्तैः सम्-सम्यक् प्रकारेण त्रिकरणशुद्ध्या पूजितः तस्मै। केषुचिदादर्शेषु 'सर्वामरसुसमूह' इति पाठो दृश्यते, तत्रैवं व्याख्येयम्—अमराणां सुसमूहाः शोभनसमुदायाः, सर्वे येऽमरसुसमूहाः सर्वामरसुसमूहाः तेषां स्वामिकास्तैः सम्पूजितस्तस्मै। पुनः० कथ०? 'न जिताय' कैरपि न परि०भूताय। पुनः०? भुवनस्य जनाः भुवनजनास्तेषां पालने अतिशयेन उद्यत-उद्यततमस्तस्मै ॥४॥

पुनः कथ०? सर्वाणि सर्वेषां वा यानि दुरितानि-पापानि दुष्कृतं दुरितं पापम् इत्यभिधानचिन्तामणिः। तेषां ओघः-समूहस्तस्य नाशनं-विनाशनं कुरुत इति सर्वदुरितौघनाशनकरस्तस्मै। पुनः० ? सर्वाणि सर्वेषां वा यानि अशिवानि-अरिष्टानि प्रशमयति-निवर्तयति सर्वाशिवप्रशमनस्तस्मै। पुनः कथ०? प्रमथ्नातीतिप्रमथनस्तस्मै। कासाम् ? दुष्टाः-क्रूराश्च अथवा गोचरेऽशुभफलप्रदाश्च ते ग्रहाश्च भूताश्च पिशाचाश्च शाकिन्यश्च दुष्टग्रहभूतपिशाचशाकिन्यः, तासां पीडानिवारकत्वात् भगवच्छ्रीशान्तिनाम्नि स्मृते आसां पीडा विलीयन्त इति भावः। चतुर्षु पदेषु भूतपिशाचौ द्वितीयप्रथमनिकायान्तर्वर्तिनौ व्यन्तरविशेषौ ज्ञेयौ ॥५॥

भो जनता ! जनानां समूहः तं शान्तिं-षोडशं जिनं नमत-प्रह्वीभवत। यत्तदोर्नित्याभिसम्बन्धात् तमिति कम् ? यस्य श्रीशान्तिनाथस्य इत्यमुना पूर्वोक्तप्रकारेण नामैव मन्त्रः तेन प्रधानं यद् वाक्यं-वचः तस्य उपयोग-उच्चारणरूपः स्मरणरूपो वा तेन कृतः तोषो-मनसि सन्तोषो यया सा नाममन्त्रप्रधानवाक्योपयोगकृततोषा ईदृशी सती विजयते शत्रून्, विजयते वा शत्रूणामस्या इति विजया-विजया नाम्नी देवी, इति-वक्ष्यमाणप्रकारेण। जनानां हितं जनहितं कुरुते 'इति च नुता नमत तं शान्तिम्'

भवतु नमस्ते भगवति ! विजये ! सुजये ! परापरैरजिते ! ।
अपराजिते ! जगत्यां जयतीति जयावहे ! भवति ! ॥७॥
सर्वस्यापि च संघस्य भद्रकल्याणमङ्गलप्रददे ! ।
साधूनां च सदा शिवसुतुष्टिपुष्टिप्रदे ! जीयाः ॥८॥

---

इत्यपि कुत्रचित् पाठो दृश्यते तत्र नमत तं इति पदद्वयोतः कर्तृपदं ग्राह्यम् । भो भव्याः ! शेषं पूर्ववत् । इति नुता अग्रे वक्ष्यमाणप्रकारेण स्तुता ॥६॥

भगोऽस्त्यास्या भगवती तस्यामन्त्रणे हे भगवति ! हे समग्रैश्वर्यादियुक्ते ! । विजयोऽस्त्स्या विजया तस्या आमन्त्रणे हे विजये !—हे अन्येषां निन्दाकारिणां पराभवरहिते !। सुष्ठु-शोभनो जयोऽस्त्यस्याः सुजया तस्या आमन्त्रणे । 'विजये ! सुजये !' इत्यत्राभ्रादित्वाद् अप्रत्यये हे विजयवति ! हे सुजयवति ! 'हे अजिते !' न जिता अजिता तस्या आमन्त्रणे । कैः ? पराः—प्रधाना अपरे—अन्यसुराः, अथवा परे-अन्ये, अपरा असहमानाः शत्रवस्तैः हेऽपराजिते !-न पराजिता-भग्ना कस्यापि पुरत इत्यपराजिता तस्या आमन्त्रणम् 'जितो भग्नः पराजितः' इत्यभिधानचिन्तामणिः । क्व ? जगत्याम्—पृथिव्याम् । अथवा जगत्यां—लोके त्रैलोक्यामिति पूर्वोक्तप्रकारवर्णिते । अपि हे जयावहे ! जयमावहति समन्तात् प्रापयत्यान् जयकारित्वात् जयावहा तस्या आमन्त्रणे । हे विजये ! भवति ! । त्वम् । भवच्छब्दस्त्रीलिङ्गसम्बोधनरूपम् । या ईदृशी 'जयति' सर्वोत्कर्षेण वर्तते । तस्मै 'ते' तुभ्यम् नमस्कारो भवत्वित्यर्थः ॥

इत्यनेन चतस्रोऽपि देव्यो विजया जया अजिता अपराजिताख्या दर्शिताः ॥७॥

हे 'भद्रकल्याणमङ्गलप्रददे' ! भद्राणि च कल्याणानि च मङ्गलानि च भद्रकल्याणमङ्गलानि-सुखक्षेमपापोपशान्तिरूपाणि । अथवा—भद्रं-श्रेष्ठम्, कल्यं-नीरुक् तं अणन्ति आह्वयन्ति भद्रकल्याणानि एवं विधानि यानि मङ्गलानि श्रेयांसि । यदनेकार्थकोषः—

'भद्रं तु मङ्गले । मुस्तकश्रेष्ठयोः साधौ काञ्चने करणान्तरे ।'

तानि प्रकर्षेण ददते या सा भद्रकल्याणमङ्गलप्रददा । तस्या आमन्त्रणम् । 'दद दाने' इति धातोः प्रयोगः । कस्य ? 'सर्वस्यापि च सङ्घस्य' समस्तस्य चतुर्विधस्यापि सङ्घस्य । चकारात् ध्यातुरेस सङ्घस्य । हे 'सदा शिवतुष्टिपुष्टिप्रदे !' सदा-सर्वदा शिवं च तुष्टिश्च पुष्टिश्च शिवतुष्टिपुष्टयः निरुपद्रवता चित्तसन्तोष धर्मार्थकामवृद्धयः ताः प्रकर्षेण ददातीति शिवतुष्टिपुष्टिप्रदा । अथवा न शिवतुष्टिपुष्टयः अशिवतुष्टिपुष्टयः ताः प्रद्यति-खण्डयति या सा अशिवतुष्टिपुष्टिप्रदा । तस्याः आमन्त्रणम् । केषाम् ? उत्तमक्षमादिभिः तपोविशेषैर्भावितात्मानः साध्नोति, अथवा सम्यग्दर्शनादिभिः साधयन्ति

भव्यानां कृतसिद्धे ! निर्वृतिनिर्वाणजननि ! सत्त्वानाम् ।
अभयप्रदाननिरते ! नमोऽस्तु स्वस्तिप्रदे ! तुभ्यम् ॥९॥
भक्तानां जन्तूनां शुभावहे ! नित्यमुद्यते ! देवि ! ।
सम्यग्दृष्टीनां धृतिरतिमतिबुद्धिप्रदानाय ॥१०॥
जिनशासननिरतानां शान्तिनतानां च जगति जनतानाम् ।
श्रीसम्पत्कीर्तियशो वर्धनि ! जयदेवि ! विजयस्व ॥११॥ युग्मम् ।

---

मोक्षमार्गमिति साधवः-मुनयः, उभयलोकफलं साधयन्ति वा साधवो, धर्मशीला तेषां चकारात् अन्येषां एवंविधपूर्वोक्तवर्णने हे विजये ! त्वं 'जीयाः' जययुक्ता भूयाः॥८॥

कृता सिद्धिः-सर्वकार्येषु विघ्नक्षयलक्षणा यया सा तस्याः आमन्त्रणम् । हे 'निर्वृति निर्वाण जननि !' निर्वृत्तिः-निर्वाणं-सांसारिकं सुखं यद् हेमचन्द्रः-'स्यादथो शर्म निर्वृतः'

निर्वाण-आत्यन्तिकं सुखंमोक्षः ततो द्वन्द्वः, निर्वृतिनिर्वाणे जनयति-उत्पादयति । अथवा उत्पादनहेतोर्निर्वृतिनिर्वाणयोर्जननी-माता तस्याः आमन्त्रणम् । 'माताम्बा जननी' इत्यभिधानचिन्तामणिः । केषाम् ? भव्यानाम्-आसन्नसिद्धिगतीनाम् । हे 'अभयप्रदाननिरते !' अभयस्य-निर्भयस्य प्रदाने-वितरणे निरता-सावधाना तस्याः आमन्त्रणम् । केषाम् ? सत्वानाम्-प्राणिनाम् । हे 'स्वस्तिप्रदे !' स्वस्ति-अविनाशम् प्रदत्ते या सा तस्या आमन्त्रणम् ! तुभ्यं नमोऽस्तु ॥९॥

अत्र गाथायुग्मेन सम्बन्धः ।

हे शुभावहे ! शुभं-कल्याणं आवहति-समन्तात् प्रापयति या सा तस्या आमन्त्रणम् । केषाम् ? 'भक्तानां जन्तूनाम्' भक्तिमतां प्राणिनाम्, हे देवि ! हे विजये ! हे नित्यमुद्यते !-हे सदा सावधाने ! किमर्थम् ? 'धृतिरतिमतिबुद्धिप्रदानाय' धृतिश्च रतिश्च मतिश्च बुद्धिश्च धृतिरतिमतिबुद्धयः-सन्तोष-चित्ताभिरता शास्त्रोत्था तात्कालिक्यः तासां प्रति दर्शनीया ।

"मतिः अप्राप्तविषया बुद्धिः साम्प्रतदर्शिनी । अतीतार्था स्मृतिर्ज्ञेया प्रज्ञा कालत्रयात्मिका ॥"

इत्युक्तेः । समासः पूर्ववदेवेति । केषाम् ? सम्यक्-सत्या दृष्टिः-दर्शनम्, येषां ते, तेषाम् ॥१०॥

हे 'श्रीसम्पत्कीर्तियशोवर्धनि !' श्रीः-शोभा लक्ष्मीर्वा, सम्पत् नवधा ऋद्धिः, कीर्तिः-श्लाघा ख्यातिर्वा, यशः सर्वदिग्गामिप्रसिद्धिविशेषः, ततो द्वन्द्वः । तानि वर्द्धयति तस्याः आमन्त्रणम्' क्व ? 'जगति' लोके । केषाम् ? जन्तूनाम् । कथम्भूतानाम् ? जिनशासने ये निरता-निश्चला भक्तिमत्वात् तेषाम् । पुनः केषाम् ? शान्तिं नताः शान्तिनताः तेषां चकारात् सेवास्वसेवाकारिणाम् । क्वचित् 'जनतानाम्' इति पाठः ।

सलिलानलविषविषधरदुष्टग्रहराजरोगरणभयतः ।
राक्षसरिपुगणमारीचौरेतिश्वापदादिभ्यः ॥१२॥
अथ रक्ष रक्ष सुशिवं कुरु कुरु शान्तिं च कुरु कुरु सदेति ।
तुष्टिं कुरु कुरु पुष्टिं कुरु कुरु स्वस्तिं च कुरु कुरु त्वम् ॥१३॥ युग्मम् ॥
भगवति ! गुणवति ! शिवशान्तितुष्टिपुष्टिस्वस्तीह कुरु कुरु जनानाम् ।
ओ मिति नमो नमो ह्राँ ह्रीं ह्रूँ ह्रः यः क्षः ह्रीं फट् फट् स्वाहा ॥१४॥

---

जयेन युक्ता देवी जयदेवी तस्या आमन्त्रणम् । त्वं विजयस्व-सर्वोत्कर्षेण इत्यर्थः । जया सूचितेत्यनेन ॥११॥

अत्रापि गाथायुग्मेन सम्बन्धः ।

अथ इत्यानन्तर्ये । त्वं रक्ष रक्ष-पाहि पाहि, मन्त्राक्षरत्वाद् द्विरुच्चारोऽत्र । कस्मात् ?, केभ्यः ? सलिलं-जलम्, समुद्रादि, अनलः-अर्थाद् उत्पातदावानलादिरूपो वह्निः, विषं-जङ्गमस्थावरभेदाद् द्विधा, विषधरः-सर्पः, दुष्टा ग्रहगोचरेऽशुभाः ग्रहाः, रोगेषु राजा राजरोगः-क्षयरोगः, राजदन्तादिवत् अमाद्यन्तस्य परत्वम् । अथवा राजानोऽन्यायिनः, रोगाः कुष्ठज्वरादयः, रणः-सङ्ग्रामः ततो द्वन्द्वः तेषां भयम्, तस्माद् । राक्षसाः-व्यन्तरविशेषाः, रिपुगणाः-वैरिसमूहाः, मारी-मरकोपद्रवः ।

अत्र मात्राहानिभयान्मारीशब्द ईकारान्तः, न त्विकारान्तः ।

'मारी चण्ड्यां जनक्षये' इति हैमानेकार्थ (श्लो० ४५३) पाठात् । चौराः-तस्कराः, 'इङ् गतौ' इयन्ते-आभिः अयनानि वा 'स्त्रियां क्तिः' ( अ० ५ पा० ३ सू०९१ ) इति ईतयः । ताः सप्तविधाः अतिवृष्ट्यादयः । श्वापदाः-व्याघ्रसिंहगन्धगजादयः, आदिशब्दात् भूतवैतालशाकिन्यादयः ततो द्वन्द्वः तेभ्यः ॥१२॥

सुशिवं-शोभनं कल्याणम् पुण्यसम्बन्धि, च पुनः, स्वस्ति-सङ्घाय अविनाशित्वम् चिरस्थायित्वम्, कुरु कुरु इति भावः । प्रयत्नोच्चारमन्तरेण क्वचित् संयोगपूर्वस्य गुरोरपि लघुत्वम् । तथा 'कुरु कुरु स्वस्ति' इत्यत्रापि मात्रा गणभङ्गप्रसङ्गभयात्, यदुक्तम्-तव यार्पह्रियो मम ह्रीरभूत् ( ) । इत्यादि दर्शनात् । अन्ये त्वाहुः-'कुरु कुरु स्वस्तिं' मौले पाठे अव्ययं सम्भाव्यते । अत्र तु इकारान्तः शब्द एव । अन्यत्रापि 'स्वस्तये' इति पददर्शनात् ॥१३॥

हे भगवति ! हे गुणवति ! गुणाः औदार्यधैर्यगाम्भीर्यादयः सन्त्यस्या इति गुणवती तस्याः आमन्त्रणम् । इह जगति सङ्घे वा जनानां-लोकानां शिवशान्तितुष्टिपुष्टिस्वस्ति कुरु कुरु । पञ्चानामपि पदानां पूर्वोक्तोऽर्थो वाच्यः, ततो द्वन्द्वः । स्वस्ती तीङन्तः शब्दोऽत्र ।

एवं यन्नामाक्षरपुरस्सरं संस्तुता जया देवी ।
कुरुते शान्तिं नमतां नमो नमः शान्तये तस्मै ॥१५॥
इति पूर्वसूरिदर्शितमन्त्रपदविदर्भितः स्तवः शान्तेः ।
सलिलादिभयविनाशी शान्त्यादिकरश्च भक्तिमताम् ॥१६॥

---

इदानीं मन्त्राक्षरैः श्रीजयादेवीं स्तवीत्याचार्य श्रीमानदेवः ।

ओमिति परमज्योतिःस्वरूपिण्यै तुभ्यं नमो नमः

तथा 'ॐ नमो ह्रां ह्रीं ह्रूं ह्रः यः क्षः ह्रीं फट् फट् स्वाहा' इति मन्त्रस्वरूपिण्यै तुभ्यं नमः ॥ १४ ॥

अथ विसङ्कलितानि मन्त्रपदान्येकीकृत्य लिख्यते सम्पूर्णो मन्त्रः—

"ॐ नमो भगवते अर्हते शान्तिनाथस्वामिने ( १ )

सकलातिशेषकमहासम्पत्तिसमन्विताय त्रैलोक्यपूजिताय नमो नमः शान्ति देवाय (२)

सर्वामरसुसमूहस्वामिकसम्पूजिताय भुवनजनपालनोद्यताय ( ३ ) सर्वदुरितविनाशनाय सर्वाशिवप्रशमनाय दुष्टग्रहभूतपिशाचशाकिनीनां प्रमथनाय ( ४ )

नमो भगवति ! जये ! विजये ! अजिते ! जयन्ति ! जयावहे ! ( ५ ) सर्वसङ्घस्य भद्रकल्याणमङ्गलप्रददे ! साधूनां श्रीशान्तितुष्टिपुष्टिदे ! स्वस्तिदे ! ( ६ )

भव्यानां सिद्धिवृद्धिनिर्वृतिनिर्वाणजननि ! सत्त्वानामभयप्रदाननिरते ! ( ७ )

भक्तानां शुभावहे सम्यग्दृष्टीनां धृतिरतिमतिबुद्धिप्रदानोद्यते ! जिनशासनरतानां श्रीसंपत्कीर्तियशोवर्द्धनि ! ( ९ )

रोगजलज्वलनविषविषधरदुष्टज्वरव्यन्तरराक्षसरिपुमारिचौरेतिश्वापदोपसर्गादिभयेभ्यः रक्ष रक्ष शिवं कुरु कुरु शान्तिं कुरु कुरु तुष्टिं कुरु कुरु पुष्टिं कुरु कुरु ( ११ )

ॐ नमो नमः ह्रां ह्रीं ह्रूं ह्रः यः क्षः यः क्षः ह्रीं फट् स्वाहा ॥"

अस्य मन्त्रस्य जापात् तथा अन्याभ्यर्णाकर्णनात् सर्वाण्यरिष्टानि सर्वा विपद् विलीयन्ते, सर्वाः सम्पदः सम्पद्यन्ते ।

तस्मै शान्तये षोडशार्हते नमो नमः, तस्मै कस्मै ? 'एवं' अमुना पूर्वोक्तप्रकारेण यस्य नामाक्षरपुरस्सरं–शान्तिनाथनामोच्चारणपूर्वकं यथा स्यात् तथा, 'संस्तुता' सम्यक् प्रकारेण गुणवर्णनमाहात्म्यादिना कीर्तिता सती जया देवी 'नमतां' प्रह्वीभवतां मनुष्याणां शान्तिं कुरुते ॥१५॥

अत्र गाथायुग्मेन सम्बन्धः ।

शान्तेर्जिनस्य स्तवः–स्तोत्रं 'भक्तिमतां' भक्तियुक्तानां जीवानां 'सलिलादिभयविनाशी' सलिलादीनां–समुद्रादीनां भयस्य–बुडनादेर्विनाशी । आदिशब्दात् सलिलानल-

**यश्चैनं पठति सदा शृणोति भावयति वा यथायोगम् ।**
**स हि शान्तिपदं यायात् सूरिः श्रीमानदेवश्च ॥ १७॥ युग्मम् ॥**

---

विषविषधरेतिगाथोक्तानां पदानां भयस्यापि । च पुनः 'शान्त्यादिकरो भवतु शान्तिग्रहणात् शिव-स्वस्ति-तुष्टि-पुष्टीनामपि ग्रहणम् । आदिग्रहणात् ऋद्धिसौभाग्यादीनां ग्रहणम् ।

पूर्वं बहुव्रीहिः ततः तत्पुरुषः । कथम्भूतः स्तवः ? 'इति' अमुना प्रकारेण 'पूर्वसूरिभिः'-पूर्वाचार्यैः यानि दर्शितानि मन्त्रपदानि-मन्त्राक्षराणि तैः विदर्भितः-गुम्फितः रचित इत्यर्थः ॥१६॥

पुनर्यो नर एनं स्तवं 'सदा पठति' उद्घोषणेन 'शृणोति' अन्यसकाशाद्वा, अथवा 'भावयति' चित्तेनैव ध्यायति, योगं अनतिक्रम्य योगं प्रति वा शक्तिमनतिक्रम्य कार्यमुद्दिश्य स नरः हि-निश्चितम् पदम्—स्थानं दुःखादि निवृत्तित्वम् । अथवा सर्वोपद्रवदुरिताद्यपगमैः अर्थात् मुक्तिः तल्लक्षणं पदं यायात्-लभेत, च-पुनः श्रीमानदेवसूरिरपि इत्यनेन स्तवविदर्भकेण निजं नाम दर्शितम् । 'शिवशान्तिपदं यायात्' केचिद् एवं पठन्ति-तत्र शिवशान्त्योः पूर्वोक्तार्थयोः पदं यायात् इत्यर्थः ॥१७॥




Fig. 37




Fig. 38

Copyright



Fig. 52 to 57

Tantric Mudras
(तांत्रिक मुद्राओ)